मोक्षः, आत्यन्तिकदुःख[1]निवृत्तिलक्षणः, तयोर्द्वारमुपायम् प्रधानकारणम्। एतेन सकलपुरुषार्थहेतुत्वमुक्तं, [2]सुखावाप्तिदुःखहानिव्यतिरिक्तस्य पुरुषार्थस्याभावात्। [3]अत एव त्रैलोक्यशरणं त्रैलोक्यरक्षितारम्। न चोक्तजगत्स्थितिकारणत्वेन पौनरुक्त्यं, जगच्छब्देनोत्पत्तिमतामेवाभिधानात्। अत्र तु त्रैलोक्यशब्दो भुवनत्रयवर्तिचेतनाचेतनसमूहवाची, लोकशब्दस्य भुवनजनयोरभिधायकत्वात्। तथा चामरः, "लोकस्तु भुवने जने"–इति। त्रैलोक्यमिति स्वार्थे ष्यञ्[4], चातुर्वर्ण्यवत्। हरादिपर्यायान् परित्यज्य शिवपदनिर्देशेन ग्रन्थस्य तदध्येतॄणां च सकलकल्याणमभिलषन् शिवपदं निबद्धवान्; शिवकारित्वेनैव महेश्वरस्य शिवपदाभिधानमिति ॥ १ ॥

भा० टी०–जगत् की उत्पत्ति (पैदाइश) स्थिति (रक्षा) और संहार (नाश–प्रलय) के प्रधान कारण, स्वर्ग (सुख) अपवर्ग (मोक्ष) के द्वार–(प्रधान उपाय), तथा तीनों लोक (स्वर्ग मर्त्य, पाताल) के रक्षक शिवजी को प्रणाम कर ॥ १ ॥

अभिधेय–सम्बन्ध–प्रयोजनोपदेशमन्तरेण + प्रेक्षावतां न प्रवृत्तिः स्यात्; इत्यतस्तदभिधानार्थमाह–

**नानामुनीनां वचनैरिदानीं समासतः सद्भिषजां नियोगात्।**
**सोपद्रवारिष्ट-निदान-लिङ्गो निबध्यते रोगविनिश्चयोऽयम् ॥२॥**

म०–नानेत्यादि। रोगाणां विशेषेण[5]वातजत्वादिसाध्यासाध्यात्वादिरूपेण निश्चयो ज्ञानं येन स रोगविनिश्चयो ग्रन्थो निबध्यतेऽभिधीयते, 'अस्माभिः' इति शेषः। तस्य विशेषणं–सोपद्रवेत्यादि।–सह उपद्रवादिभिर्वर्तते यः स तथा। एतेन[6] विशेषणद्वारेण उपद्रवारिष्ट–निदान–लिङ्ग–स्वरूपमभिधेयमुक्तं भवति, [7]एतद्व्यतिरिक्तस्याभिधेस्याभावात्। तथा [8]सति उपद्रवादिभिरभिधेयैः सह ग्रन्थस्य वाच्य–वाचकलक्षणः

---

१ दुःखं त्रिविधम्–आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्च। तत्राध्यात्मिकं द्विविधम्–शारीरं, मानसञ्च। शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम्। मानसं–कामक्रोधलोभभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनम्। सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्। बाह्योपायसाध्यं दुःखं द्वेधा–आधिभौतिकम्–आधिदैविकञ्च। तत्राधिभौतिकं–मानुषपशुपक्षिमृगसरीसृपस्थावरनिमित्तम्। आधिदैविकञ्च–यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम्। इति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रः।

२ सुखमिति दुःखासंपृक्तम्। यदुक्तं–यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्चतत्सुखस्वःपदास्पदम्।

३ अतएव स्वर्गापवर्गयोः प्रधानहेतुत्वादेव।

४ "चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्" इतिवार्तिके ष्यञ्।

५ 'वातादिजत्व' इति पाठान्तरम्। ६ 'एतेनास्य विशेषणद्वारा' इति पाठान्तरम्।

७ 'एतद्व्यतिरेकेणास्य ग्रन्थस्य' इति पाठान्तरम्, 'एतद्व्यतिरेकेणाभिधेयाभावात्' इत्यपि पाठान्तरम्।

८ 'सति' इति पाठः कुत्रचित्पुस्तके न विद्यते। + प्रेक्षावतां विवेकशालिनाम्।

सम्बन्धोऽप्यभिहितः । तत्र, उपद्रवो रोगारम्भकदोषप्रकोपजन्योऽन्यविकारः, उक्तं च चरके–"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमाविरोधी च स उपद्रव उच्यते"-इति । [1]नियतमरणख्यापकं लिङ्गमरिष्टं; निदानम् रोगोत्पादको हेतुः; लिंगं-रोगख्यापको हेतुः । तेन 'लिङ्ग्यन्ते ज्ञायन्ते व्याधयोऽनेन' इति व्युत्पत्त्या पूर्वरूप रूपोपशयसम्प्राप्तयोऽभिधीयन्ते । यद्यपि निदानमपि रोगविशेषं बोधयति, तथा-ऽप्युत्पत्ति–ज्ञप्ति-हेतुत्वेन कारणद्वैविध्यप्रतिपादनार्थं तस्य पृथगभिधानम् । एषां चोपद्रवादीनां विस्तराभिधानं यथावसरं करिष्यते । ननु, रोगनिदानादितत्त्वमति सूक्ष्मत्वेनासर्वज्ञस्य न ज्ञानविषयः, तत्कथं तदुपदेशे प्रेक्षावतां प्रवृत्तिरित्यत आह–**नानामुनीनामित्यादि** । एतेन ग्रन्थस्य प्रामाण्यं प्रवृत्त्यङ्गत्वमुक्तं भवति; मुनयो हि तपोयोगर्धिबलात्त्रैकालिकानिखिलज्ञानशालिनः पुरुषातिशया उच्यन्ते । ननु, यद्येवं भूतः कस्यचिद् ग्रन्थोऽन्योऽप्यास्ते तेनैव व्यवहारसिद्धेः कृतकार्यत्वेनास्य निष्प्रयो-जनता स्यादित्यत आह–**इदानीमित्यादि** ।–इदानीमस्माभिरेव प्राथम्येन[2] नाना मुनीनां वचनैरेवंविधो निबन्धः क्रियते । समासत इति संक्षेपतः । एतेनाल्पबुद्धीना-मतिविस्तरत्वेनाप्रवृत्त्यङ्गतादोषः परिहृतो भवति । ननु, कृतेऽपि ग्रन्थेऽनुपादेयपुरुष प्रणीतत्वेन न कश्चिद्भिषक् प्रवर्तिष्यत इति ग्रन्थस्य वैयर्थ्यं स्यादित्यत आह–**सद्भिषजां नियोगादिति** । नियोगो नियोजनम् " अस्मदुपकाराय ग्रन्थः क्रियताम् " इत्येवं प्रार्थनेत्यर्थः, । अथवा नियोग आज्ञा, एतेनात्मनःसविनयत्वमुक्तं भवतीत्यर्थः ॥ २ ॥

भा० टी०—अनेक मुनियों के ( चरक सुश्रुतादि ) वचनों के द्वारा सद्वैद्यों की आज्ञा से अब मैं रोग विनिश्चय नामक ग्रन्थ को, जिसमें हर एक रोगोंका उपद्रव–अरिष्ट–निदान और लक्षण वर्णित रहेगा, बनाता हूँ ॥ २ ॥

ग्रन्थस्योत्कृष्टत्वम् ।

ननु नानामुनिवचनबाहुल्यादल्पमेधसां कथं प्रवृत्तिरित्यत आह–

**नानातन्त्रविहीनानां भिषजामल्पमेधसाम् ।**
**सुखं विज्ञातुमातङ्कमयमेव भविष्यति ॥ ३ ॥**

---

१ नियतेत्याद्यरिष्टलक्षणन्तु प्रायिकं यतः प्रतिबन्धकाभावेऽरिष्टे समुत्पन्ने मरणनित्यत्वं यदुक्तं चरके ध्रुवन्त्वरिष्टे मरणं ब्राह्मणैस्तत्किलामलैः । रसायनतपोजप्यतत्परैर्वा निवार्यताम् ॥ योगरत्नाकरेऽप्यस्ति यावदुच्छ्वसिति प्राणी तावत्कार्या प्रतिक्रिया । कदाचिद् दैवयोगेन दृष्टारिष्टोऽपि जीवति ॥ पुरुषातिशयाः पुरुषश्रेष्ठाः । निबन्धो ग्रन्थसन्दर्भः । अनुपादेयपुरुष-प्रणीतत्त्वेन अमान्यमानवनिर्मितत्त्वेन ।

२ 'प्रथमम्' इति पाठान्तरम् ।

म०—नानातन्त्रेत्यादि । सुखं यथा भवति तथा आतङ्कं=रोगं विज्ञातुमयमेव ग्रन्थो भविष्यति, "कारणम्" इति शेषः । एनेन रोगज्ञानं प्रयोजनमित्युक्तं फलं चास्य [1]चिकित्सितमिति मन्तव्यम् । यदुक्तं चरके—"रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् । ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्"—इति ( च. सू. स्था. अ. २० ) । ननु, नानामुनीनां वचनैरेव रोगज्ञानं भविष्यति, किमनेन तदुपजीविना ग्रन्थेनेत्यत आह—अल्पमेधसामिति । [2]अल्पमेधसाम्=अल्पबुद्धीनाम् । महाबुद्धयो हि अतिविस्तर–दुरधिगम–नानातन्त्राध्ययनक्षमा भवन्ति न त्वल्पबुद्धय इति । महाधियामप्यालस्यानासादितदुरुपपादाशेषसंहितानामयमेव रोगज्ञानाय भविष्यतीत्याह—नानातन्त्रेत्यादि ॥ ३ ॥

भा०टी०—मन्द बुद्धिवाले,अनेक भारी ग्रन्थों के देखने में असमर्थ वैद्यलोग इसी ग्रन्थ के द्वारा सुख पूर्वक—बात की बात में, रोग पहचान सकेंगे । बुद्धिमान् लोग ही भारी ग्रन्थों को देख सकते और समझ सकते हैं । मन्द बुद्धिवाले नहीं । हां बुद्धिमान् पुरुष भी यदि आलस्य से बड़े २ ग्रन्थों को न देख सकें तो उन्हें भी रोग पहचानने में इस ग्रन्थ से अच्छी सहायता मिल सकती है ॥३॥

अथ रोगविज्ञाने पञ्चोपायाः ।

व्याधेर्ज्ञातव्यस्य पञ्च ज्ञानोपाया भवन्तीति तानाह—

**निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।**
**सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ ४ ॥**

( वा० नि० अ० १ श्लो० २ )

म०—निदानमित्यादि । [3]एते पञ्च व्यस्ताः समस्ताश्च व्याधिबोधकाः । न च समस्तपक्षे कृतकरणत्वं वाच्यं, प्रमाणसम्प्लवस्यापि दृष्टत्वात् । ( अनुमितवह्नौ प्रत्यक्षोपमानशब्दानामपि स्थितिसत्त्वात्,यतः प्रमातुः प्रमातव्य एकस्मिन्नर्थे चतुर्णां प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणानां सम्प्लवः समूहो=दृष्टः, अतः समस्तपक्षे कृतकरणत्वं न वाच्यम् ) । न[4] यो ह्यनुमानेन प्रतीतो वह्निः स एव प्रत्यक्षागमाभ्यां-

---

१ चिकित्सितमिति भावेक्तः, चिकित्सेत्यर्थः । तदुपजीविना मुनिवचनानुसारिणा ।

२ अल्पमेधसामिति-नित्यमसिच्प्रजा मेधयोरिति असिचा निष्पन्नम् । नच तेन नञ् दुःसुभ्य एव परतोऽसिचोविधानाद्साधुरेवायमिति वाच्यम् नित्यमसिजितिसूत्रे नञ् दुःसुभ्यो हलि सक्थ्योरन्यतरस्यामित्यतोऽस्वरितत्वादेव अन्यतरस्यामिति ग्रहणाननुवृत्तिसिद्धौ नित्यग्रहणेनान्यतोऽपि विधानात् इति ।

३ एते पञ्च निदानादयो व्यस्ता एकैकशः,

४ यथावह्निर्धूमदर्शनेन अनुमीयते,इन्द्रियसन्निकर्षेण प्रत्यक्षत उपलभ्यते, आप्तोपदेशाच्च प्रतीयते ।

नोपलभ्यते । ( अत्र नञ्द्वयं प्रकृतमर्थं दृढयति, तद्यथा—अनुमानेन प्रतीतो यो वह्निः स किं प्रत्यक्ष-शब्दाभ्यां नोपलभ्यते ? इति नहि, अपि तु स ताभ्यामुपलभ्यत एवेत्यर्थः ) । न वा निदानादीनि प्रेक्षावन्तो ये नैवमालोचयेयुः । ( अत्रापि पूर्ववत्प्रकृतार्थबोधकं नञ्द्वयम्, यथा—अथवा ये प्रेक्षावन्तः । ( समालोचकाः ) ते निदानादीनि न सन्तीत्येवं कदाचिदालोचयेयुः ? इति न कदापि, किन्तु सन्ति निदानादीनीत्यालोचयेयुरेवेति सरलार्थः ) एकेनैव प्रतिपादितो व्याधिरिति वयमिहोदास्महे । ( एतेषां निदानादीनां पञ्चानां मध्ये केनचिदेकेनैव 'प्रतिपादितो व्याधिरिति केषांचिन्मतं, किन्तु वयमिहोदास्महे न श्रद्दध्महे न मन्यामहे तदित्यर्थः ) । किञ्च एकेन प्रतिपादितेऽपि व्याधावपरे[1]ऽवश्यमभिधातव्याः, भिन्नप्रयोजनत्वात् । तथाहि—यदि निदानं नोच्यते तदा तत्परिवर्जनं कथं लभ्येत ? उक्तं हि सुश्रुते,—"संक्षेपतः क्रियायोगो निदानपरिवर्जनम्"—इति ( सु. उ. तं. अ० १ ) । किञ्च यथा मृद्भक्षणात्पाण्डुरोगः, मक्षिकाभक्षणाच्च छर्दिरवसीयते; न च तथा निदानेन सर्वत्र नियतरोगाध्यवसायः, ज्वरगुल्मादीनामेककारणत्वात् । यदाह चरकः,—"एको हेतुरनेकस्य तथैकस्यैक एव हि । व्याधेरेकस्य बहवो बहूनां बहवस्तथा"—इति ( च. नि. स्था. अ. ८ ) । अपि च कदाचित्प्रत्यासन्नं निदानं बाधित्वा विप्रकृष्टनिदानकृतो दोषसञ्चयो व्याधिं कुर्यात्, तस्मात्केवलान्निदानान्न व्याधिज्ञानं भवतीति पूर्वरूपादीनामुपादानमिति वाप्यचन्द्रः । असति पूर्वरूपाभिधाने तत्रोक्तः क्रियाविशेषो न संगच्छते । उक्तं हि चरके,—"ज्वरस्य पूर्वरूपे लघ्वशनमपतर्पणं[2] वा"—इति ( च. नि. स्था. अ. १ ) । तथा च सुश्रुते, वातिकज्वरपूर्वरूपे घृतपानमिति । तथाऽसाध्यत्वं च नोपलभ्येत । उक्तं च चरके,—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः[3] ॥ अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् । विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्"—इति ( च. इ. स्था. अ. ५ ) । तथा रक्तपित्त-प्रमेहयोर्विशेषज्ञानं च न जायते । उक्तं च चरके,—"हारिद्रवर्णं रुधिरं च मूत्रं विना प्रमेहस्य हि पूर्वरूपैः । यो मूत्रयेत्तन्न वदेत्प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः" इति ( च. चि. स्था. अ. ६ ) । असति

---

१ अपरे पूर्वरूपादयः । क्रियायोगश्चिकित्सितम् । अवसीयते अवशिष्यते । रोगाध्यवसायो रोग विनिश्चयः, प्रत्यासन्नं-समीपस्थम् । विप्रकृष्टो दूरस्थः । यथा परश्वोभक्षितेन कलायेन संचितोवातोऽद्यभक्षितमम्लं पित्तविकारजनकं बाधित्वा स्वरोगमुत्पादयत्येव । उपादानं ग्रहणम् ।

२ अपतर्पणमुपवासः ।

३ पुरः सरोऽग्रगमनशीलः ।

रूपाभिधाने व्याधेरशेषेण स्वरूपमेव न [1]व्यवच्छिद्यते; किंच साध्यासाध्यत्वं च न ज्ञायते । तथा हि—सुखसाध्यलक्षणे चरकः,—"[2]हेतवः पूर्वरूपाणि रूपाण्यल्पानि यस्य वै । न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्"—इति ( च. सू. स्था. अ. १० ); कष्टसाध्यलक्षणे चरकः,—"निमित्त—पूर्वरूपाणां रूपाणां मध्यमे बले"—इति ( च. सू. स्था. अ. १० ); तथा,—"सर्वसम्पूर्णलक्षणः । सन्निपातज्वरोऽसाध्यः"—इति ( च. चि. स्था. अ. ३ ) । असत्युपशयाभिधाने [3]संकीर्णलक्षणेऽनभिव्यक्तलक्षणे वा व्याधौ विशेषबोधो न स्यात् । तदुक्तं चरके, "[4]गूढ़लिङ्गं व्याधिमुपशयानुपशयाभ्याम्" ( परीक्षेत ) इति ( च. वि. स्था. अ. ४ ) । असत्यां च संप्राप्तौ पूर्वरूपादिप्रतीतस्यापि व्याधेश्चिकित्सोपयोगिनोंऽशांशविकल्पना—बल—कालादेरप्रतीतेश्चिकित्साविशेषो न स्यात् । तस्मात्पञ्चापि निदानादयो वक्तव्याः । [5]पञ्चविधमप्येतद्व्याध्युत्पत्ति—ज्ञप्ति—हेतुभूतं निदानशब्देनोच्यते । यदाह सुश्रुतः,—"हेतु लक्षणनिर्देशान्निदानानि"—इति ( सु. सू. स्था. अ. ३ ) । तत्रैवं निदानशब्दनिरुक्तिः—"निर्दिश्यते व्याधिरनेनेति निदानम्"; "दिशेः पृषोदरादित्वाद्रूपसिद्धिः" इति गदाधरः;—"निश्चित्य दीयते प्रतिपाद्यते व्याधिरनेनेति निदानम्"—इति जेज्जटः । भट्टारहरिचन्द्रेणापि तन्त्रयुक्त्या निदानादिविवरणप्रस्तावे एषैव [6]निरुक्तिरुक्ता । निशब्दो निश्चये । तथा च वररुचेरुपसर्गसूत्रम्,—"नि निश्चयनिषेधयोः"—इति । लोकेऽपि "अद्य ते निदानं करिष्यामि" इत्युक्ते निश्चयं करिष्यामीत्यवगम्यते । निदानमिति करणे ल्युट्; तेन 'व्याधिनिश्चयकरणं निदानम्' इति निदानादिपञ्चकसामान्यलक्षणम् । निदानशब्दोऽयं [7]निदानविशेषे जातौ च वर्तते; यथा—तृणशब्दः तृणविशेषे तृणजातौ च वर्तते । यत्तु, भट्टारहरिचन्द्रेण निदानस्थाने—"या गौः सुदोहा भवति न तां निददीत"—इति व्यासप्रयोगमुपन्यस्य निबन्धार्थो निदानशब्दो व्याख्यातः । "निदीयते निबध्यते हेत्वादिसम्बद्धो व्या-

---

१ व्यवच्छिद्यते विभक्तं न भवेत् ।

२ हेतवो निदानानि । दूष्योरसरक्तादिः । तुल्यगुणो दोषसमानगुणः । दोषोरोगारम्भक आतुरस्य प्रकृतिर्न भवेत् । यथा पित्तप्रकृतेर्वातरोगः सुखसाध्यो वातलस्यत्वसाध्यः ।

३ संकीर्णलक्षणे मिश्रलक्षणे ।

४ गूढ़लिङ्गं गुप्तलक्षणम् । पञ्चविधमिति-एतत्सर्वं निदानादि सम्प्राप्त्यन्तं।

५ पञ्चविधम्व्याधिबोधकं निदानशब्देन व्यवह्रियते, निदानशब्दकथनेनैव निदानपूर्वरूपादीनां सर्वेषां ग्रहणं भवतीत्यर्थः । हेतुलक्षणनिर्देशादिति । हेतुर्निदानं लक्षणं पूर्वरूपादिस्तयोर्निर्देशात् प्रतिपादनात् । निदानादीनि . निदानपदबोध्यानि निदानपूर्वरूपादीनि ।

६ निरुक्तिर्व्युत्पत्तिर्यौगिकार्थ इति यावत् । जेज्जट व्याख्याने डुदाञ् दान इत्यस्मात् करणाधिकरणयोश्चेतिल्युट् ।

७ निदानविशेषे रोगोत्पादकहेतौ जातौ पूर्वरूपादौ च । निददीत रज्वादिना तत्पादबन्धनं न कुर्यादित्यर्थः । उपन्यस्य उत्थाप्य ।

धिरनेन" इति कृत्वा, तत्तु निदानस्थानरूपग्रन्थाभिप्रायेण, नहि हेत्वादयो हेत्वादिसम्बद्धं व्याधिं प्रतिपादयन्ति । ( स्वात्मनि क्रियाविरोधादित्यर्थः ) ॥ ४ ॥

भा०टी०-रोग पहचाननेके पाँच उपाय हैं निदान, पूर्वरूप, रूप, उपशय और सम्प्राप्ति। इन में एक २ से भी रोग पहचाना जाता है, और सबसे भी। निदान आदिका अर्थ यहीं पर आगे बतलाया जायगा ॥ ४ ॥

अथ निदानपर्यायाः ।

एषां निदानादीनां मध्ये [1]समानासमानजातीयव्यावर्तककारणरूपनिदानस्यलक्षणमाह-

**निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।**
**निदानमाहुः पर्यायैः,**

( वा० नि० अ० १ श्लो० ३ )

म०-निमित्तेत्यादिना पर्यायैरित्यन्तेन । एतैः शब्दैर्योऽर्थोऽभिधीयते तन्निदानम्; यथा-"बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" ( न्या. द. प्र. आ. सू. १५ ) ननु, किं मिलितैरेकैकशो वा ? नाद्यः एकार्थाभिधायिनां शब्दानां मिलितानामप्रयोगात्; द्वितीयश्चेत्तदा [2]सव्यभिचारः, निमित्तस्य शकुनादौ, हेतोः प्रयोजके कर्तरि, आयतनस्य स्थाने, प्रत्ययस्य लडादौ, उत्थानस्य उद्गमनोत्सर्गयोश्च दर्शनात् । नैवम्, शकुनादीनां निमित्तादिभिः सर्वैरनभिधानात् । अत एवाह-पर्यायैरिति । नहि तेषां ते पर्यायाः, यतः क्रमेणैकार्थवाचकाः शब्दाः परस्परं पर्याया उच्यन्ते । तस्मान्निमित्तादिशब्दैः पर्यायैरभिधीयमानत्वं निदानत्वम् । एतच्च पर्यायकथनं शास्त्रे व्यवहारार्थम् । इदं तु संक्षेपतो लक्षणम्-"[3]सेतिकर्तव्यताको रोगोत्पादकहेतुर्निदानम्' इति । यन्मते दोषेतिकर्तव्यतारूपा संप्राप्तिरिष्यतेतन्मते संप्राप्तिव्युदासार्थं 'सेतिकर्तव्यताकः' इति पदं, [4]तस्या दोषेतिकर्तव्यतारूपाया इतिकर्तव्यतान्तराभावात् । यन्मते व्याधिजन्म संप्राप्तिस्तन्मते 'व्याध्युत्पत्ति हेतुर्निदानम्' इति लक्षणम् । उभयत्रापि 'उत्पत्ति' पदं ज्ञाप्ति-हेतु-पूर्वरूपादिव्यवच्छेदार्थम् । स च हेतुरनेकधा । तत्र प्रथमं चतुर्विधः, यदाह उपकल्पनीयाध्याये हरिचन्द्रः;

---

१ समानजातीयानिदानसधर्मिणः पूर्वरूपादयः । असमानजातीया निदानविरुद्धधर्मिणो घटपटादयः।व्यावर्तकम् भेदकरम् । २ सव्यभिचारः सदोषः । तेषां शकुनादीनाम् । ते। निमित्तादिशब्दाः । ३ इतिकर्तव्यता व्यापारस्तया सह वर्तते यः स सेतिकर्तव्यताकः, रोगोत्पत्तिजनक इत्यर्थः । व्युदासार्थं निरासार्थम् । तस्याः सम्प्राप्तेः । इतिकर्तव्यतान्तराभावात । व्यापारस्तु द्रव्ये नि नि न तुव्यापाररूपे गणे । यदुक्तं-कारिकावल्यां-"गुणादिर्निर्गुणक्रियः इति ।

"सन्निकृष्ट-विप्रकृष्ट-व्यभिचारि-प्राधानिक-भेदाच्चतुर्धा"-इति। सन्निकृष्टो यथा नक्तंदिनर्तुभुक्तांशा दोषप्रकोपस्य हेतवः, न ते चयादिक्रममपेक्षन्ते। विप्रकृष्टो यथा "हेमन्ते निचितः श्लेष्मा वसन्ते कफरोगकृत्"; किंवा सन्निकृष्टो ज्वरस्य रूक्षादि-सेवा, विप्रकृष्टो रुद्रकोपः। व्यभिचारी यथा-यो दुर्बलत्वाद्व्याधिकरणासमर्थः। यदाह चरकः,-"(निदानादि विशेषा) अबलीयांसोऽथवानुबध्नन्ति, न तदा विकाराभिनिर्वृत्तिः" इति (च. नि. स्था. अ. ४)। प्राधानिको यथा-विषादिः; त्रिविधो वा असात्म्येन्द्रियार्थसंयोग-प्रज्ञापराध-परिणाम-भेदात्। तत्र, [1]असात्म्येन्द्रियार्थसंयोगोऽयोगा-ऽतियोग-मिथ्यायोग-युक्ता रूपरसादयः, [2]प्रज्ञापराधो मिथ्याज्ञानादिः, परिणामो अयोगादियुक्ता [3]ऋतुस्वभावजाः शीतादयः। "अधर्मस्य च रोगहेतो-[4]रत्रैवान्तर्भावः"-इति भट्टारहरिचन्द्रः, तस्यापि कालान्तरपरिणतस्य दुःखकर्तृत्वात्। चक्रस्तु प्रज्ञापराधे तस्यान्तर्भावमाह; [5]मिथ्याज्ञानकृतब्रह्मवधादिजन्मनोऽधर्मस्य प्रज्ञापराध एव मूलम्; बला+बलं [6]त्वत्र न निरूप्यते, रोगकारणत्वेनाधर्मस्य सर्वथा सिद्धत्वादिति। दोष-व्याध्युभय-हेतुभेदाच्च स त्रिविधः। दोषहेतवो यथा-चय-प्रकोप-प्रशम-निमित्ताः यथर्तूत्पन्ना मधुरादयः। व्याधिहेतवो यथा-मृद्भक्षणं पाण्डुरोगस्य कारणम्। यद्यपि मृदपि दोषं प्रकोपयत्येव; यदुक्तं चरके,-

---

१-अर्थानांसंयोगोऽर्थसंयोग इन्द्रियैरर्थसंयोग इन्द्रियार्थसंयोगः। आत्मने हितमार्यैत्यमात्म्येन सह वर्तमानः सात्म्यः न सात्म्योऽसात्म्यः सचासौ इन्द्रियार्थ संयोगोऽसात्म्येन्द्रियार्थसंयोगः। इन्द्रियाणि-श्रवणनेत्रजिह्वाघ्राणत्वचः। अर्थास्त्वेषां यथाक्रमं-शब्दरूपरसगन्धस्पर्शाः। एषामयोगादीनामुदाहरणानि चरकोक्तान्युदाह्रियन्ते-यथा-अतिमात्रस्तनित पटहोत्क्रुष्टादीनां शब्दानामतिमात्रं श्रवणमतियोगः। परुषेष्टविनाशोपघातप्रधर्षणभीषणाऽदिशब्दश्रवणं मिथ्यायोगः। अतिप्रभावतां दृश्यानामतिमात्रं दर्शनमतियोगः। सर्वशोऽदर्शनमयोगः। अतिश्लिष्टातिविप्रकृष्टरौद्रभैरवाद्भुतद्विष्टबीभत्सनविकृतादिरूपदर्शनं मिथ्यायोगः। रसानामत्यादानमतियोगः। अनादानमयोगः। चरक विमानोक्तराशिरहितप्रकृत्यादिविरुद्धोपयोगो मिथ्यायोगः। अतितीक्ष्णोग्राभिष्यन्दिनां गन्धानामतिमात्रं घ्राणमतियोगः। सर्वशोऽघ्राणमयोगः। पूतिद्विष्टामेध्यक्लिन्नविषपवनकुणपगन्धादिघ्राणं मिथ्यायोगः। अतिशीतोष्णानां स्पृश्यानां स्नानाभ्यङ्गोत्सादनादीनां चात्युपसेवनमतियोगः। सर्वशोऽनुपसेवनमयोगः। स्नानादीनां शीतोष्णादीनां च स्पृश्यानामनानुपूर्व्योपसेवनं विषमस्थानाभिघाताऽशुचिभूतसंस्पर्शादयश्चेति मिथ्यायोगः।

२-प्रज्ञया बुद्ध्यापराधः प्रज्ञापराधः। कायिकं वाचिकं मानसं कर्मातियोगायोगमिथ्यायोगयुक्तं प्रज्ञापराधं जानीयात्। तत्र वाङ्मनःशरीरातिप्रवृत्तिरतियोगः॥ सर्वशोऽप्रवृत्तिरयोगः। वेगधारणोदीरणविषमस्खलनपतनाङ्गप्रणिधानाङ्गप्रदूषणप्रहारमर्दनप्राणोपरोधसंक्लेशनादिः शारीरो मिथ्यायोगः। सूचकाऽनृताकालकलहाप्रियाबद्धानुपचारपरुषवचनादिर्वाङ्मिथ्यायोगः। भयशोकलोभमोहमानेर्ष्यामिथ्यादर्शनादिर्मानसो मिथ्यायोगः। उक्तं च चरके-धीधृतिस्मृतिविभ्रष्टः कर्म यत्कुरुतेऽशुभम्। प्रज्ञापराधं तं विद्यात् सर्वदोषप्रकोपणम्। बुद्ध्या विषमविज्ञानं विषमं च प्रवर्तनं। प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत्॥

३-यथा शीतोष्णवर्षलक्षणेषु कालेषु शीतोष्णादीनामल्पत्वमयोगः. अतिमात्रत्वमतियोगः। शीते वर्षणं वर्षासु शीतम्, उष्णेषु शीतं शीत औष्ण्यम्। वर्षास्वौष्ण्यमुष्णे वर्षणं मिथ्यायोगः।

४-परिणामे। तस्यापि-अधर्मस्य। ५ शरीरात्मनोरैक्यज्ञानं मिथ्याज्ञानम्। तेन कृतात् ब्रह्मवधादेर्जन्म यस्य तस्य। शरीरात्माभिमानिनो मिथ्याज्ञानवन्तः शरीरसुखोपभोगाय समस्तब्रह्मवधपरदारादिकर्मसु प्रवर्तन्ते। तत्रापि प्रज्ञापराध एव हेतुः। ६ अधर्मे। + 'बलाबलत्वं तत्र' इति पाठान्तरम्।

कषाया मारुतं पित्तमूषरा मधुरा कफम्"—इति ( च. चि. स्था. १६ ); तथापि तज्जैर्दोषैः पाण्डुरोग एवारभ्यते न त्वन्यो विकार इति व्याधिहेतुता भवति। उभयहेतुर्यथा—वातरक्ते,—"हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च"—इत्यादि ( सु. नि. स्था. अ. १ )। तत्र यद्यपि दोषप्रकोपपूर्वकमेव व्याधिजननम्, तथापि दोषवद्व्याधावपि तस्य कारणत्वमिति[1] बोधयति। तेन तत्र न व्याधिहरमात्रं भेषजं प्रयोज्यं किन्तूभयप्रत्यनीकम्। न च वाच्यं कारणभूतदोषनिवृत्त्यैव कार्यभूतस्य व्याधेर्निवृत्तिरिति; यत[2]: प्रतिनियतशक्तिकानि भेषजद्रव्याणि भवन्ति; कथमन्यथा श्लैष्मिकतिमिरे श्लेष्महरमेव वमनं न प्रयुज्यते। यदुक्तं सुश्रुते,—"न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीडितम्"—इति ( सु. चि. स्था. ३३ )। स एवोत्पादक—व्यञ्जक—भेदाच्च द्विधा। तत्रोत्पादको यथा—हेमन्तजो मधुररसः कफस्य। व्यञ्जको यथा—तस्यैव कफस्य* व्यञ्जको वसन्ते सूर्यसन्तापः—इति भट्टारहरिचन्द्रः। तत्र व्यञ्जकः प्रेरक+ इत्यर्थः। बाह्याऽऽभ्यन्तर—भेदाच्च द्विधा। तत्र बाह्या आहाराऽऽचार—कालादयः। एतदभिप्रायेण []तीसटाचार्यः—[3]व्यायामादपतर्पणात्प्रपतनाद्भङ्गात्क्षयाज्जागराद्वेगानां च विधारणादतिशुचः शैत्यादतित्रासतः। रूक्ष—क्षोभ—कषाय—तिक्त—कटुकैरेभिः प्रकोपं व्रजेद्वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च ॥[4]कट्वम्लोष्ण—विदाहि—तीक्ष्ण—लवण—क्रोधोपवासाऽऽतप—स्त्रीसम्पर्क—तिलातसी—दधि—सुरा—शुक्ता—ऽऽरनालादिभिः। भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे सति प्राणिनां मध्याह्ने च तथाऽर्धरात्रिसमये पित्तं प्रकोपं व्रजेत् ॥ [5]गुरु—मधुर—रसातिस्निग्ध—दुग्धेक्षु—भक्ष्य—द्रव—दधि—दिननिद्रा-ऽपूप—सर्पिष्प्रपूरैः। तुहिनपतनकाले श्लेष्मणः संप्रकोपः प्रभवति दिवसादौ भुक्तमात्रे वसन्ते' ( चि. क. श्लो. २९-३१ )—इति। आभ्यन्तरा यथा—दोषा [6]दूष्याश्च। तत्र

---

१—हस्त्यश्वोष्ट्रादिगमनं दोषं कोपयति, वातरक्तं व्याधिञ्च जनयतीत्यर्थः। २ — नियमेन तत्तद्दोषरोगहराणि। यथा — तैलघृतमधूनि क्रमेण वातपित्तश्लेष्मदोषहराणि नावश्यं तद्विकारहराणि। एवं हरिद्रादीनि। प्रमेहादिव्याधिहराणि किन्तु न तदारम्भकदोषहराणि। तथा च यानि दशमूलादीनि दोषव्याध्युभयघ्नानि न तानि कदाचिदेकमात्रहराणि सन्ति।

३ — व्यायामात् – श्रमात्। अपतर्पणात् – लंघनात्। भङ्गात् सन्ध्यस्थिभङ्गात्। शुचः -- शोकात्। वारिधरागमे वर्षासु। अन्ने परिणते – परिपाकं प्राप्ते।

४ — विदाहि विदाहजनकं राजिकादि तल्लक्षणं यथा-विदाहिद्रव्यमुद्गारमम्लं कुर्यात्तथा तृषाम्। हृदि दाहंच जनयेत् पाकं गच्छति तच्चिरात् ॥ तीक्ष्णं – नासादिस्रावकरम् मरिचादि। तीक्ष्णं विषादीत्यन्ये। शुक्तम् "सिरका" इति लोके। आरनालं काञ्जिकम् [ कांजी ]। भुक्ते जीर्यति भोजनपरिपाककाले। भोजने – भोजनसमये – भोजनकालातीते, इति केचित्।

५ — इक्षुभक्ष्यम् – गुडसितादीनि तत्कृतानि चान्नानि। प्रपूरैः – परिपूर्णभोजनैः। तुहिनपतनकाले हेमन्त शिशिरयोः।

६ — दोषाः – वातपित्तकफाः। दूष्याः – रसरक्तमांसमेदोऽस्थिमज्जशुक्राणि धातवः, वसामूत्रशकृत्स्वेदादयश्च।

* 'कफचयस्य' इति पाठान्तरम्। + अभिव्यक्तकारक इति पाठान्तरम्। [] त्रिजटाचार्य इति केचित्।

दोषोऽपि प्रकुपितः प्राकृतादिभेदादनेकधा । प्राकृतो यथा—वसन्ते श्लेष्मा, शरदि पित्तं, प्रावृषि वायुः । वैकृतस्तु यथा—वसन्ते पित्तं वायुर्वा, वर्षासु कफः पित्तं वा, शरदि कफो वायुर्वा । अस्य प्रयोजनं सुखसाध्यत्वादि । यदुक्तं चरके,—"प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः"—इत्यादि ( च. चि. स्था अ. ३ ). अनुबन्ध्यानुबन्धभेदाच्च द्विधा । अनुबन्ध्यः प्रधानम् अनुबन्धोऽप्रधानम् । यदाह चरकः, "स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानोपशमो भवत्यनुबन्ध्यः, तद्विपरीतलक्षणस्त्वनुबन्धः" इति—( च. वि. स्था. अ. ६ ) । अस्य प्रयोजनं संसर्गजे व्याधावनुबन्ध्यो विशेषेण चिकित्स्योऽनुबन्धाविरोधने । तदुक्तं चरके,—तत्रोपद्रवस्य प्रायः प्रधानप्रशमात्प्रशमः"—इति ( च. चि. स्था. अ. २१ ) । उपद्रवोऽनुबन्धः । प्रकृतिविकृतितो यथा—वातप्रकृतेर्वातरोगः कष्टसाध्यो भवति, कफपित्तप्रकृतेस्तु सुखसाध्यः । यदाह सुखसाध्यलक्षणे चरकः,—"न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्—" इति ( च. सू. स्था. अ. १० ) । आशयापकर्षतो[१] यथा—यदा स्वभानस्थितमेव दोषं स्वाशयादाकृष्य वायुः स्थानान्तरं गमयति[२] तदा []समानस्थोऽपि स विकारं जनयति । यदाह चरकः,—"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये । स्थानादादय गात्रेषु यत्र यत्र विसर्पति ॥ तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः । गात्रदेशे भवत्यस्य श्रमो दौर्बल्यमेव च—" इति ( च. सू. स्था. अ. १७ ) । अस्य प्रयोजनं वातस्यैव तत्र विगुणस्य स्वस्थानानयनं कार्यं, न तु पित्तस्य* ह्रासनम्; "ये त्वेनां पित्तस्य स्थानाकृष्टिं न विदन्ति, ते दाहोपलम्भेन पित्तवृद्धिं मन्यमानाः पित्तं ह्रासयन्तः पित्तक्षयलक्षणं रोगान्तरमेवोत्पादयन्त आतुरमतिपातयन्ति[३]" इति भट्टारहरिचन्द्रः । अन्ये त्वाहुः—भ्राजकादिभेदेन[४] सर्वदेहस्थिते पित्ते यदा स्वाशयाऽऽकृष्टं पित्तमवयवान्तरमनिलेन प्रापितं तदा तदवयवान्तरस्थं पित्तमागन्तुपित्तसंबन्धेनाधिकमेव जातं, ततश्च ( पित्त ) वृद्धिलक्षणैवेयं दुष्टिर्न दुष्टयन्तरम्, अन्यथा दाह एव न स्यात्; नहि समानस्थो दोषो विकारं जनयतीति । भट्टारहरिचन्द्रस्य त्वयमभिप्रायः—यद्यप्येवं तथापि चिकित्साभेदार्थं वृद्धि—क्षय—व्यतिरिक्तस्थानान्तरगतिरूपो दुष्टिविशेषोऽवश्यमेवैष्टव्यः, अन्यथा वृद्धं पित्तमिति मत्वा विरेचनं पित्तह्रासनं वा कार्यं, न च तत्तत्र योग्यम्, किंतु स्वस्थानानयनम् । यच्चोक्तं चरकेण,—"क्षयः स्थानं च वृद्धिश्च विज्ञेया त्रिविधा गतिः"—( च. सू. स्था. अ. १७ ) इत्यादि

१ आशयः स्थानम् । २ प्रापयति । ३ अतिपातयन्ति नाशयन्ति । ४ अग्न्याशये पाचकं, त्वचि भ्राजकम्, यकृति रञ्जकम्, नेत्रद्वये-आलोचकम्, हृदि साधकम् ।

[] 'स्वमानस्थोऽपि' इति पाठान्तरम् । * 'न तु पित्तस्य ह्रासनेन स्वाशयापकर्षणम्' इति पाठान्तरम् ।

तत्प्रायिकमिति । गतितो यथा–गतिर्दोषाणां क्षीण–वृद्धत्वादयः। यदुक्तं चरके "क्षयः स्थानं च वृद्धिश्च दोषाणां त्रिविधा गतिः । ऊर्ध्वं चाधश्च तिर्यक्च विज्ञेया त्रिविधा परा ॥ त्रिविधा चापरा कोष्ठ–शाखा–ममास्थि–सन्धिषु" इति ( च. सू. स्था. अ. १७ )। अत्र स्थानमिति समत्वम् । तत्र क्षयादिलक्षणं यथा,–"दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम् । क्षीणा जहति स्वं लिङ्गं, समाः स्वं कर्म कुर्वते"–इति ( च. सू. स्था. अ. १७ ) । स्वं लिङ्गमिति कुपितस्य वायो रौक्ष्यादयो धर्माः, कर्माणि च स्रंसशूलादीनि । यदाह चरकपाठसंवादी * सुदान्तसेनः,–"[1]आध्मान–स्तम्भ–रौक्ष्य–स्फुटन–विमथन–क्षोभ–कम्प–प्रतोदाः, कण्ठध्वंसावसादौ []श्रमक–विलपनं स्रंस–शूल–प्रभेदाः । पारुष्यं कर्णनादो-विषयपरिणतिभ्रंश–दृष्टिप्रमोहाः विस्पन्दोद्घट्टनानि ग्लपनमशयनं ताडनं पीडनं च ॥ नामोन्नामौ विषादो +भ्रमपरिपतनं जृम्भणं रोमहर्षो, विक्षेपा–ऽऽक्षेप–शोष–ग्रहण–शुषिरता–च्छेदनं वेष्टनं च । वर्णः श्यावोऽरुणो वा तृडपि च महती स्वाप–विश्लेष–सङ्गा, विद्यात्कर्माण्यमूनि प्रकुपितमरुतः स्यात्कषायो रसश्च ॥ [2]विस्फोटाम्लक–धूमकाः प्रलपनं स्वेदस्रुतिर्मूर्च्छनं दौर्गन्ध्यं दरणं मदो विसरणं पाकोऽरतिस्तृड्–भ्रमौ उष्माऽतृप्ति–तमःप्रवेश–दहनं कट्वम्ल–तिक्ता रसाः, वर्णः पाण्डुविवर्जितः क्वथितता कर्माणि पित्तस्य वै ॥ [3]तृप्तिस्तन्द्रा गुरुता स्तैमित्यं कठिनता मलाधिक्यम् । स्नेहापक्त्युपलेपाः शैत्यं कण्डूः प्रसेकश्च । चिरकर्तृत्वं शोथो-

---

१ – स्तम्भो जाड्यम्,स्तम्भश्चेष्टाप्रतीघाती भयहर्षामयादिभिरिति साहित्यदर्पणे । स्फुटनमस्थ्यादिविदारणद्वेदना, विमथनम् मथनतुल्या वेदना । क्षोभो मनसो विकृतिः । प्रतोदःसूचीवेधनवत्पीडा । कण्ठध्वंस उत्कासिका । अवसादः शरीरसादः। श्रमइव श्रमकोऽकारणश्रमज्ञानम् । विलपनं प्रलापः । स्रंसः सन्धिशैथिल्यम् । शूलप्रभेदा अनेकप्रकारशूलानि । पारुष्यम् त्वचः काठिन्यम् । विषयपरिणतिभ्रंशो विषयज्ञानराहित्यम् । दृष्टिप्रमोहो दृष्टिनाशः । विस्पन्दः शरीरैकदेशकम्पः । उद्घट्टनं-सन्ध्यस्थ्नां घर्षणम् । ग्लपनं ग्लानिः । अशयनं निद्राभावः । ताडनवत्पीडा ताडनम् । नामोऽग्रतोनमनम् । उन्नामः पृष्ठतः । विषादः सत्वसंक्षयो मनसोभङ्ग इतियावत् । परिपतनं शरीरस्य पतनवद्वेदना । विक्षेपो हस्तपादादेः । आक्षेपः शरीरस्य गजारूढस्यस्येवचलनम् । शोषः शरीरस्यशोषः । ग्रहणमङ्गग्रहो वेदनया । शुषिरता शरीरैकदेशनमनम् छेदो वा । वेष्टनं वेष्टनवत्पीडा : छेदनंशस्त्रादिद्वारा छेदनवत्पीडा । श्यावः शुक्लानुविद्धः कृष्णोवर्णः, वर्णोऽयं शरीरस्य मलमूत्रादेर्वा । स्वापः स्पर्शज्ञानाभावः । विश्लेषः शन्धिशैथिल्यम् । संगो हस्तादेः मलादेर्वा । कषायो रसो मुखस्य ।

२ – अम्लकधूमका अम्लोद्गारोधूमोद्गारश्च । दरणं त्वचोविदरणम् । मदः पूगविजयादिभक्षणस्येव । विसरणसन्धिबन्धनविश्लेषः ऊष्मा औष्ण्यम् । तमः प्रवेशोऽन्धकारप्रविष्टस्येव ज्ञानम् । दहनंदाहः । क्वथितता विलोडनत्वम् ।

३ – तृप्तिस्तृप्तस्येवान्नाभिलापः । गुरुता गौरवं शरीरे । स्तैमित्यमङ्गानामार्द्रपटावगुण्ठितत्वमिव । कठिनता शरीरस्य । स्नेहः शरीरस्य स्निग्धता । अपक्तिरपचनम् । उपलेपः कफेनमुखलिप्तता । प्रसेकः कफलालास्रावः । चिरकर्तृत्वं चिरक्रियत्वम् । पटुर्लवणः । स्वादुर्मिष्टः । अलसता शक्तस्य कर्मणि अनुत्साहः ।

* सुदत्तसेनः इति पाठान्तरम् । [] 'तमक विलपनम्' इति पाठान्तरम् । + 'भ्रमपरिसदनम्' इति पाठान्तरम् ।

निद्राधिक्यं रसौ पटु-स्वादू । वर्णः श्वेतोऽलसता कर्माणि कफस्य जानीयात् ॥ द्विदोषलिङ्गः संसर्गः सन्निपातस्त्रिलिङ्गकः-" इति । लिङ्गज्ञानप्रयोजनं च चिकित्सा-भेदार्थम् । यदाह सुश्रुतः-'क्षीणा वर्धयितव्याः, वृद्धा ह्रासयितव्याः, समाः पालयितव्याः-' इति ( सु. चि. स्था. अ. ३३ ) । ऊर्ध्वादिगतिर्यथा-ऊर्ध्वगं रक्तपित्तमित्यादि अस्य प्रयोजनं रक्तपित्तस्योर्ध्वगस्य विरेचनम्, अधोगस्य वमनम् । यथोक्तं चरके,-"प्रतिमार्गं[1] च हरणं रक्तपित्ते विधीयते—"इति ( च. नि. स्था. अ २. । यस्तु गतिभेदानभिज्ञः स "विरेकः पित्तहराणाम्"-इति ( च. सू. स्था. अ. २५ ) । वचनादधोगे रक्तपित्ते विरेकं प्रयुञ्जान आतुरस्यानर्थमेवोत्पादयति; ज्वरादिषु तिर्यग्दोषगतिषु यथोक्तं चिकित्सितमिति । वृद्धा दोषाः कदाचित्कोष्ठं-कदाचिच्छाखाः कदाचिन्मर्मास्थिसन्धीनाश्रित्य रुजन्ति; [2]मर्मास्थिसन्धिषु गतिः कृच्छ्रसाध्यत्वापादकत्वादेकत्वेन निर्दिष्टा । कोष्ठ=आमाशयादिः, शाखा=रक्ता-दयो धातवस्त्वक्चेति, चरककृतैवेयं संज्ञा । कोष्ठाद्यभिधानप्रयोजनं चिकित्साभेदा-र्थम् । यथोक्तं चरके,-"आमाशयगते वाते कफे पक्वाशयाश्रिते । रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च" ( च. सू. स्था. अ. १४ ); तथा,-"सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः"-( सु. उ. तं अ. ३९ ) इत्यादि; तथा,-"नाग्निकर्मो-पदेष्टव्यं स्नायु-मर्म-व्रणेषु च"-इति । एते च दोषाः [3]सामत्वनिरामत्वाभ्यामपि ज्ञातव्याः । यदुक्तम्,-"ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् । दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ आमेन तेन संयुक्ता दोषा दूष्याश्च दूषिताः । सामा इत्युपदि-श्यन्ते ये च रोगास्तदुद्भवाः ॥ स्रोतोरोध-बलभ्रंश-गौरवानिलमूढताः । आलस्या-पक्ति-निष्ठीव-मलभेदारुचि-क्लमाः ॥ लिंगं मलानां सामानां निरामाणां विपर्ययः ( वा. सू. स्था. अ. १३ ) [4]वायुः सामो विबन्धाग्निसाद-तन्द्रा-ऽन्त्रकूजनैः ।

---

१ - प्रतिमार्गः प्रतिकूलमार्गः ।

२ - ननुकोष्ठादीनां पञ्चविधत्वेन कथंगतित्रैविध्यमित्यत आह-मर्मास्थीत्यादि । मर्मादित्रयं प्रपन्नादोषाः प्रायेण कृच्छ्रसाध्यमेव व्याधिं जनयन्ति ।

३ - सामत्वमामसहितत्वं, निरामत्वमामविरहत्वम् । ऊष्मणोजाठराग्नेः । आद्यं धातुं रसम्, संपृक्ता दोषा-वातादयः दूष्या रक्तादयो धातवः । तदुद्भवाः सामदोषोत्पन्नाः । स्रोतोरोधो नाडीमार्गरोधः । अनिलमूढता-वायोरानुलोम्या-भावः । बलभ्रंशो बलहानिः स्तब्धता वा, क्लमोऽनायासश्रमः । यदुक्तं सुश्रुते—योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः क्लमः स इति विज्ञेयइन्द्रियार्थप्रबाधकः । निरामाणां विपर्ययः सामविपरीतलक्षणम् ।

४ - अग्निसादोऽग्निमान्द्यम् ।

वेदना–शोथ–निस्तोदैः क्रमशोऽङ्गानि पीडयेत् । [1]विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम् ॥ स्नेहाद्यैर्वृद्धिमाप्नोति सूर्य–मेघोदये निशि । निरामो विशदो रूक्षो निर्विबन्धोऽल्पवेदनः ॥ विपरीतगुणैः शान्तिं स्निग्धैर्याति विशेषतः । दुर्गन्धं[2] हरितं श्यावं पित्तमम्लं स्थिरं गुरु ॥ अम्लिका–कण्ठ–हृद्–दाह–करं सामं विनिर्दिशेत् । आताम्रं पीतमत्युष्णं रसे कटुकमस्थिरम् ॥ पक्वं विगन्धं विज्ञेयं रुचि–पक्तृ–बल–प्रदम् । आविलस्तन्तुलः स्त्यानः कण्ठदेशेऽवतिष्ठते । सामो बलासो दुर्गन्धः क्षुदुद्गारविघातकृत् ॥ फनवान्पिण्डितः पाण्डुर्निःसारोऽगन्ध एव च । पक्वः स एव विज्ञेयश्छेदवान्वक्त्रशुद्धिकृत्"–इति । अस्य प्रयोजनं साम पाचनं निरामे शमनमिति । एते च दोषाः परस्परसम्बद्धास्तरतमादिभेदेन द्विषष्टिधा भवन्ति । तदुदाहरणानि विस्तरत्वापत्तेरत्र न लिख्यन्ते, सौश्रुतदोषभेदविकल्पाध्याये द्रष्टव्यानि । उक्तहेतुदोष–भेदयोः संग्रहश्लोकौ–"[4]चत्वारो व्यभिचारि–दूर–निकट–प्राधानिकत्वात्पुनस्तेऽसात्म्येन्द्रियकार्ययुक्–परिणति प्रज्ञापराधात्त्रिधा । रुग्दोषोभयकारणादपि तथा द्वौ व्यञ्जकोत्पादकौ, बाह्याऽऽभ्यन्तरभेदतोऽपि कथिता हेतोः प्रभेदा अमी ॥ दोषस्य च प्राकृत-वैकृताभ्यां, भेदोऽनुबन्ध्यादपि चानुबन्धात् । तथा प्रकृत्य–प्रकृतित्वयोगात्तथाशया–ऽऽकर्षवशाद्गतेश्च" ।

## * इति निदानम् *

–❧–

---

१ – युगपदेककालम् । कुपितः सामो वायु र्भृशमत्यर्थमङ्गानि वेदनया गृह्णाति व्याप्नोति । यद्यपि स्नेहेन वायुः शान्तिमेति किन्तु सामत्वात्स्नेहाद्यैः वृद्धिमाप्नोति । विशदो धूलिस्पर्शवत् । निर्विबन्धो बन्धनभावरहितः स्रोतसांमरोधको वा ।

२ – हरितं पत्रशाकवर्णम् । अम्लिका अम्लोद्गारः । अस्थिरम् सरम् । पक्तृबलमग्निबलम् । आविलो मलिनवर्णः । तन्तुलः सूत्रवद्विस्तीर्णशीलः स्त्यानो घनः निःसारोलघुजले प्रतरणशीलः । छेदवाननुपलेपी – कासतः पुंसः शीघ्रमेवनिःसरणशीलः ।

४ – दूरोविप्रकृष्टः । निकटः संनिकृष्टः । असात्म्येन्द्रियकार्ययुक् कार्यं विषयः, असात्म्येन्द्रियार्थसंयोग इत्यर्थः । परिणतिः परिणामः । रुग्दोषोभयकारणादिति व्याधिहेतुर्दोषहेतुर्व्याधिदोषहेतुः । अप्रकृतित्वं विकृतिः । गतेश्चेति क्षयः स्थानं च वृद्धिश्च दोषाणां त्रिविधा गतिः । ऊर्ध्वं चाधश्च तिर्यक् च विज्ञेया त्रिविधा परा । त्रिविधा चापर कोष्ठशाखामर्मास्थिसन्धिषु इति स्मारयति ।

### अथ पूर्वरूपम् । ( Prodromal Symptoms )

[1]निदानानन्तरीयकत्वात्पूर्वरूपादीनां तदनन्तरं प्राग्रूपमाह—

**प्राग्रूपं येन लक्ष्यते ॥ ५ ॥**
**उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ।**
**लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम्*॥६॥** { वा० नि० अ० १ श्लो० ४ }

म०—प्राग्रूपमित्यादि । द्विविधं हि पूर्वरूपं भवति, सामान्यं विशिष्टं च । तत्र सामान्यं यथा येन दोष–दूष्य–[2]संमूर्च्छनावस्थाजनितेन भाविज्वरादिव्याधिमात्रं प्रतीयते, न तु वातादिजनितत्वादिविशेषः । यथा,–'श्रमोऽरतिर्विवर्णत्वम्'–इत्यादि ( मा. ज्व. नि. श्लो. ४ ):, तथा देव–गुरु–विप्र–द्वेषादि । सामान्याभिप्रायेणैव तन्त्रान्तरम्,–"[3]व्याधेर्जातिर्बुभूषा च पूर्वरूपेण लक्ष्यते । भावः किमात्मकत्वं च लक्ष्यते लक्षणेन हि"–इति । तथाऽऽह पराशरः,–"पूर्वरूपं नाम येन भाविव्याधिविशेषो लक्ष्यते न तु दोषविशेषः"–इति । विशिष्टं यथा–उरःक्षतादौ लिंगान्येव वातादिजान्यव्यक्तानि । यदुक्तं तत्रैव–"अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम्"–इति । तथा सुश्रुतः,–"सामान्यतो विशेषात्तु जृम्भाऽत्यर्थं समीरणात् । पित्तान्नयनयोर्दाहः कफादन्नारुचिस्तथा"–इति ( सु. उ. त. अ. ३९ ) । हारीतेऽप्युक्तम्,–"इति पूर्वरूपमष्टानां ज्वराणां सामान्यतः विशेषतस्तु जृम्भांऽगमर्दभूयिष्ठं हृदयोद्वेगि वातजम्"–इत्यादि । ननु चात्यर्थं व्यक्तत्वं ततश्च जृम्भादेरपि रूपत्वं [4]प्रसज्येत; यद्वक्ष्यति,–"तदेव व्यक्ततां यातं रूपमित्यभिधीयते"–इति । उच्यते, यथा श्रमादय इतररोगव्यतिरिक्तं भाविज्वरमात्रं बोधयन्ति न तु वातजत्वादिविशेषमित्यतस्तेषामव्यक्तत्वम्, तथा पित्तादिज्वरव्यतिरिक्तं भविष्यद्वातज्वरमात्रं बोधयन्ति जृम्भादयः,न तु वातस्य रूक्ष–शीत–धातुक्षया-ऽऽवरणादिजन्यत्वरूपविशेषं बोधयन्ति; इत्यतोऽव्यक्तवातज्वरबोधकत्वादव्यक्तत्वमेव जृम्भादीनामिति जेज्जटवाप्यचन्द्र–माधवकर–कार्तिक–कुण्डादयो [5]व्याचक्षते । अन्ये त्वाहुः–प्रभूताव्यक्तपूर्वरूपसहचरितव्यक्तस्यापि जृम्भादेःपूर्वरूपव्यपदेशः;यथा–[6]माषराशिः;

---

१ – निदानानन्तरीयकत्वात निदानस्योत्तरकालवर्तित्वात् । २ - संमूर्च्छना अभिव्याप्तिः सम्मेलनं वा । ३ – व्याधेर्जातिर्ज्वरत्वादिः । बुभूषा – भवितुमिच्छा, भावः सत्ता । वातादीनां मध्ये क आत्मा यस्या सौ किमात्मस्तस्य भावः किमात्मकत्वम् । लक्ष्यतेऽवगम्यते । ४ – प्रसज्येत – आपद्येत । ५ – व्याचक्षते व्याख्यां कुर्वन्ति । ६ – यथा बहुषु माषेषु पार्थक्येन सत्स्वपि माषराशौ माषराशिरित्येव व्यवहारः, एवं बहुभिश्छत्रिभिः सार्कं छत्ररहितानामपि केषांचित् वर्तमानत्वाच्छत्रिणोगच्छन्ति इति वदन्त्येव जनास्तथैव प्रचुराव्यक्तश्रमादिपूर्वरूपसंगिनो जृम्भादेरपि पूर्वरूपमितिसंज्ञा ।

* "यथायथं यद्यस्य व्याधेर्ज्वराद्यन्यतमस्य आत्मीयमात्मीयम्, अतश्च प्राग्रूपं त्रिधा दृश्यते – किंचिच्छारीरं, किंचिन्मानसं, किंचिच्छारीरमानसं चेति । तत्र शारीरं यथा – ज्वरस्या – ऽऽलस्यास्यवैरस्य – गात्रगौरव – जृम्भासास्त्रा–ऽकुलाक्षतेत्येवंप्रायम्, मानसं च – अरतिर्हितोपदेशेष्वक्षान्तिरिवंप्रायम्, किंचिच्छारीरमानसं यथा – प्रीतिरम्लेपटूषणे, द्वेषः स्वादुषु भक्ष्येष्वित्येवंप्रायम्, शारीरमानसदोषजनितत्वात्" इति वाग्भटटीकायामरुणदत्तः[वा.नि. स्था. अ. १]

छत्रिणो गच्छन्त्येवमादि । न च[1] व्यक्तत्वेन रूपाद्भेदः, नियमेन पूर्वरूप-रूपयोर्भावि-वर्तमान-व्याधिबोधकत्वादिति । तत्र विशिष्टपूर्वरूपं रूपावस्थायामनुवर्तत एव, तस्यैवाभिव्यक्तस्य रूपत्वात्; न तु दोषदूष्य-संमूर्च्छनावस्थाजनितं रोमहर्ष-बाल-प्रद्वेषादिकं नियमेनानुवर्तते, यद्यनुवर्तेत तदा सर्वज्वराणामसाध्यत्वं प्रसज्येत । एतदभिप्रायेण, "पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः"—इति [ च. इ. स्था. अ ५ ] चरकवचनमित्याहुः । तदेवं द्विविधे पूर्वरूपे व्यवस्थिते सामान्यपूर्वरूपमाह—प्राग्रूपमित्यादि । येन=श्रमादिना, उत्पित्सुः=[2]सामग्रीसाकल्यादुत्पादेच्छुः, आमयो=रोगः, दोषविशेषेण=वातादिजन्यासाधारणवैपथ्वादिना, अनधिष्ठितोऽसंबद्धो, लक्ष्यते=ज्ञायते, तत्प्राग्रूपमिति । विशिष्टप्राग्रूपमाह—लिंगमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथमिति । प्राग्रूपमित्यनेन पूर्वोक्तेन संबन्धः; लिंगं=लक्षणम्, अव्यक्तं=नात्यभिव्यक्तम् अत्र हेतुरल्पत्वादणुत्वात्, नत्वावरणादियोगादव्यक्तमित्यर्थः; यथायथं=यस्य व्याधेर्यद्रूपं तदेवाव्यक्तं तस्य पूर्वरूपमित्यर्थः । अन्ये तु पूर्वरूपलक्षणमाहुः—"स्थान-संश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम् । दोषाः कुर्वन्ति यल्लिंगं पूर्वरूपं तदुच्यते"—इति । तन्नातियुक्तम्, राजयक्ष्मणः पूर्वरूपस्य तृण—केश—निपातादेरदृष्टजन्यस्याव्यापकत्वात् । यदाह चरकः—"यक्ष्मिणां घुणकेशानां तृणानां पतनानि च । प्रायोऽन्नपाने केशानां नखानां चाभिवर्धनम्"—इति [ च. चि. स्था. अ. ८ ] । न च तदपि दोषजम्, दोषाणां तृणादिभिरसंबन्धात्; असंबद्धस्य च भावस्य[3] कारणत्वेनादृष्टत्वात्, परम्परया तु संबन्धकल्पनयाऽतिप्रसंगात्[4], सर्वं सर्वस्य कारणं स्यात् एतद्दोषपरिजिहीर्षयैव[5] परमकुशलेन वाग्भटेन अदृष्ट—दोषज—सर्व—पूर्वरूपोपसंग्राहकं येनेति पदं निबद्धमिति मत्वा तदीयपूर्वरूपलक्षणमेव माधवकरो लिखितवान् । संक्षेपतस्तु लक्षणम्—"भावि-व्याधि-बोधकमेव लिङ्गं पूर्वरूपम्" इति । एवकारेण निदानोपशययोः संप्राप्तेश्च दोषेतिकर्तव्यतारूपाया व्यवच्छेदः[6], तेषां [7]तज्जातीयानामुत्पन्नानुत्पन्न—व्याधिबोधकत्वात् । तथा हि निदानं मृद्भक्षणरूपं भाविपाण्डुरोगमनुपशयरूपं च वर्तमानविशिष्टव्याधिं बोधयति, उपशयोऽपि पूर्वरूपावस्थाप्रयुक्तो भाविविशिष्टव्याधिं ज्ञापयति, रूपावस्थाप्रयुक्तश्च वर्तमानविशिष्टव्याधिं ज्ञापयति; संप्राप्तिश्च पूर्वरूपस्य मध्याह्लादावुत्पत्ति—प्रकोपाभ्यां-

---

१ – व्यक्तत्वेन जृम्भादेरभेदो रूपाद्भवति न भवतीत्यर्थः । यतो हि इदमावश्यकं यत् पूर्वरूपस्य भाविव्याधिबोधकत्वं स्यात् रूपस्य च वर्तमानव्याधिबोधकत्वम् । यद्येवं न स्यात्तर्हि न तत् पूर्वरूपम् रूपं च । २ – सामग्रीसाकल्यात्कारणसमूहात । ३ – भावस्य पदार्थस्य । ४ – अतिप्रसङ्गादतिव्याप्तेः । ५ – जिहीर्षया हतुमिच्छया । ६ – व्यवच्छेदो-भेदः । ७ – तज्जातीयानां तत्प्रकाराणां निदानादीनामित्यर्थः ॥

भविष्यद्विशिष्टव्याधिं, रूपस्य[1] च मध्याह्नप्रकोपादिना वर्तमानविशिष्टव्याधिंज्ञापयति; इत्येषामुत्पन्नानुत्पन्न-व्याधिबोधकत्वम् । ननु, यदा पूर्वरूपविशेषं स्मृत्वोत्पन्नव्याधेर्विशेषावधारणं तदा पूर्वरूपमपि वर्तमानव्याधिबोधकम् । यथोक्तं रक्तपित्त-प्रमेह-रूप-सन्देहे चरकेण—"हारिद्रवर्णं रुधिरं च मूत्रं विना प्रमेहस्य हि पूर्वरूपैः" ( च. चि. स्था. अ. ६ )-इत्यादि । अत्रोच्यते, किं व्याधिजन्मनः पूर्वं पूर्वरूपं गृहीतं न वा ? आद्ये[2] भाविव्याधिबोधकत्वमेव; द्वितीये स्मरणोत्पत्तिरेव न स्यात्, अनुभवाभावात्[3] । अथोच्यते,-पूर्वरूपं दन्तादीनां मलाढ्यत्वादिरूपं स्वरूपेणानुभूतमेव, किन्तु *प्रमेहपूर्वरूपतया न[4] प्रतिभातम्; उत्पन्ने तु पूर्वरूपम् तत्स्मृतं प्रमेह विशेषमवधारयति । एवं तर्हि पूर्वरूपस्मरणं कारणम्; न तु पूर्वरूपं, रूपावस्थायां तस्य व्यपगतत्वात् । स्मरणं[5] न प्रमाणमिति चेत्, सत्यं; किन्तु ( पूर्वानुभवजानित संस्कारोपस्थापित ) स्मरणसहकृतं पूर्वरूपं व्याधिविशेषबोधकम्, न तु केवलं स्मरणम्; यथा[6] संस्कारोपस्थापितस्मरणसहकृतं चक्षुः प्रत्यभिज्ञायां प्रागवस्थाविशिष्ट-घटाववोधकं-सोऽयं घट इति, एवं स्मरणवदाप्तोपदेशोऽपि वाच्यम् । तस्य च लिङ्ग-पदेन व्युदासः; भाविपदेन रूपस्य,[7] लिङ्गपदेन चक्षुरादेः, तस्य घटज्ञानादिसाधारणत्वेनालिङ्गत्वात्, असाधारणं हि लिंगं भवति । एतच्च पूर्वरूपमविद्यमानस्यापि व्याधेर्लिंगं भवत्येव; यथा-विशिष्टमेघोदयो वृष्टेः । **इति पूर्वरूपम्** ॥ ५ ॥ ६ ॥

निमित्त, हेतु,आयतन, प्रत्यय,उत्थान और कारण इन शब्दों का जो एक अर्थहोता है, उसे निदान कहते हैं। पूर्व रूप दो प्रकार का होता है,सामान्य और विशेष । जिससे व्याधि मात्रका ज्ञान हो,दोषोंका ज्ञान न हो,उसे सामान्य पूर्वरूप कहतेहैं। और जिससे होनेवाली व्याधि तथा दोष का भी पता लगे उसे विशेष पूर्वरूप कहते हैं। जैसे श्रम, अरति, वैरस्य, अङ्ग मर्द आदि लक्षणों से यही ज्ञान होता है कि अमुक पुरुष को ज्वर आवेगा। वातका,पित्तका, या कफ का,कौन ज्वर आवेगा,यह ज्ञान नहीं होता, इस लिए श्रम आदि,ज्वरके सामान्य पूर्वरूप हुए। और उसी में यदि जँभाई अधिक आती है तो यह जाना जाता है कि वात ज्वर आवेगा। यहां दोष और व्याधि, दोनों का ज्ञान हुआ इसलिए जँभाई को विशेष पूर्वरूप कहते हैं ॥ ५-६ ॥

---

१—'रूपम्' इति पाठान्तरम् ।

२ - आद्ये पूर्वरूपगृहीतमिति पक्षे । ३ - अनुभवाभावात् स्मृतेरनुभवजन्यत्वात् । ४ - न प्रतिभातं न ज्ञातम् ५- स्मरणमिति-यतः प्रमाणमगृहीतग्राहि भवति, स्मरणन्तु गृहीतग्राहि,अतोन तत्प्रमाणम् । ६ - संस्कारेति -- अनुभवजन्यस्मृति हेतुना संस्कारेणोपस्थापितं सम्पादितं यत्स्मरणं तेन सह कृतम् । प्रत्यभिज्ञायामभिज्ञानसमये । यथा - पूर्वं दृष्टघटेन केनचित् पुनरन्यस्मिन्घटे दृष्टे पूर्वदृष्टघटसंस्कारेण तस्य स्मृतिर्जाता यद् प्रथमं मया घटो दृष्टस्तथैवायमपि; ततश्च तत्स्मरण-सहकृतेन चक्षुपान्यघटावबोधस्तथैव स्मरणसहकृतं पूर्वरूपं व्याधिबोधकमिति । ७ - व्युदास इति शेषः, व्युदासोनिरासः । * 'प्रमेहलिङ्गतया' इति पाठान्तरम् ।

## अथ रूपम् । ( Symptoms )

यद्यपि पूर्वरूपानन्तरं संप्राप्तिर्भवति, तथाऽपि व्याधिस्वरूपज्ञानार्थं रूपमाह—

**तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।**
**संस्थानं व्यञ्जनं लिंगं लक्षणं चिह्नमाकृतिः ॥ ७ ॥**

[ वा० नि० अ० १ श्लो० ५ ]

**तदेवेत्यादि** । तदेव पूर्वरूपमेव; व्यक्ततामुद्भूततामिति । ननु व्यक्तत्वं पूर्वरूपस्य किं [1]कार्त्स्न्येन, एकदेशेन वा ? आद्ये सर्वज्वराणामसाध्यत्वं स्यात्, यदुक्तं चरके—"पूर्वरूपाणि सर्वाणि" ( च. इ. स्था. अ. ५ )–इत्यादि; द्वितीये हि "जृम्भाऽत्यर्थं समीरणात् । पित्तान्नयनयोर्दाहः" ( मा. ज्व. नि. श्लो. ६ )–इत्यादेरपि पूर्वरूपस्य रूपत्वप्रसङ्गः । नैवम्, अनभ्युपगमान्न कृत्स्नस्य नाप्येकदेशस्य, किन्त्वनिर्धारितैकत्वानेकत्वविशेषस्य पूर्वरूपमात्रस्य व्यक्तस्य व्याधिलिङ्गत्वम्; यथा–तार्ण–पार्णादिविशेषविरहेण धूममात्रस्य वह्निबोधकत्वम् । एवं व्यवस्थिते यदा सर्वस्याभिव्यक्तिस्तदा न साध्यत्वम्, अन्यथा तु साध्यत्वम् । न च जृम्भादेरूपत्वप्रसङ्गः; तस्य प्रागेव व्यक्तत्वात्; अव्यक्तं सद्व्यक्ततां यातं तस्य *रूपत्वेनाभिधानात्, अपरप्रभूताव्यक्तालिङ्गसहचरितत्वेन पूर्वरूप–रूपयोरसमानकालत्वेन च रूपत्वायोगादिति[2] । **ईश्वरसेनस्त्वाह**,–÷"व्याधेः स्वरूपं यद्व्यक्तं तद्रूपम्"–इति । तन्न, विकल्पासहत्वात्[3] । तथाहि–स्वरूपमिति किं स्वं रूपं स्वरूपम् ? [4]आहोस्वित्स्वीयं रूपम् ? स्वीयोऽपि धर्मः, स्वीयं कार्यं वा ? । न तावत्स्वरूपम्, स्वात्मनि क्रियाविरोधात् । रूपं हि [5] व्याधिप्रतिपत्तिनिमित्तमुक्तम्, तच्चेत् व्याधिस्वभाव एव तर्हि व्याधिस्वभावादेव व्याधिस्वभावः प्रतीयत इति व्यक्तः स्वात्मनि क्रियाविरोधः । नापि धर्मः चरकोक्तकृष्ण-त्वङ् नख-विण्-मूत्रत्वादेरर्शोरूपत्वानुपपत्तेः । नहि कृष्ण-त्वङ्-नखादिकमर्शोधर्मः, अतन्निष्ठत्वात्, धर्माणां च धर्मिनिष्ठत्वात्,

---

१ – कार्त्स्न्येन सम्पूर्णतया । अनभ्युपगमात् – अस्वीकारात् । अनिर्धारितोऽनिश्चितः । तार्णस्तृणजन्यः । पार्णः पर्णजन्यः । ÷ धूममात्रेणाग्नेर्बोधो नतु तत्र तृणपर्णादिजन्यत्वनियम इति भावः । २ – जृम्भादेरिति शेषः । ३ – कस्यचिद् पक्षस्यापि सहनायोग्यत्वात् । ४ – आहो इति विकल्पे, स्वित् प्रश्ने । ५ – स्वात्मनि क्रियाविरोधमेव व्यक्तीकरोति – रूपमित्यादिना–प्रतिपत्तिर्ज्ञानम् । व्यक्तः स्पष्टः । स्वात्मनिक्रियाविरोधस्यान्यदुदाहरणं यथा – अग्निनाग्निदाहः अनुपपत्तेरसङ्गतेः । अतन्निष्ठत्वात् – तस्मिन्नर्शसि कृष्णत्वङ्नखादेरवर्तमानत्वात्, किन्तु कृष्णत्वङ्नखादिरर्शसो रूपमित्यर्थः ।

* 'रूपाभिधानत्वाभ्युपगमात्' इति पाठान्तरम् । × व्याधेः स्वरूपमव्यक्तं पूर्वरूपं, यद्व्यक्तं तद्रूपमिति पाठान्तरम् ।

अन्यथाऽतिप्रसङ्गात्[] । नापि कार्यम्, उपद्रवादेरपि रूपत्वप्रसङ्गात् । तदपि कृच्छ्रसाध्यासाध्यव्याधेर्लिङ्गमिति चेत् । नैवम्, असाध्यत्वादेरेव तल्लिंगं, न तु व्याधेः; *तस्य[1] पूर्वमेव ज्ञातत्वाद्भेदेनोपादानाच्च । तदुक्तम्,–"सोपद्रवारिष्टनिदानलिंगो- निबध्यते रोगविनिश्चयोऽयम्"–इति । ननु उपद्रवो न व्याधेः कार्यं किन्तु व्याध्यारम्भकदोषस्य । यदुक्तं सुश्रुते–"सतन्मूलमूल एवोपद्रवसंज्ञकः"–इति ( सु. सू. स्था. अ. ३५ ) । व्याचक्षते च टीकाकृतः–"तन्मूलं तस्य व्याधेर्मूलं दोषरूपं मूलं यस्य स तन्मूलमूलः"–'इति । नैवम्, अपचारेण[2] मूलभूतदोषोपबृंहणलब्ध बलश्चेद्व्याधिरुपद्रवं करोति तेन ऽन्मूलमूल' इत्युक्तवान् । अत एवाह चरकः– "कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति" (च. नि. स्था. अ. ८ ) इत्यादि। सर्वमेवैतत्स्वरूपशब्दस्य वाच्यं [3]क्वचित्किञ्चिदिति, तथा च सति न व्यभिचार- इति केचित् । तथाऽपि व्यवस्थामात्रं स्यान्न तु लक्षणम्, एकस्य सकलरूपसंग्राहकस्य []धर्मस्याभावादुपद्रवस्यापि व्याधिस्वरूपत्वापत्तेश्चेति । "तस्मात् उत्पन्नव्याधिबोधकमेव लिङ्गं रूपम्" इति लक्षणम् । 'उत्पन्न' इति पदं पूर्वरूपव्यवच्छेदार्थम्, एवकारेण निदानसम्प्राप्त्युपशया व्यवच्छिद्यन्ते, तेषामुत्पन्नानुत्पन्न–व्याधिबोधकत्वात्; तच्च दर्शितमेव, लिङ्गपदेन चक्षुरादेर्व्युदासः, यन्मते व्याधिजन्मरूपा संप्राप्तिस्तन्मते तस्या लिङ्गपदेन व्यवच्छेदः, नहि सा व्याधिज्ञाने लिङ्गम्, किन्तु कारणमात्रम् । शास्त्रे व्यवहारार्थं निदानवल्लक्षणार्थं च रूपपर्यायानाह— संस्थानमित्यादि । ननु, रूपेण+ व्याधिर्ज्ञायते, न च रूपव्यतिरेकेण[4] व्याधिरुपलभ्यते, यतो मिलिता अरुच्यादय एव ज्वरः, कासाद्येकादशरूपाण्येव राजयक्ष्मा ।–उच्यते नैवम्, तथाविधदोष–दूष्य–संमूर्च्छनाविशेषो ज्वरादिरूपो व्याधिः,

---

[] अतिप्रसंगादतिव्याप्तेः ।

१ – तस्य व्याधेः । भेदेनोपादानाच्च व्याध्युपद्रवयोः पार्थक्येन कथनात् ।

२ – मूलभूतदोषाणामुपबृंहणेन वृद्ध्या लब्धंबलं येन स व्याधिः ।

३ – व्याधेः स्वरूपमिति रूपलक्षणे स्वरूपपदेन न नियमेन स्वीयरूपस्य, धर्मस्य, कार्यस्य वा ग्रहणं कार्यंकिन्तु सङ्गतिवशात् क्वचित् स्वरूपस्य, क्वचित् धर्मस्य, कुत्रचित्कार्यस्य स्वीकारे न दोषः इति भावः व्यभिचारोदोषः ।

४ – व्यतिरेकोऽभावः भिन्नत्वं वा ।

* तस्य कृच्छ्रसाध्यासाध्यत्वस्य पूर्वरूपेणैव ज्ञातत्वात्' इति पाठान्तरम् । 'स्वरूपशब्दवाच्यं कार्यं क्वचिदाश्रीयते' इति पाठान्तरम् ।

[] धर्मस्याभावात्, धर्मस्यान्वयव्यतिरेकेण तन्निरुक्तत्वात्, उपद्रवस्य च' इति पाठान्तरम् ।

+ 'ननु रूपेण व्याधिर्ज्ञायेत, यदि रूपव्यतिरेकेणान्यो व्याधिरुपलभ्येत' इति पाठान्तरम् ।

तत्कार्याश्चारुच्यादयः; =किंवा [ किञ्च ] अरुच्यादय एव प्रत्येकशोरूपाणि तत्समुदायो व्याधिः; यतः समुदायिभ्योऽन्य[1] एव समुदायः, यथा–खदिरतरूणां वनमिति । अन्ये तु राहोः शिरः, शिलापुत्रस्य शरीरमितिवदसत्यपि भेदे भेदविवक्षया समर्थयन्ति; नैयायिकास्तु तत्रापि भेद ()मापादयन्ति । [2]ननु, "विकारो दुःखमेव च"–इति ( च. सू. स्था. अ. ९ ) चरकवचनाद्दुःखस्यात्मगुणस्य कथमरुच्यादिसमुदायत्वम् ? नैवम्, दुःखयतीति दुःखमिति व्युत्पत्त्या दुःखहेतोर्धातुवैषम्यादेर्व्याधित्वस्वीकारात् । अरुच्यादयस्तु स्वरूपेण विकारा एव, यदाऽन्यप्रतिपादकास्तदा लिङ्गान्युच्यन्ते । यदाह चरकः,–"ज्ञानार्थं यानि चोक्तानि [3]व्याधिलिङ्गानि संग्रहे । व्याधयस्ते [4]तदात्वे तु लिंगानीष्टानि नामयाः"–इति ( च. नि. स्था. अ. ) । इति रूपलक्षणम् ॥ ७ ॥

भा० टी०—व्याधि का पूर्वरूप ही प्रकट होने पर व्याधि का रूप कहलाता है । संस्थान, व्यञ्जन, लिङ्ग, लक्षण, चिह्न और आकृति, ये शब्द रूप शब्द के पर्यायवाची हैं ॥७॥



---

१ – खदिरतरूणां वनमिति – यद्यपि मिलिताः खदिरतरव एव वनम् न खदिरतरुभ्योऽन्यद्वनमिति तथापि खदिरवृक्षसमुदाये – वने, प्रत्येकखदिरवृक्षत्वभेदोऽस्त्येव एवमरुच्यादिसमुदाये व्याधौ ज्वरे, तत्समुदायिनि अरुच्यादौ च परस्परं प्रतीयत एव भेदः । शिलापुत्रः " लोढ़ा " इति लोके । समर्थयन्ति निष्पादयन्ति । नैयायिकास्त्विति – तत्रापि – राहोः शिर इत्यत्र, शिलापुत्रस्येत्यत्र च राहुत्वशिरस्त्वयोरेवं शिलापुत्रत्वशरीरत्वयोर्धर्मवशात् भेदं प्रतिपादयन्ति ! नहि सर्वस्यैक एव धर्मो भवति ।

२ – नन्विति "विकारो दुःखमेव च" इत्यनेन चरके दुःख शब्दो व्याधिपर्याय उक्तः, व्याधिश्चारुच्यादिसमुदायः । दुःखंह्यात्मगुणः । यदुक्तं – कारिकावल्याम् – बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा । धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश, बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंख्यापरिमाणपृथक्त्वसंयोगविभागभावनाधर्माधर्माः – इति चतुर्दश आत्मनो गुणाः । अरुच्यादिश्च शारीरिकः । तत्कथमात्मगुणस्य दुःखस्य शारीरिकारुच्यादिसमुदायत्वमिति प्रश्नः । नैवमित्युत्तरयति – अयमभिप्रायः – चरकोक्तदुःख शब्दस्य दुःखयतीतिदुःखमितिव्युत्पत्त्या दुःखकरस्य धातुवैषम्यादेर्व्याधित्वस्वीकारः । आत्मगुणस्य च दुःखस्य पीडारूपंदुःखमर्थः । एवमनयोः परस्परं भिन्नार्थत्वान्न कश्चिद्दोष इति ।

३—"व्याधीनां लिङ्गसंग्रहे" इति पाठान्तरम्।

४ तदात्मेतु इति पाठान्तरम् ।

= अस्याग्रे कस्मिंश्चित् पुस्तके "एवं कासादिरूपातिरेकेणैव यक्ष्मा, तत्कार्याणि कासादय इति " इत्यधिकः पाठ उपलभ्यते ।

() "उपपादयन्ति" इति पाठान्तरम् ।

## अथोपशयानुपशयौ ।

उपशयमाह—

हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ।
औषधान्नविहाराणामुपयोगं सुखावहम् ॥ ८ ॥
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।
विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः ॥ ९ ॥

[ वा० नि० अ० १ श्लो० ६—७ ]

हेतुव्याधीत्यादि । हेतुर्बाह्य आभ्यन्तरश्च, व्याधिर्ज्वरादिः, एतयोर्हेतुव्याध्योर्व्यस्त-समस्तयोर्विपर्यस्ता=[1]विपरीताः, एतयोरेव व्यस्त-समस्तयोर्विपर्यस्तार्थकारिणो=निदानसमानधर्मिणोऽपि प्रभावाद्रोगप्रशमकारिणः, एवंविधा ये औषधान्नविहारा भेषजाहाराचारास्तेषामुपयोगमाचरणं सुखावहं सुखकरमुपशयं विद्यादुपशयाख्यं जानीयाद्व्याधेः । तस्य पर्यायमाह—स हि सात्म्यमिति स्मृत इति । चरकेऽप्युक्तम्,—"सात्म्यार्थो ह्युपशयार्थः" इति ( च. नि. स्था. अ. १ ) हिशब्दः पादपूरणे । सुखावहमिति सुखं रोगनिवृत्तिलक्षणम्; यथा व्यपदिशन्ति लोके—भारापगमे सुखिनः संवृत्ताः स्म इति, तत्सुखमावहति सम्यगायत्याऽनुबन्धेन च करोतीति सुखावहम् । एतेन सदाहतृष्ण—नवज्वरिणः शीतलजलपानं तत्कालसुखकरमपि नोपशय ( करम् ) इति तात्पर्यार्थः । अत्र, औषधान्नविहाराणामित्युपलक्षणम्, तेन देश—कालावपिबोद्धव्यौ । अत एव वृद्धवाग्भटेन व्याध्यादिविपरीतमभिधाय—"एतेन देशकालावपि व्याख्यातौ"—( वृ. वा. नि. स्था. अ १ ) इत्याख्यातम् । सुदान्तसेनोऽप्याह,—'[2]सुखानुबन्धो यो हेतुव्याध्यादिविपरीतकः । देशादिकश्चोपशयो ज्ञेयोऽनुपशयोऽन्यथा"—इति । संक्षेपतस्तु लक्षणम्—"औषधादिजनितः सुखानुबन्ध उपशयः" इति । स्रक्-चन्दन-वनिताद्युपभोगजनित—सुखनिवृत्त्यर्थमौषधादिपदम्, अनुबन्धशब्दश्च अपथ्यजनिततदात्वसुखानिवृत्त्यर्थः । एतदप्युदाहरण दर्शनपरं, न तु लक्षणम्; औषधादीनां *हेत्वादिविपरीतानां परस्परव्याभिचारेण

---

१—विपरीता नाशकर्तारः । व्यपदिशन्ति व्यवहरन्ति । संवृत्ता जाताः । आयत्या—उत्तरकालेन । अनुबन्धेन-सम्बन्धेन, चिरकालस्थायित्वेन ।

२ – सुखमारोग्यमनुबध्नाति चिरकालं व्याप्य करोतीति सुखानुबन्धः । * 'हेतुविपरीतादीनां च इति पाठान्तरम् ।

लक्षणत्वायोगात्[1] । तस्मात् 'सम्यग्व्याधिजदुःखोपशमहेतुरुपशयः' 'सात्म्यमुपशयः' इति वा लक्षणम्; औषधजनितः सुखानुबन्ध उपशयः' इति वा लक्षणम्; चरके-आहाराचार-देश-काल-लंघनादीनां द्रव्याद्रव्यभूतानामौषधत्वेनाभिधानात् । अथैषामुदाहरणानि । तत्र ( हेतुविपरीतानि ) औषधं यथा-शीत ( कफ ) ज्वरे शुण्ठ्याद्युष्णं भेषजम् । यदुक्तम्, [2]"शीतेनोष्णकृतान्रोगान् शमयन्ति भिषग्विदः । ये च शीतकृता रोगास्तेषामुष्णं भिषग्जितम्"-इति (च.चि.स्था.अ.३) अन्नं यथा-श्रमानिलजे ज्वरे रसौदनः[3] । विहारो यथा-दिवास्वप्नोत्थे कफे रात्रौ जागरणमिति । ( अथ व्याधिविपरीतानि ) । औषधं यथा-अतिसारे स्तम्भनं पाठादि, तथा शिरीषो विषं हन्ति, खदिरः कुष्ठम्; हरिद्रा प्रमेहामिति; नैते दोषमपेक्षन्ते प्रभावाद्रोगप्रशमकारिण इति । वाप्यचन्द्रस्त्वाह,-"ज्वरादिव्याधिहरं यद्द्रव्यं तदपि [4]दोषप्रत्यनीकम्, किंतु दोषप्रत्यनीकादस्यायं भेदः-यद्दोषप्रत्यनीकं तन्नावश्यं व्याधिहरम्; यथा-वमनलंघने कफहरे न कफगुल्मं हरतः । उक्तं हि-"कफे लंघनसाध्ये तु कर्तरि [5]ज्वरगुल्मयोः । तुल्येऽपि देशकालादौ लंघनं न च संमतम्"-इति । तथा-"न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीडितम्"-इति ( सु. चि. स्था. अ. ३३ ) । "यत्तु व्याधिहरं तदवश्यंदोषहरम्, तद्व्याधिं शमयत्तदारम्भकदोषमपि शमयतीति । अन्यथा स रोगो जित एव न स्यात्, [6]कारणतादवस्थ्यात्" इति । तन्नातिसङ्गतम्, इत्यन्ये; यतो दोषस्तत्र समवायी निमित्तं वा ? न च समवायिनिमित्ताभावप्रयुक्तो नियमेन कार्याभावः, किंत्वसमवायिनिमित्ताभावप्रयुक्तोऽपि, यथा-कपालमालासंयोगस्यासमवायिकारणस्य विनाशादपि घटाभावः । तथा-रोगेऽपि संप्राप्तिलक्षणस्य संयोगस्य विनाशाद्रोगस्यापि विनाशः, दोषस्तु स्वतः क्रियान्तरेण वा निवर्तते; किंच यदि व्याधि प्रत्यनीकमवश्यं दोषं निवर्तयेदिति स्वीक्रियते, तदोभयप्रत्यनीकाद्भेदो दुरुपपादः स्यादिति । ननु, यदि निमित्तकारणं दोषास्तत्कथं तदारब्धविकारे वमनादिना दोषहरणं विधीयते ? नहि दण्डकुलालाद्युच्छेदे घटोच्छेद इति । उच्यते, यत्र यावन्निमित्तकारणस्थायिकार्यं तत्र निमित्तकारणोच्छेदादपि कार्यनाशः; यथा-वर्तितै-

१-यत्रौषधजनितसुखं न तत्रान्नजनितसुखं, एवंयत्रान्नजनितसुखं तत्र विहारजनितदुःखंस्यादिति लक्षणत्वस्य अयोगादसम्बन्धात् ।

२-भिषक्तु विदो ज्ञानिनोभिषग्विदः । भिषाजां वैद्यानाम् जितं जयो यस्मात्तद् भिषग्जितमौषधमित्यर्थः ।

३-रसौंदनः रसेनमांसरसेनसहित ओदनोरसौदनः ।

४-दोषप्रत्यनीकं दोषविनाशकम् । ५-ज्वरगुल्मयो र्मिलितयोरित्यर्थः ।

६--कारणतादवस्थ्यादिति कारणस्य रोगारम्भकदोषस्य तादवस्थ्यं तस्मात् । क्रियान्तरेण अन्येन चिकित्सितेन । रुदुपपादो दुर्लभः ।

लनाशादपि प्रदीपनाशः; तथाभूताश्च दोषाः प्रायश इति । अन्नं यथा–अतिसारे स्तम्भनं मसूरादि । विहारो यथा–उदावर्ते [1]प्रवाहणम्; मन्त्रौषधिधारण–बल्युपहारनियम–प्रायश्चित्त–होम–गुरु–देव–शुश्रूषादयोऽपि व्याधिविपरीता विहारा-इति वाप्यचन्द्रः । ( अथ हेतुव्याधिविपरीताश्रितानि ) । औषधं यथा–वातशोथे दशमूलं वातहरं शोथहरं च । यदुक्तं चरके षड्विरेचनशताश्रितीयेऽध्याये *"पाटला" इत्यादि यावत्–"दशेमानि शोथहराणि" इति (च. सू. स्था. अ. ४) अन्नं यथा,-वात-कफ-ग्रहण्यां तक्रम्, शीतवातोत्थे ज्वरे पेया, सा ह्युष्णवीर्यत्वाद्वातं-हन्ति प्रभावाज्ज्वरं च । यदुक्तं चरके,–"ज्वरघ्नो ज्वरसात्म्यत्वात्" इति ( च. चि. स्था. अ. ) सुश्रुते च,–ज्वरे चैवातिसारे च यवागूः सर्वदा हिता "– इति (सु. उ. त. अ. ४०) । विहारो यथा–स्निग्धदिवास्वप्नप्रजातायां तन्द्रायां रूक्षं तन्द्राविपरीतं रात्रिजागरणमिति । ( अथ हेतुविपरीतार्थकारीणि ) औषधं यथा–पित्तप्रधाने व्रणशोथे पित्तकर उष्ण उपनाहः[2] । अन्नं यथा–पच्यमाने, व्रण-शोथेऽन्नं विदाहि । विहारो यथा–वातोन्मादे त्रासनामिति । ( अथ व्याधिविपरीतार्थकारीणि ) । औषधं यथा–छर्द्यां वमनकारकं मदनफलादि । अन्नं यथा–अतिसारे (विरेचनार्थं) विरेचनं+क्षीरम् । विहारो यथा–छर्द्यां वमनार्थं [1]प्रवाहणमिति । ( अथ हेतुव्याधिविपरीतार्थकारीणि ) । औषधं यथा–[3]अग्निप्लुष्टे उष्णोऽगुर्वादिलेपः; विषे वा विषम् । अन्नं यथा–मद्यपानोत्थे मदात्यये मदकारकं मद्यम् । विहारो यथा–व्यायामजनितसंमूढवाते[4] जलप्रतरणरूपव्यायाम इति । ननु, छर्द्यां-बहुश्लेष्मजायां 'वमनयोग्यायां यदि वमनं न क्रियते तदा [5]चिरानुवर्ती[]रोगोऽनुच्छेद्यो वा स्यात्, ततश्च वमनं प्रयुक्तं दोषप्रत्यनीकमेव भवति । तदुक्तं सुश्रुते,- "छर्दिषु बहुदोषासु वमनं हितमुच्यते"– इति() । एवमग्निप्लुष्टेऽप्युष्णक्रियया रक्तस्य विलयनेन स्थानान्तरगमनाद्धेतुप्रत्यनीकतैव । अन्यथा, "रक्तं दाहप्रकुपितं-तत्रस्थं पाकमारभेत" । यदुक्तं, सुश्रुते—"अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति । ततस्तेनैव वेगेन [6]पित्तमस्याप्युदीर्यते–" इति ( सु.सू. स्था. अ. १२)

---

१ – प्रवाहणं कुन्थनम् "काखना" इतिभाषायाम् । २ – उपनाहः प्रलेपः । ३ – अग्निप्लुष्टेऽग्निदाहे । ४ – संमूढवाते प्रतिलोमभावमापन्ने वाते । ५ चिरानुवर्ती दीर्घकालस्थायी । रोगानुच्छेदो रोगविनाशः । ६ – उदीर्यते वर्धते ।

* पाटलाग्निमन्थविल्वस्योनाककाश्मर्यकण्टकारीबृहतीशालपर्णीपृश्निपर्णीगोक्षुरका इति दशेमानिशोथहराणि भवन्ति । च. सू. स्था. ।

() अस्याग्रे कस्मिंश्चित् पुस्तके 'तथा आमातिसारे क्षीरस्य विरेकित्वेनामनिःसरणाद्धेतुप्रत्यनीकमेव भवति इत्यधिकः पाठः दृश्यते ।

\+ तथाचोक्तं चरके – बहुदोषस्य दीप्ताग्नेःसप्राणस्य न तिष्ठति । पैत्तिको यद्यतीसारःपयसा तं विरेचयेत्' – इति । 'शमनयोग्यायाम्' इति पाठान्तरम् । [] " विकारानुवृत्तिः, रोगानुच्छेदो वा स्यात् – इति पाठान्तरम्

पित्तश्लेष्माधिको यस्य सन्निपातःप्रकुप्यति ॥ अन्तर्दाहो बहिः शीतं तस्य तन्द्रा च बाधते । तुद्यते दक्षिणं पार्श्वमुरःशीर्ष–गलग्रहाः ॥ निष्ठीवेत्कफपित्तं च तृष्णा कण्डूश्च जायते । विड्भेद–श्वास–हिक्काश्च बाधन्ते सप्रमीलकाः ॥ विभु–फल्गू च तौ नाम्ना सन्निपातावुदाहृतौ । श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति ॥ तस्य शीतज्वरो निद्रा क्षुत्तृष्णा पार्श्वनिग्रहः । शिरोगौरवमालस्यमन्यास्तम्भ–प्रमीलकाः ॥ उदरं दह्यते चास्य कटिर्वस्तिश्च दूयते । सन्निपातः स विज्ञेयो मकरीति सुदारुणः॥ वातोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्याति । तस्य तृष्णा-ज्वर–ग्लानि–पार्श्वरुग्दृष्टिसंशयाः ॥ पिण्डिकोद्वेष्टनं दाह ऊरुसादो बलक्षयः । सरक्तं चास्य विण्मूत्रं शूलं निद्रा[1]विपर्ययः ॥ निर्भिद्यते गुदं चास्य वस्तिश्च परि-क्र[2]त्यते । आयम्यते भिद्यते च हिक्कते विलपत्यपि ॥ मूर्च्छति स्फार्यते रौति नाम्ना विस्फुरकः स्मृतः । पित्तोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ॥ तस्य दाहो ज्वरो घोरो वहिरन्तश्च वर्धते । शीतं च सेवमानस्य कुप्यतः कफ-मारुतौ ॥ ततश्चैनं प्रधावन्ते हिक्का-श्वास-प्रमीलकाः। विसूचिका पर्वभेदः प्रलापो गौरवं क्लमः ॥ नाभिपार्श्वरुजा तस्य स्विन्नस्याशु विवर्धते । स्विद्यमानस्य रक्तं च स्रोताभ्यः संप्रवर्तते ॥ शूलेन पीड्यमानस्य तृष्णा दाहश्च वर्धते । असाध्यः सन्निपातोऽयं शीघ्रकारीति कथ्यते ॥ नहि जीवत्यहोरात्रमेतेनाऽऽविष्टविग्रहः । कफोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ॥ तस्य शीतज्वर-स्वप्न-गौरवाऽऽलस्य-तन्द्रयः । छर्दि-मूर्च्छा-तृषा-दाह-तृप्त्यरोचक-हृद्ग्रहाः ॥ ष्ठीवनं मुखमाधुर्यं श्रोत्र-वाग्दृष्टि-निग्रहः । श्लेष्मणो निग्रहं चास्य यदा प्रकुरुते भिषक् ॥ तदा तस्य भृशं पित्तं कुर्यात्सोपद्रवं ज्वरम् । निगृहीते तु पित्ते च भृशं वायुः प्रकुप्यति ॥ निराहारस्य सोऽत्यर्थं मेदोमज्जास्थि * बाधते । अथात्र स्नाति भुङ्क्ते वा त्रिरात्रं नहि जीवति ॥ मेदोगतः सन्निपातः कफ्फणः स उदाहृतः । कामान्मोहाच्च लोभाच्च भयाच्चायं प्रपद्य[3]ते ॥ मध्य[4]हीनाऽधिकैर्दोषैः सन्निपातो यदा भवेत् । तस्य रोगास्त एवोक्ताः प्रायो दोषबलाऽऽश्रयाः॥" इत्यादि । ननु वातादयः परस्परं विरुद्ध[5]गुणाः,

---

१—निद्राविपर्ययो निद्राभावः । २—परिकृत्यते–छिद्यते । ३—प्रपद्यते–उत्पद्यते ।

४—मध्यहीनाधिकैरिति–अत्र कुपितैरिति शेषः । तएवेति—वेपथुनिद्रानाशविष्टम्भदाहगौरवाग्निमान्द्यादयः । दोषबलाश्रया यथा दोषबलं स्यान्मध्यं हीनमधिकं वा तद्दोषबलमनतिक्रम्येत्यर्थः ।

५—यथा वातस्य लघुरूक्षशीतादयो गुणाः, पित्तस्य स्निग्धतीक्ष्णोष्णादयः, श्लेष्मणश्च गुरुशीतस्थिरादयो गुणाः । संभूय मिलित्वा । तुहिनं हिमम् । दहनोऽग्निः ।

---

* धावते इति पाठान्तरम् ।

विरुद्धगुणानां च संभूयैककार्यारम्भकत्वं नोपपद्यते, परस्परोपघातात्तुहिनदहनयोरिव; तत्कथं सान्निपातिकविकारोत्पत्तिरिति । अत्र समाधानमुक्तं दृढबलेन, यथा—"विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् । दोषाः सहज[1]—सात्म्यत्वाद्घोरं विषमहीनिव"—इति ( च. चि. स्था. अ. २६ ) । एतच्चान्ये दूषयन्ति—सहजत्वादित्यनैका[2]न्तिकं, यतः सहजानपि धातून् दोषा उपघ्नन्ति; सात्म्यत्वादित्यपि साध्याविशिष्टं, यतः सात्म्यत्वमबाधकत्वं, तदेव च दोषाणां परस्परं साध्यते । अत्रोच्यते दोषा नोपघ्नन्तीति कोऽयमनुपघातः साध्यते ? विकृतेरकारकत्वम्; अविनाशकत्वं वा ? नाद्यः, दोषाणां परस्परं विकृतिकर्तृत्वात् । यथोक्तं चरके,—"विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा । यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः"—इति ( च. चि. स्था. अ. २६ ) । यथोक्तं वाग्भटेन—"सश्लेष्ममेदः पवनः साममत्यर्थसंचितम् । अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ सक्थ्यस्थिनी प्रपूर्यान्तःश्लेष्मणा स्तिमितेन च । तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ" ( वा. नि. स्था. अ. १५ ) इति । अविनाशकत्वं तु विद्यत एव, धातु—दोषयोः परस्परं च दोषाणां सर्वथोच्छेदप्रतिपादकागमाभावात्, मरणप्रसङ्गाच्च; दोषाणामपि देहधारणकारणत्वात् । तस्मात्सर्वथोच्छेदनिरासाभिप्रायेणैव दृढबलवचनमिह द्रष्टव्यम्; ततः कुतोऽनैकान्तिकता । [3]नचैवं सति विषस्य विषादकर्तृत्वे दृष्टान्तविफलत्वं, विषस्य विषादावान्तरव्यापारस्य प्राणविनाशकत्वात्; नच सर्वात्मना दृष्टान्तो भवतीति । सात्म्यत्वादित्यस्यायमर्थः—सात्म्यत्वेन प्रतीयमानत्वात् । दोषाः परस्परं नोपघ्नन्ति, अनुपघातकत्वेन प्रतीयमानत्वात्; यद्यथ प्रती[4]यते तत्तथा निर्दिश्यते, यथाऽग्निकार्यो धूमोऽग्निकार्यत्वेनेति, तत्कुतः साध्याविशिष्टत्वमिति । चक्रदत्तस्तु सहजसात्म्यत्वादित्येकमेव हेतुं व्याख्यात-

---

१—सहजात् सहोत्पन्नत्वात् सात्म्यत्वादबाधकत्वात् । अहीन् सर्पान् ।

२—अनैकान्तिकमिति—सव्यभिचारो—हेत्वाभासः—दुष्टहेतुरित्यर्थः । सचानैकान्तिकस्त्रिविधः साधारणासाधारणाऽनुपसंहारिभेदात् । अत्र साधारणः सव्यभिचारः । तल्लक्षणन्तु साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिक इति । साध्याविशिष्टं साध्यसमम् । अत्र यदेव साध्यं दोषाणामनुपघातकत्वम् तदेव हेतुरित्यर्थः ।

३—न चैवमिति— ननु विषं तु विषादकारकं न विनाशकम्,अत्र तु दोषा मिथो विनाशका एव तत्कथं घोरं विषमिति दृष्टान्तः सङ्गच्छते । इत्याशङ्कायामाह न चेति—विषस्य यो विषादावान्तरव्यापारस्तस्य प्राणविनाशकत्वादिति—। विषमपि परम्परया प्राणविनाशकमस्त्येवेति । ननु तथापि दृष्टान्तस्य वैयर्थ्यं, दार्ष्टान्तिके—दोषे साक्षात् विनाशकत्वं दृष्टान्ते विषे च परम्परया विद्यते । इत्यत आह न चेति—सर्वात्मना—सर्वांशेन । एकांशेनापि दृष्टान्तस्य सम्भवादित्यर्थः ।

४—प्रतीयते ज्ञायते ।

वान्–सहजं स्वाभाविकं दोषाणां सात्म्यत्वमिति । दृढबलोक्तहेतु[3]द्वयास्वरसेन गयदासस्तु हेत्वन्तरमुक्तवान्– "दैवाद्वा स्वभावाद्वा दोषाणां सान्निपातिके । विरुद्धैश्च गुणैः कश्चिन्नो– पघातः परस्परम्"—इति संक्षेपः ॥१८–२३॥

भा०टी०—सान्निपात ज्वर के लक्षण ये होते हैं–थोड़ी देर में दाह मालूम हो और थोड़ीही देर में जाड़ा। हड्डी, जोड़ और शिर में पीड़ा हो, आँखों से आँसू बहे, आँखें मैली हों या लाल और बिल्कुल खुली रहें या भीतर घुस जाँय,अथवा टेढ़ी हो जाँय। कान में साँय २ आवाज मालूम हो, गले में टूँड जैसा गड़न हो, तन्द्रा, मूर्च्छा, अंड बंड बके, खाँसी, दमा, अरुचि, भ्रम हो, जीभ काली और खर खरी हो जाय, शरीर एक दम सुस्त हो,खून,पित्त और कफ थूँके,शिर को इधर उधर पटके,नींद बिल्कुल न लगे, छाती में दर्द हो, पसीना, मूत्र और मल कई दिनों के बाद थोड़ा निकले, शरीर दोषों से भरे होने से बहुत कृश न मालूम हो, हर वक्त गला कफ से घर घर करे, शरीर में धूमिल और लाल रङ्ग के दिदोरे और चकत्ते देख पड़ें। आवाज़ कम निकले, कान नाक मुंह पके से मालूम हों, पेटभारी हो, दोषों का पाक देर में हो, ॥ १८–२३ ॥



३—सहजत्वं, सात्म्यत्वमिति हेतुद्वयस्य अस्वरसेन दोषरहितत्वेन, सहजत्वे अनैकान्तिकत्वं, सात्म्यत्वे साध्याविशिष्ट– त्वमिति । हेत्वन्तरमन्यविधहेतुम् । भालुकिना सन्निपातस्य निरुक्तिरुक्ता–सङ्गता निचिता दोषाः पातयन्ति कलेवरम् । सम्यं निपातयेद्यस्मात्सन्निपातस्ततो मतः ।

## * अथ अश्विनीकुमारसंहितान्तर्गतायाः *

# सन्निपातकलिकायाः

## त्रयोदशसन्निपातभेदाः



**अथ सर्वेषां सन्निपातानां निदानानि, कोपकालश्च ।**

अम्ल-स्निग्धोष्ण-तीक्ष्णैः कटु-मधुर-सुरा-ताप-सेवा-कषायैः
काम-क्रोधा-ऽतिरूक्षैर्गुरुतर-पिशिता-ऽऽहार-सौहित्य-शीतैः ।
शोक-व्यायाम-चिन्ता-ग्रहगण-वनिता-ऽत्यन्त-सङ्ग-प्रसङ्गैः
प्रायः कुप्यन्ति पुंसां मधुसमय-शरद्-वर्षणे सन्निपाताः ॥ १ ॥

भा०टी०—प्रायः सन्निपात,वसन्त (चैत्र वैशाख) शरद् (कुवार कार्तिक) और वर्षा ( सावन भादों ) ऋतुओं में अधिक होते हैं। कारण विशेषतः सन्निपात के ये हैं। खटाई, चिकना, गरम, तीखा, कडुवा, मीठा, मद्य, घाम, आग,कषायरस, काम, क्रोध, रूखा, देरमें हज़म होनेवाला, मांस, अतिभोजन, ठण्डक, शोक, कसरत, चिन्ता, भूतजनितबाधा, मैथुन ॥ १ ॥

आमोह्याहारदोषात्प्रथममुपचितो हन्ति वह्निं शरीरे,
श्लेष्मत्वं याति भुक्तं सकलमपि ततोऽसौ कफो वायुदुष्टः ।
स्रोतांस्यापूर्य रुन्ध्यादनिलमथ मरुत् कोपयेत्पित्तमन्तः
संमूर्च्छयान्योन्यमेते प्रबलमिति नृणां कुर्वते सन्निपातम् ॥२॥

भा०टी०—भोजन में गड़बड़ी होने से अन्दर वह न पक कर आँव के रूप में इकट्ठा होकर मन्दाग्नि कर देता है। उन दिनों में वह मनुष्य जो कुछ खाता है वह सब कफ हो जाता है। वह कफ वायुद्वारा दूषित होकर वात वाही स्रोतों में भरकर वायु के मार्ग को रोक देता है। बाद वायु पित्त को बिगाड़ देता है । इस प्रकार तीनों दोष परस्पर कुपित होकर और आपस में मिलकर बड़े प्रबल सन्निपात रोग को पैदा कर देते हैं॥२॥

तेषां तन्त्रान्तरे नामानि ।

सन्धिकश्चान्तकश्चैव रुग्दाहश्चित्तविभ्रमः ।
शीताङ्गस्तन्द्रिकश्चैव कण्ठकुब्जश्च कर्णकः ॥ ३ ॥
विख्यातो भुग्ननेत्रश्च रक्तष्ठीवी प्रलापकः ।
जिह्वकश्चेत्यभिन्यासः सन्निपातास्त्रयोदश ॥ ४ ॥

भा०टी०–सन्धिक १अन्तक २रुग्दाह ३चित्तविभ्रम ४ शीताङ्ग५ तन्द्रिक ६कण्ठकुब्ज ७ कर्णक ८ भुग्ननेत्र ९ रक्तष्ठीवी १० प्रलापक ११ जिह्वक १२ अभिन्यास १३, ये तेरह सन्निपात होते हैं ॥ ३–४ ॥

तेषां दिनमर्यादामाह–

सन्धिके वासराः सप्त चान्तके दश वासराः ।
रुग्दाहे विंशतिर्ज्ञेया वह्न्यष्टौ चित्तविभ्रमे ॥ ५ ॥
पक्षमेकं तु शीताङ्गे तन्द्रिके पञ्चविंशतिः ।
विज्ञेया वासराश्चैव कण्ठकुब्जे त्रयोदश ॥ ६ ॥
कर्णके च त्रयो मासा भुग्ननेत्रे दिनाष्टकम् ।
रक्तष्ठीविनि दिग्घस्राः प्रलापे स्युश्चतुर्दश ॥ ७ ॥
जिह्वके षोडशाहानि पक्षोऽभिन्यासलक्षणे ।
परमायुरिदं प्रोक्तं म्रियते तत्क्षणादपि ॥ ८ ॥

भा०टी०–यों तो सन्निपाती मनुष्य बहुत जल्दी मर जाता है परन्तु अधिकसे अधिक जिस सन्निपात का रोगी जितने दिनों तक जीता रहता है वह लिखा जाता है । जैसे— सन्धिक ७ दिन, अन्तक १० दिन, रुग्दाह २० दिन, चित्तविभ्रम २४ दिन, शीताङ्ग १५ दिन, तन्द्रिक २५ दिन, कण्ठकुब्ज १३ दिन, कर्णक ३ मास, भुग्ननेत्र ८ दिन, रक्तष्ठीवी १० दिन, प्रलाप १४दिन ,जिह्वक १६ दिन,और अभिन्यास १६ दिन ॥५–८॥

अथैषां साध्यासाध्यत्वम् ।

संधिकस्तान्द्रिकश्चैव कर्णकः कण्ठकुब्जकः ।
जिह्वकश्चित्तविभ्रंशः षट् साध्याः सप्त मारकाः ॥ ९ ॥

भा०टी-इनमें-सन्धिक १ तन्द्रिक २ कर्णक३कण्ठकुब्जक४ जिह्वक५ चित्तविभ्रंश ६ ये छः सन्निपात साध्य हैं और शेष सात असाध्य हैं ॥ ९ ॥

अथैषां पृथग् लक्षणानि लिख्यन्ते तत्र—

अथ सन्धिकसन्निपातलक्षणम् ।

पूर्वरूपकृत-शूलसंभवं शोषवात-बहु-वेदना-ऽन्वितम् ।
श्लेष्म-ताप-बल-हानि-जागरं सन्निपातमिति सन्धिकं वदेत् ॥ १० ॥

भा०टी०-सन्धिक के लक्षण-पूर्वरूप में शूल हो, शोष, वायु की अनेक पीड़ायें हों, कफ वृद्धि, शरीर गरम रहे, शक्ति कम हो जाय, नींद न आवे ॥ १० ॥

अथ अन्तक-सन्निपालक्षणम् ।

दाहं करोति परितापनमातनोति
मोहं ददाति विदधाति शिरःप्रकम्पम् ।
हिक्कां तनोति कसनं च समाजुहोति
जानीहि तं विबुधवर्जितमन्तकाख्यम् ॥ ११ ॥

भा० टी०—अन्तक के लक्षण—दाह, ( अन्दर ) ( संताप ) वाहर, मूर्च्छा, शिर काँपे, हिचकी, खाँसी, इसे विद्वान् वैद्यों ने इसे असाध्य बतलाया है ॥ ११ ॥

( इत्यन्तकस्यासाध्यात्वादौषधं नास्ति )

अथ रुग्दाह-सन्निपातलक्षणम् ।

प्रलाप-परितापन-प्रबल-मोह-मान्द्य-श्रमः
परिभ्रमण-वेदना-व्यथित-कण्ठ-मन्या—हनुः ।
निरन्तर-तृषाकरः श्वसन—कास-हिक्का-ऽऽकुलः
स कष्टतर-साधनो भवति हन्ति रुग्दाहकः ॥ १२ ॥

भा० टी०—रुग्दाह के लक्षण—प्रलाप, जलन, प्रबल मूर्च्छा और मन्दाग्नि, थकाहट, चक्कर, पीड़ा हो, हर वक्त प्यास लगी रहे, दम फूले, खाँसी, हिचकी, यह सन्निपात अत्यन्त कष्ट साध्य है ॥ १२ ॥

अथ चित्तभ्रम-सन्निपातलक्षणम् ।

यदि कथमपि पुंसां जायते कायपीडा
भ्रम-मद-परितापो मोह-वैकल्य-भावः ।
विकल-नयन-हासो गीत-नृत्य-प्रलापो-
ऽभिदधति तमसाध्यं केऽपि चित्तभ्रमाख्यम् ॥ १३ ॥

भा०टी०-चित्तभ्रम सन्निपात के लक्षण—शरीर में पीड़ा, भ्रम, नशा सा मालूम हो, जलन, मूर्च्छा, विकलता (बेचैनी) आँखों में पीड़ा, हँसना, गाना, नाचना, प्रलाप। इसे कोई आचार्य असाध्य बतलाते हैं ॥ १३ ॥

अथ शीताङ्ग-सन्निपातलक्षणम् ।

हिम-सदृश-शरीरो वेपथु-श्वास-हिक्का-
शिथिलित-सकलाङ्गो खिन्ननादोग्रतापः ।
क्लमथु-दवथु-कास-च्छर्द्यतीसार-युक्त-
स्त्वरित-मरण-हेतुः शीतगात्रः प्रभावात् ॥ १४ ॥

भा०टी०- शीताङ्ग के लक्षण-शरीर बर्फ जैसा ठण्डा हो, कंप, श्वास, हिचकी, जबर्दस्त सुस्ती, बोल न सके, भारी जलन, अनायास थकावट, परिताप, खाँसी, कय, दस्त, इस शीताङ्ग सन्निपात से रोगी जल्दी ही मर जाता है ॥ १४ ॥

( शीताङ्गसन्निपातोऽसाध्यः )

अथ तन्द्रिक-सन्निपातलक्षणम् ।

प्रभूता तन्द्राऽऽर्तिर्ज्वर-कफ-पिपासा-ऽऽकुलतरो
भवेच्छ्यामा जिह्वा पृथुल-कठिना कण्टकवृता ।
अतीसार-श्वास-क्लमथु-परिताप-श्रुतिरुजो
भृशं कण्ठे जाड्यं शयनमनिशं तन्द्रिकगदे ॥ १५ ॥

भा०टी०—तन्द्रिक के लक्षण—जबर्दस्त तन्द्रा, पीड़ा, ज्वर, कफ वृद्धि, प्यास, जीभ काली, मोटी, कड़ी और काँटा ऐसी खरखरी हो जाय, दस्त, श्वास, जलन, कान में पीड़ा, गला रुक जाय, हर वक्त निद्रा लगी रहे ॥ १५ ॥

अथ कण्ठकुब्ज-सन्निपातलक्षणम् ।

शिरोर्ति-कण्ठग्रह-दाह-मोह-
कम्प-ज्वरा रक्त-समीरणा-ऽर्तिः ।
हनुग्रहस्ताप-विलाप-मूर्च्छाः
स्यात् कण्ठकुब्जः खलु कष्टसाध्यः ॥ १६ ॥

भा०टी०-कण्ठ कुब्ज के लक्षण—शिर में पीडा, गला में पीडा, जलन, मूर्च्छा,कंप, ज्वर, वात रक्त की पीड़ा,दाँत बैठ जाय,शरीर गरम रहे,प्रलाप,मूर्च्छा । यह कण्ठकुब्ज सन्निपात कष्टसाध्य है ॥ १६ ॥

अथ कर्णक-सन्निपातलक्षणम् ।

प्रलाप-श्रुतिहास-कण्ठग्रहाङ्ग-
व्यथा-श्वास-कास-प्रसेक-प्रभावम् ।
ज्वरं ताप-कर्णान्तयोर्गल्लपीडा
बुधाः कर्णकं कष्टसाध्यं वदन्ति ॥ १७ ॥

भा०टी०-कर्णक के लक्षण—प्रलाप, वहिरापन, गले में पीड़ा, शरीर भर में पीड़ा, श्वास, खाँसी, मुँह से लार गिरे, ज्वर, शरीर गरम रहे, कान के पास और गले में पीड़ा । वैद्य लोग इस कर्णक सन्निपात को कष्ट साध्य वतलाते हैं ॥ १७ ॥

अथ कर्णक-सन्निपातोपद्रवाः ।

'प्रलाप-कण्ठग्रह-गात्रदुःखं सश्वास-कासौ ज्वर-ताप-कम्पाः ।
कर्णेऽश्रुतिर्ग्रन्थितया च पीडा स्यात् कर्णके कष्टतरा चिकित्सा ॥'
संन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥ १८ ॥

भा०टी०-कर्णक के उपद्रव—प्रलाप, कण्ठ और शरीर में पीड़ा,श्वास,खाँसी,ज्वर, जलन,कंप, वहिरापन, कान के पास गाँठ हो जाय और पीड़ा हो । कर्णक सन्निपात में चिकित्सा करना मुश्किल हो जाता है । सन्निपात के अन्त में कान की जड़ में कर्णमूल में रहने वाली लाला ग्रन्थि में सूजन हो जाती है,वह प्रायः पकती भी है । बहुत अच्छी

तरह चिकित्सा होने पर कोई अच्छा भी हो जाता है, नहीं तो प्रायः लोग उससे मरही जाते हैं ॥ १८ ॥

ज्वरस्य पूर्वं ज्वरमध्यतो वा
ज्वरान्ततो वा श्रुतिमूलशोथः ।
क्रमादसाध्यः खलु कष्टसाध्यः
सुखेन साध्यो मुनिभिः प्रदिष्टः ॥ १९ ॥

भा०टी०—सन्निपात ज्वर के पहले यदि वह शोथ हो तो असाध्य, मध्य काल में कष्ट साध्य और अन्त में सुख साध्य कहा गया है ॥ १९ ॥

अथ भुग्ननेत्र-सन्निपातलक्षणम् ।

ज्वर-बलापचयः स्मृतिशून्यता
श्वसन-भुग्नविलोचन-मोहितः ।
प्रलपन-भ्रम-कम्पन-शोफवाँ-
स्त्यजति जीवितमाशु स भुग्नदृक् ॥ २० ॥

भा० टी०—भुग्न नेत्र के लक्षण—ज्वर, बल नाश, स्मरण शक्ति नष्ट हो जाय, श्वास, आँखें टेढ़ी हों, मूर्च्छा, प्रलाप, भ्रम, कम्प, सूजन । यह रोगी जल्दी ही खतम होता है॥ २०॥

अथ रक्तष्ठीवि-सन्निपातलक्षणम् ।

रक्तष्ठीवी ज्वर–वमि–तृषा–मोह–शूला–ऽतिसारा
हिक्का–ऽऽध्मान-भ्रमण-दवथु-श्वास-संज्ञाप्रणाशाः ।
श्यामा रक्ता विकृत-रसना मण्डलोत्थानरूपा
रक्तष्ठीवी निगदित इह प्राणहन्ता प्रसिद्धः ॥ २१ ॥

भा० टी०—रक्तष्ठीवी के लक्षण—मुँह से थूक में खून निकले, ज्वर, कय, प्यास, मूर्च्छा, शूल दस्त, हिचकी, अफरा, चक्कर, जलन, श्वास, बेहोशी, जीभ काली या लाल, स्वाद न मालूम हो, देह में चकत्ते हों । यह रक्तष्ठीवी सन्निपात, रोगी को मार डालता है ॥ २१ ॥

---

१ प्राचीनायुर्वेदग्रन्थेषु एतादृश पाठदर्शनात्तथैवास्यात्रोल्लेखः, किन्तु क्रमेऽस्मिन्नुल्लिखित–चरक-वचनेन सह विरोधवारणाय पाठमेतं परिवर्त्य वैद्यनकचूड़ामणिना स्तुत्यवैचक्षण्येनश्री गणनाथसेन महोदयेन स्वनिर्मिते सिद्धान्तनिदान-ग्रन्थे पद्यमिदमित्थं व्यलेखि-- "ज्वरादितो वा ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः । क्रमेण साध्यस्त्वथ कष्टसाध्यस्तथाप्यसाध्यः कथितो मुनीन्द्रैः ॥" इति ।

अथ प्रलापक-सन्निपातलक्षणम् ।

कम्प-प्रलाप-परितापन-शीर्षपीडा-
प्रौढप्रभाव-पवमानपरोऽन्यचिन्ता ।
प्रज्ञा-प्रणाश-विकलः प्रचुर-प्रवादः
क्षिप्रं प्रयाति पितृपालपदं प्रलापी ॥ २२ ॥

भा०टी०—प्रलापक सन्निपात के लक्षण—कम्प, प्रलाप, जलन, शिरमें पीड़ा, पवित्रता पसन्द हो, दूसरों की चिन्ता, बेहोशी, बेचैनी, ज्यादा अंड बंड बके, प्रलापक सन्निपाती शीघ्र ही यमपुर जाता है ॥ २२ ॥

अथ जिह्वक-सन्निपातलक्षणम् ।

श्वसन-कास-परिताप-विह्वलः
कठिन-कण्टक-वृतातिजिह्वकः ।
बधिर-मूक-बलहानि-लक्षणो
भवति कष्टतरसाध्यजिह्वकः ॥ २३ ॥

भा० टी०—जिह्वक के लक्षण—श्वास, जलन, खाँसी, बेचैनी, जीभ कड़ी और काँटेदार हो, बहिरा गूँगा रोगी हो, जाय, शक्तिनाश । यह जिह्वक सन्निपात कष्टसाध्य होता है ॥ २३ ॥

अथ अभिन्यास-सन्निपातलक्षणम् ।

दोषत्रय-स्निग्धमुखत्व-निद्रा-
वैकल्य-निश्चेतन-कष्टवाग्ग्मी ।
बलप्रणाशः श्वसनादिनिग्रहो-
ऽभिन्यास उक्तो ननु मृत्युकल्पः ॥ २४ ॥

भा०टी०—अभिन्यास के लक्षण—त्रिदोष खूब कुपित हों, मुँह पर चिकनाहट रहे, नींद अधिक आवे, बेचैनी, बेहोशी, बोल न सके, शक्ति कम हो जाय, साँस न आवे; यह अभिन्यास सन्निपात मौत के समान है ॥ २४ ॥

अथ हारिद्रक-ज्वरलक्षणम् । ( **Yellow Fever.** ) यलो फीवर ।

'हारिद्र-देह-नख-नेत्र-करा-ऽङ्घ्रि-ताप—
निष्ठीवनादि—कसनैरुपलक्षितो यः ।
हारिद्रकः स कथितः किल सन्निपातः
साध्यो न चैष भिषजां ज्वरकालरूपः' ॥ २५ ॥

भा०टी०—हारिद्रक के लक्षण—शरीर, नख, आँख,हाथ, पैर,थूक, हरदी के समान पीले हों,खाँसी हो, यह हारिद्रक सन्निपात कया है, साक्षात्–काल है ॥ २५ ॥

अथ सन्निपातावधिः ।

सद्यस्त्रि-पञ्च-सप्ताहाद् दशाहाद् द्वादशादपि ॥
एकविंशाद्दिनैः शुद्धः सन्निपाती सुजीवति ॥ २६ ॥

इति त्रयोदश सन्निपाताः ।

भा० टी०—यदि तुरन्त, तीन, पाँच, सात, दश, बारह, और इक्कीस दिनों तक सन्निपात के उपद्रव शान्त हो जायँ तो रोगी बच जाता है ॥ २६ ॥

अथ सन्निपातज्वरस्यासाध्यलक्षणम् ।

तस्य सन्निपातज्वरस्यासाध्यलक्षणमाह—

दोषे विबद्धे नष्टेऽग्नौ सर्व-संपूर्ण-लक्षणः ।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ २४ ॥

( च० चि० अ० ३ श्लो० १०५ )

( सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥ १ ॥
सप्तमी द्विगुणा चैव नवम्येकादशी तथा ।
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ २ ॥ )

( वा० नि० अ० २ श्लो० ६२ )

म०-दोषे विबद्ध इत्यादि । दोषो मलं वातादिश्च; जेज्जटस्तु मलमेवाह विबद्ध इति वचनात् । नष्टाग्नित्वम् आहारापाकगम्यम् । यदुक्तं चरके,—" अग्निं जरणशक्त्या "–) च. वि. स्था. अ. ४ )–इति । असाध्य-कृच्छ्रसाध्याभिधानेन

सुखसाध्यो न भवतीति दर्शितम् । उक्तं हि चरके-" सन्निपातो दुश्चिकित्स्यानाम् " ( च. सू. स्था. अ. २५ )-इति । तथा भालुकिः-"मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता "-इति । सर्व-संपूर्ण-लक्षण इति सर्वाणि=समग्राणि, संपूर्णानि=बलीयांसि, लक्षणानि यस्य स तथा ॥ २४ ॥

भा०टी०—दोष—मल या वातादि विबद्ध हो, अर्थात् पाखाना पेशाब न उतरे,हवा न खुले और कफ न निकले,पूरे २ और जबर्दस्त सब लक्षण हों तो सन्निपात ज्वर असाध्य होता है, और यदि इससे उलटा हो तो कृच्छ्र साध्य ।

वात का सन्निपात ७ वें दिन, पित्त का १० वें और कफ का १२ वें दिन फिर बढ़ कर या तो स्वयं शान्त होता है या मार डालता है ।

१४ दिन, १८ दिन, और २२ दिन त्रिदोष मर्यादा है । इतने दिनों के बाद या तो सन्निपात अच्छा हो जाता है या रोगी मर जाता है । वस्तुतः सन्निपात का दूसरा सप्ताह खतरनाक होता है ।

## अथ सन्निपातोपद्रवाः ।

सन्निपातज्वरोपद्रवमाह—

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ॥ २५ ॥

( च० चि० अ० ३ श्लो० २८२ )

## अथाभिन्यासज्वरलक्षणम् ।

( त्रयः प्रकुपिता दोषा उरः स्रोतोऽनुगामिनः ।
आमाभिवृद्ध्या ग्रथिता बुद्धीन्द्रिय-मनो गताः ॥ १ ॥
जनयन्ति महाघोरमभिन्यासं ज्वरं दृढम् ।
श्रुतौ नेत्रे प्रसुप्तिः स्यान्न चेष्टां कांचिदीहते ॥ २ ॥
न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने ।
न घ्राणं न च संस्पर्शं शब्दं वा नैव बुध्यते ॥ ३ ॥

---

१—कर्णमूलशोथोद्भवकारणन्तु ज्वरकाले सम्यङ् मुखदन्तादिविशोधनाभावान्मुखादिमलोद्भूतविषाणां-कर्ण मूलस्थ लालाग्रन्थौ संक्रमणमेव ज्ञेयम् । तेन ज्वरितस्य जिह्वादन्त वेष्टादीनानित्यशोधनमत्यावश्यकमिति स्मर्तव्यम् । इति सिद्धान्तनिदाने एतच्छ्लोक टीकायां श्रीगणनाथसेनकविराजमहोदयः ।

शिरो लोठ्यतेऽभीक्ष्णमाहारं नाभिनन्दति ।
कूजति तुद्यते चैव परिवर्तनमीहते ॥ ४ ॥
अल्पं प्रभाषते किंचिदभिन्यासः स उच्यते ।
प्रत्याख्यातः स भूयिष्ठः कश्चिदेवात्र सिध्यति ॥ ५ ॥ )

म०-सन्निपातेत्यादि ॥ २५ ॥

भा०टी०-सन्निपात ज्वर के अन्तमें कानकी जड़के पास एक भारी सूजन हो जाती है जिससे कोई ही रोगी बचता है । सन्निपात के समय मुह दाँत जीभ के साफ न करने से इनकी मैल के जो कि बड़ी जहरीली होती है,कर्णमूल में रहने वाली लार की ग्रन्थि में चले जाने से कर्णमूल पैदा होता है ॥ २५ ॥

तीनों वात आदि दोष कुपित होकर उरःस्रोतमें जाकर बढे हुए आम के साथ हो कर बुद्धि, इन्द्रिय और मनको विगाड़ कर वडा घोर अभिन्यास नामक ज्वर पैदा कर देते हैं । इसमें ये लक्षण होतेहैं—कानसे सुन नहीं पडता,आँखसे देख नहीं पड़ता,यहां तक कि हाथ पैर हिलाना भी मुश्किल हो जाता है । नाक से भी गन्धज्ञान नहीं होता, और न त्वचा से न तो स्पर्श ज्ञान होता है। पीडा से इधर उधर शिर हिलाता रहता है । भूख बिल्कुल बन्द हो जाती है । कँहर रहती है, शरीर में सूई चुभोने जैसी पीड़ा होती है और इधर उधर करवटें वदलने की चेष्टा करता है । बहुत बुलाने पर एक आध बार बहुत कम बोलता है । यह सन्निपात एक दम असाध्य होता है । शायद ही भाग्य प्रबल हुआ तो रोगी बच जाता है ॥ १-५ ॥

## अथागन्तुज्वरलक्षणम् ।

आगन्तुज्वरमाह—

अभिघाताभिचाराभ्यामाभिशापाभिषङ्गतः ।
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥ २६ ॥

( सु० उ० अ० ३९ श्लोक० ३२ )

म०—अभिघातेत्यादि ।—अभिघातोऽभिहननं शस्त्र-लोष्ट-मुष्टि-लगुडादिभिः अभिचारः=श्येनादियागकृतः, अथवा विपरीतैर्मन्त्रैर्लोहस्रुचा सर्षपादिहोम इत्याहुः । अभिषङ्गः=कामादीनां भूतानां च संबन्धः; यदुक्तं चरके—"काम-शोक-भय-क्रोधैरभिषक्तस्य यो ज्वरः । सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः" ( च. चि. स्था. अ. ३ )—इति । अभिशापो= ब्राह्मण-गुरु-वृद्ध-सिद्धानामनिष्टाभिशंसनम् । तं चागन्तुज्वरं यथास्वं दोषैर्जानीयात् । यदुक्तम्,—"काम-शोक-

भयाद्द वायुः"–इत्यादि। अयं च दोषसंवन्धः पश्चाद्भावी ज्वरारम्भक इति संप्राप्त्यवसरे निरूपितम् ॥ २६ ॥

भा०टी०—आगन्तु ज्वर चार तरह का होता है–अभिघातज १,अभिचारज २,अभिशापज ३, अभिषङ्गज ४। हथियार पत्थर,ढेला, चाबुक, आग से जलना,विषैले जन्तुओं का काटना आदि से उत्पन्न ज्वर अभिघातज हुआ। अभिचारज–जादू, टोना, टोटका, मारण, मोहन, उच्चाटन आदिसे उत्पन्न ज्वर। अभिषङ्गज–काम, क्रोध, शोक, भय, और भूत आदि से उत्पन्न ज्वर। अभिशापज–ब्राह्मण, गुरु, वृद्ध, सिद्ध पुरुषों के शाप से उत्पन्न ज्वर। इन ज्वरों में भी दोषों के लक्षणों को अवश्य जाने, परन्तु इन आगन्तु ज्वरों में पहले ज्वर होता है वाद को दोषों का सम्बन्ध होता है ॥ २६ ॥

अथ विषजन्यागन्तुज्वरलक्षणम्।

श्यावास्यता विषकृते तथाऽतीसार एव च।
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥ २७ ॥

( सु० उ० अ० ३६ श्लो० ३३ )

म०—श्यावास्यतेति—श्यावः शुक्लानुविद्धः कृष्णो वर्णः; शाकवर्ण इत्येके विषकृते=स्थावरविषभक्षणादिकृते; अतीसारः, तद्विषस्याधोगत्वात् ॥२७॥

भा०टी०—विषकृत-अभिषङ्ग ज्वर के लक्षण-चेहरा स्याह हो जाता है,दस्त होते हैं भोजन में अरुचि, प्यास, कोंच,और वेहोशी होती है ॥ २७ ॥

अथौषधगन्धजज्वरलक्षणम्।

ओषधीगन्धजे मूर्च्छा शिरोरुग् वमथुः क्षवः।

( सु० उ० अ० ३६ श्लो० ३४ )

म०—ओषधीगन्धज इति–तीव्रौषधिगन्धघ्राणजे, "पुष्पेभ्यो गन्धरजसी ओजस्विभ्यो यदाऽनिलः" इत्यादिना वृद्धसुश्रुतेन पठितं तृणपुष्पाख्यं ज्वरमत्रैवान्तर्भावयन्ति ॥–

भा०टी०–जङ्गलो में ऐसी बहुतसी ओषधियां होती हैं जिनकी महक से ज्वर आ जाता है। उस ज्वर में मूर्च्छा, शिर में पोडा, कय और छींक आती है।

अथ कामज्वरलक्षणम्।

कामजे चित्तविभ्रंशस्तन्द्राऽऽलस्यमभोजनम् ॥ २८ ॥

( सु० उ० अ० ३६ श्लो० ३५ )

( हृदये वेदना चास्य गात्रं च परिशुष्यति । )

( सु० उ० अ० ३६ श्लो० ३६ )

म०—कामज इत्यादि—अभिमतकामिन्याद्यप्राप्तिनिमित्ते । चित्तविभ्रंशो=भ्रमादिः । यदाह वाग्भटः—"कामाद्भ्रमोऽरुचिर्दाहो ह्री-निद्रा-धी-धृतिक्षयः" ( वा. नि. स्था. अ. २ ) इत्यादि ॥ २८ ॥

भा०टी०—कामज्वर—किसी सुन्दर स्त्री पर मन लगा हो और यदि वह न मिले तो काम ज्वर हो जाता है- चित्त ठिकाने नहीं रहता, तन्द्रा, आलस्य, अन्न में अरुचि और अपने प्यारे का ध्यान लगा रहता है,हृदय में पीड़ा और शरीर सूख जाताहै॥ २८॥

अथ भय शोक क्रोधजज्वरलक्षणम् ।

भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ।

( सु० उ० अ० ३६ श्लो० ३६ )

म०—भयादिति=भयाज्जाते ज्वरे । एवं शोकात् कोपादित्येतयोर्बोद्धव्यम्; शोकाच्च प्रलाप इति संबन्धः; प्रलापश्चात्र वातकार्यः, तस्य वातकोपितपित्तकार्यत्वात् । विशेषनिश्चयस्तु निदानात्, निदानमपि लक्षणं भवति । उक्तं च—"काम शोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः"—इत्यादि । यद्येवं तत्कुतः क्रोधजे वेपथुः ? तस्य वातकार्यत्वात् । उच्यते—"एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्" इति वचनात्पित्तकोपितवातजन्य एवात्र वेपथुः; अथवा क्रुद्धश्च वेपमानो दृश्यत इति नाहि दृष्टेरनुपपन्नं नामेति जेज्जटः । क्रोधः पित्तमिव वातं च कोपयतीति, तद्युक्तम् । यदाह विदेहः—"क्रोधशोकौ स्मृतौ वात-रक्त-पित्त-प्रकोपणौ"— इति । कोपाच्चेति चकारेण शिरोरुजं समुच्चिनोति । यदाह वाग्भटः—"क्रोधात्कम्पः शिरोरुक् च प्रलापो भय-शोक-जः" ( वा. नि. स्था. अ. २ ) इति । मानसत्वाविशेषेऽपि भयजादीनां पृथगुपादानं हेतुभेदात्, हेतुभेदाच्च भेदाभिधानं हेतुप्रत्यनीकचिकित्सार्थमिति ॥—

भा० टी०—भयज्वर में-प्रलाप और डर,शोकज्वर में प्रलाप और रोना, । क्रोधज्वर में—कंप, प्रलाप, और आँख का लाल हो जाना, होता है ।

अथाभिचारा-ऽभिघातज-ज्वरलक्षणम् ।

( अभिघातजज्वर=Traumatic Fever ) ट्रॉमेटिकफीवर

अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ॥ २९ ॥

**अभिचारेत्यादि**—तृष्णा चेति चकारेणाभिचारजे दाहादिकं समुच्चिनोति । यदुक्तं * हारीतदर्शिना वाग्भटेन—"तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते । पूर्वं चेतस्ततो देहस्ततो विस्फोट-तृड्-भ्रमैः ॥ सदाह-मूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः—इति ॥ २९॥

भा०.टी०—अभिचार और अभिशाप ज्वर में-मूर्च्छा,प्यास,दाह,भ्रम होते हैं ॥२६॥

## अथ भूताभिषङ्गजज्वरलक्षणम् ।

**भूताभिषङ्गादुद्वेगो हास्य-रोदन-कम्पनम् ।**

( सु० उ० अ० ३६ श्लो० ३७.३८० )

**भूताभिषङ्गादिति**—भूतानि देवग्र१हादय उन्मादनिदाने वक्ष्यमाणाः' तेषामभिषङ्गः=संबन्धः । उद्वेगः=उद्विग्नचित्तता ॥—

भा० टी०—भूतज्वर में—चित्त घबड़ाता है, रोना और काँपना, और जो भूत लगे रहते हैं उनके अलग २ खास लक्षण होते हैं ।

आगन्तुज्वरेष्वपि प्रतिनियतदोषानुबन्धप्रदर्शनार्थमाह—

**कामशोकभयाद्वायुः क्रोधात्पित्तं, त्रयो मलाः ॥ ३० ॥**
**भूताभिषङ्गात्कुप्यन्ति भूतसामान्यलक्षणाः ।**

( च० चि० अ० ३ श्लो० १११ )

**म०—कामशोकेत्यादि** । त्रयो मला भूताभिषङ्गात्कुप्यन्तीति भूतप्रभावात् । यच्च चरकेण निदानस्थाने "अभिषङ्गजः पुनर्वात-पित्ताभ्यां ( च. नि. स्था अ. १ )—इत्युक्तं, तत्प्रायिकं मन्तव्यमिति जेज्जटः । चक्रस्त्वाह— "अभिषङ्गज इत्यनेन कामाद्यभिषजङ्ग उच्यते न तु भूताभिषङ्गजः"—इति । भूतसामान्यलक्षणा इति यस्य भूतस्य देवग्रहादेरभिषङ्गात्कुप्यन्ति तस्य यल्लक्षणं रोदनादि तेन सह सामान्यं सदृशं लक्षणं येषां ते तथा, इति व्याचक्षते जेज्जटादयः । दोषलक्षणानि भूतलक्षणानि च भवन्तीत्यर्थः ॥ ३० ॥—

भा०टी०—काम शोक भय से वायु कुपित होता है, क्रोध से पित्त और भूतों के लगने से उन २ भूतों के लक्षण होते हैं, तथा तीनों दोषों का कोप होता है ॥ ३० ॥

---

* 'हारीतार्थानुवादिना' इति पाठान्तरम् ।

---

१—देवासुरगन्धर्वयक्षपिशाचोरगराक्षसपितृग्रहाः ।

अथ विषमज्वरस्य सम्प्राप्तिः।

अथ विषमज्वरसंप्राप्तिमाह—

दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ॥ ३१ ॥
धातुमन्यतमं प्राप्य करोति विषमज्वरम्।

( सु० उ० अ० ३९ श्लो० २८ )

म०—दोषोऽल्प इत्यादि। अल्प इत्यनेनानतिबलत्वात्कालविशेषमवाप्य लब्धबलो ज्वरयति, यस्तु बलवान् स नित्यज्वरमेव करोति। अहितसंभूत इति अहिताहाराचारादिसंभूतो वृद्धः। ज्वरोत्सृष्टस्य सहसा निवृत्तज्वरस्य। वाशब्देन प्रथमतोऽपि विषमज्वरो भवतीति दर्शयति। यदुक्तम्—'आरम्भाद्विषमो यस्तु"—इत्यादि। धातुमन्यतमं रसरक्तादिकम्। विषमज्वरं तृतीयकादिकम्। विषमज्वरसामान्यलक्षणं च भालुकिना पठितम्—"यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च। वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः" इति ॥ ३१ ॥

भा० टी०—विषम ज्वर दो तरह से आता है-( १ ) ज्वर आकर अच्छे हो जाने पर ( पूरी तरह से दोष के न दूर होने पर ) अहित आहार विहार होने से फिर वह दोष विषम ज्वर पैदा करता है। (२) या शुरू से ही कमजोर दोष होता है तो शुरू से ही विषम ज्वर होने लगता है। कि जो ज्वर कभी ज़ाड़ा देकर आवे, कभी गरमी, कभी जोर से आवे,कभी धीरे से,और जिसके आनेका कोई ठीक वख्त् न हो उसे विषम ज्वर कहते हैं। विषम ज्वर में रस आदि कोई धातु जरूर दूषित होता है ॥ ३१ ॥

अथ विषमज्वरभेदाः।

विषमज्वर=( **Malarial Fever** ) मलेरियल फीवर

( सन्ततः सततोऽन्येद्युस्तृतीयक-चतुर्थकौ ) ॥

विषमज्वराणां दूष्यधातवः।

सन्ततादिज्वराणां प्रतिनियतदूष्यान् धातूनाह—

सन्ततं रसरक्तस्थः, सोऽन्येद्युः पिशिताश्रितः ॥ ३२ ॥
मेदोगतस्तृतीयेऽह्नि, त्वस्थिमज्जगतः पुनः।
कुर्याच्चतुर्थकं घोरमन्तकं रोगसंकरम् ॥ ३३ ॥

( सु० उ० अ० ३९ श्लो० २८ )

म०—सन्ततमित्यादि। सन्ततशब्दः सततस्योपलक्षणः। तेनैतदुक्तं

भवति-रसस्थः सन्ततं, रक्तस्थः सततमिति; यदुक्तं चरके-"रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम्" ( च. चि. स्था. अ. ३ ) इति। प्रायोग्रहणात्सततको रक्तव्यतिरिक्तं रसधातुमाश्रयते । रसग्रहणं चात्र विशेषपरं, सर्वज्वरेषु रसस्यावश्य-दूष्यत्वात् । अन्ये तु सततग्रहणार्थं 'सन्ततौ रसरक्तस्थौ'-इति पठन्ति । तन्नाति-युक्तम्, अत्र हि सन्तत-सततशब्दौ संज्ञापरौ नतु सातत्यवचनौ; तेन सन्ततशब्देन सततकस्यानाभिधानात् कथमेकशेष इति दोषः । अन्येद्युरिति अन्येद्युष्कम् । घारं= दुःसहम् । अन्तकं यममिव मारकत्वात् । रोगसंकरमनेकरोगसंकुलम्[1] ॥३२॥३३॥

भा०टी०—विषम ज्वर के ये भेद हैं-सन्तत ( १ ) सतत २, अन्येद्यु ३, तृतीयक ४, चतुर्थक५ । इनमे सन्तत ज्वर रसगत,सतत रक्तगत,अन्येद्यु मांसगत,तृतीयक मेदोगत और चतुर्थक अस्थिमज्जागत होता है । चतुर्थक ज्वर बड़ाही भयङ्कर और अनेक रोग पैदा करने वाला होता है ॥३२-३३॥

अथैषां लक्षणान्याह—

इदानीमेकदोष-द्विदोषजस्य सन्ततज्वरस्य विसर्गकालावधिद्वारेण लक्षणमाह--

( स्रोतोभिर्विसृता दोषा गुरवो रसवाहिभिः ।
सर्वदेहानुगाः स्तब्धा ज्वरं कुर्वन्ति संततम् ॥ )

अथ सन्ततज्वरलक्षणम् ।

( **Malarial Remittent FeVer.** ) मलेरियलरिमिटेन्टफीवर

सप्ताहं वा दशाहं द्वादशाहमथापि वा ।
सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ॥ ३४ ॥

( सु० उ० अ० ३६ श्लो० २६ )

म०—सप्ताहमित्यादि । एते विकल्पा यथाक्रमं वातपित्तकफोल्बणत्वेन ज्ञेयाः । यथोक्तम्,-"पित्त-कफाऽनिल-वृद्ध्या दशदिवस-द्वादशाह-सप्ताहात् । हन्ति विमुञ्चति वाऽऽशु त्रिदोषजो धातु-मल-पाकात्"-इति । अयं च सन्ततस्त्रिदो-षज एव द्वादशाश्रयत्वेन । यदुक्तं चरकेण-"यथा धातूंस्तथा मूत्रं पुरीषं चानिलादयः । युगपच्चानु[2]पद्यन्ते नियमात्सन्तते ज्वरे"-इति (च.चि.स्था.अ.३) सन्तत्या=अविच्छेदेन सप्ताहादीन् व्याप्य अविसर्गी=अपरित्यागी, अत्यन्तसं-योगे द्वितीया । ननु, यद्येवं कथमस्य विषमज्वरप्रकरणे पाठः ? मुक्तानुब-

---

१ संकुलं-संयुक्तमित्यर्थः । २ अनुपद्यन्ते-अनुगच्छन्ति ।

न्धित्वं[1] विषमत्वं, तच्चात्र नास्ति । नैवम्, अत्रापि तथाभावात् । तथा च तल्लक्षणे चरकः,–"विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः । दुर्लभोपशमः कालं दीर्घमप्यनुवर्तते" इति ( च. चि. स्था. अ. ३ ) । यच्चूक्तं खरनादेन,–"ज्वराः पूर्वं मयोक्ता ये पञ्च सन्ततकादयः । चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः"–इति; तत्सन्तते मुक्तानुबन्धित्वस्यैकदा भावित्वेनाल्पत्वान्न[2] तद्व्यपदेशः, एकतण्डुलाभ्यवहारेऽनशनशब्दस्य व्यपदेशवत्, नहि तृतीयकादिवदावृत्त्या मुक्तानुबन्धित्वमस्येत्यभिप्रायेण द्रष्टव्यम् । अथवा या विषमज्वरोल्लेखेनोक्ता चिकित्सा सा सन्ततवर्जं सततादिषु कार्येति प्रतिपादनार्थम् । हरिचन्द्रेणापि "कर्म साधारणं जह्यात्तृतीयक-चतुर्थकौ"-इति ( च. चि. स्था. अ. ३ ) चरकवचनाद् विषमज्वरोक्तचिकित्सा तृतीयक–चतुर्थकयोरेव,अन्येषु दोषप्रत्यनीकचिकित्सा कार्येति व्याख्यातम् । अस्यां हरिचन्द्रव्याख्यायां कर्म साधारणं सर्वत्रैव विषमज्वरे कार्यं विशेषेण तृतीयक–चतुर्थकयोरिति द्रष्टव्यम्, अन्यथा उक्ततन्त्रान्तरविरोधः ॥ ३४ ॥

भा० टी०—दोष भावी होकर रसवाही स्रोतों द्वारा सब शरीर में फैल जाते हैं और वहीं रुक कर संतत ज्वर को पैदा कर देते हैं। जो ज्वर लगातार सात या दश अथवा बारह दिनों तक बराबर बना रहे, बीच में जरा भी कम न हो उसे सन्तत ज्वर कहते हैं। वाताधिक ७ पित्ताधिक १० और कफाधिक १२ दिन रहता है ॥ ३४ ॥

## अथ सततकान्येद्युष्कज्वरलक्षणम् ।

## ( Double Quotidian Fever. ) ( Quotidian Fever. )

डबल क्वॉटिडियन् फीवर. क्वॉटिडियन् फीवर.

**अहोरात्रे सततको द्वौ कालावनुवर्तते ।**
**अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्तते ॥ ३५ ॥**

( सु० उ० अ० ३९ श्लो० ३० )

म०–अहोरात्रे सततको द्वौ कालावनुवर्तत इति अह्नि द्वौ कालौ रात्रौ द्वौ कालौ वा, अह्नि एककालं रात्रावेककालमेवं वा; द्वौ कालौ–इतोंशान्नदेव, नियमानभिधानात्, तथा दर्शनाच्च । अनुवर्तते = वेगं करोति ॥ ३५ ॥

भा० टी०–सततक ज्वर दिन रात में दोबार आता है। दिन में १ बार, रातमें १ बार, अथवा दिनमें २ बार और रात में २ बार। अन्येद्युष्क ज्वर दिन रात में सिर्फ १ बार आता है ॥ ३५ ॥

---

१ आदौ मुक्तः पश्चाद् अनुबन्धी पुनरावर्तकः तस्य भावो मुक्तानुबन्धित्वम् । २ व्यपदेशो व्यवहारः ।

### अथ तृतीयक-चतुर्थक-ज्वरलक्षणम् ।

**Tertian Fever.** ( तृतीयकज्वरः ) टर्शियन्फीवर.
**Quartan Fever.** ( चतुर्थकज्वरः ) क्वार्टन्फीवर.

### अथ तृतीयक-चतुर्थकयोरुत्पत्तिबीजम् ।

" अधिशेते यथा भूमिं बीजं काले प्ररोहति ।
अधिशेते तथा धातून् दोषः काले प्रकुप्यति ॥
स वृद्धिं बल-कालं च प्राप्य दोषस्तृतीयकम् ।
चतुर्थकं च कुरुते प्रत्यनीकबलक्षयात् ॥ * ॥ "

( च. चि. अ० ३, श्लो० ६४,६५ )

## तृतीयकस्तृतीयेऽह्नि, चतुर्थेऽह्नि चतुर्थकः ।

( सु० उ० अ० ३९ श्लो० २८ )

म०—तृतीयेऽह्नि तृतीयक इति वेगदिनापेक्षया तृतीयेऽह्नि यो भवति स तृतीयकः, एवं चतुर्थकेऽपि वाच्यम् ॥ ३६ ॥

विषमज्वरस्यैकीयमतेन भूताभिषङ्गजत्वमाह—

## केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥ ३६ ॥

( सु उ० अ० ३९ श्लो० २८ )

म०-केचिदित्यादि । परवचनमप्रतिषिद्धमनुमतं सुश्रुतेन; अत एव विषमज्वरे दैवव्यपाश्रयं बलिहोमादि भूतोचितं, युक्तिव्यपाश्रयं कषायपानादि दोषोचितं च विधीयते । यदाह चरकः-- "कर्म साधारणं जह्यात्तृतीयकचतुर्थकौ । आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे"--इति ( च. चि. स्था. अ. ३ ) अत्र साधारणमिति दैवयुक्तिव्यपाश्रयमिति व्याचक्षते इति ॥ ३६ ॥

जैसे खेतमें बोया हुआ बीज वहीं पड़ा रहता है समय पाकर फिर वही ऊगता है, उसी प्रकार दोषभी धातुओं में लीन रहते हैं, समय पाकर अपने विरोधी के दूर हो जाने से बलवान् होकर तृतीयक चतुर्थक ज्वरको पैदा करते हैं।

तृतीयक ( तिजारी ) तीसरे दिन और चतुर्थक ( चौथिया ) चौथे दिन आता है। कोई आचार्य विषमज्वर में भूतों का भी सम्बन्ध मानते हैं इसका अर्थ ऐसा भी अब लगाया जाता है-भूत=सूक्ष्म प्राणी=कीड़े । अर्थात् विषमज्वर पैदा करने वाले कीड़े विषमज्वर के रोगी के शरीरसे मच्छरों में ( काटने पर ) घुस जाते हैं। बाद वे मच्छर फिर किसी तन्दुरुस्त आदमी को काटते हैं तो मच्छर के शरीर से उन आदमियों के

शरीर में घुस कर खून भर में फैलकर सब खून को बिगाड़ देते हैं, और फिर बाद को विषमज्वर बार २ होने लगताहै और जल्दी छूटता नहीं ॥ ३६ ॥

## तृतीयक-चतुर्थकयोर्लक्षणान्तरम् ।

उल्बणदोषभेदेन तृतीयक--चतुर्थकयोर्लक्षणान्तरमाह—

**कफपित्तात्त्रिकग्राही पृष्ठाद्वात-कफात्मकः ।**
**वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥ ३७ ॥**
**चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ।**
**जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः ॥३८॥**

(च० चि० स्था० अ० ३ श्लो० ६७,६८)

म०--कफपित्तादित्यादि । त्रिकग्राही=वेदनया [1]त्रिकव्यापी, त्रिकस्य वातस्थानत्वेन तद्गतौ पित्तकफावन्यस्थानगतत्वेन दुर्बलौ तृतीयदिने वेगं कुरुतः, यदि तु स्वस्थानास्थितौ स्यातां तदा सन्ततज्वरमेव कुर्यातामिति जेज्जटः । एवं शिरसि कफस्थाने, पृष्ठे च पित्तस्थाने बोद्धव्यम् । पृष्ठादिति ल्यब्लोपे कर्मणि पञ्चमी, पृष्ठं वेदनया व्याप्येत्यर्थः । नच वाच्यं यदि त्रिकं वातस्थानं तत्कथं तत्र पित्तकफाविति; प्रकृतिस्थानां दोषाणां स्थाननियमो नतु प्रकुपितानां, तेषां[2] सर्वदेहगतत्वात् । यदाह सुश्रुतः,-"कुपितानां हि दोषाणां शरीरे परिधावताम् । यत्र सङ्गः ख ( स्व ) वैगुण्याद्व्याधिस्तत्रोपजायते"-इति (सु. सू. स्था. अ. २४) एवमन्यस्थानगतत्वेन दोषदौर्बल्यादि चतुर्थकेऽपि वाच्यम् । प्रभावं=रुजारूपशक्तिम् । द्वैविध्यं विवृणोति—जङ्घाभ्यामित्यादि । जङ्घाभ्यां शिरस्त इत्येतच्च पञ्चमीद्वयं पूर्ववत् पूर्वमिति प्रथमं तत्र भूत्वा निखिलं देहं व्याप्नोति । श्लैष्मिक इति श्लेष्मोल्बणः सन्ततसततकाऽन्येद्युष्क-तृतीयक--चतुर्थकानां पञ्चानां सन्निपातजत्वात् । यदुक्तं चरके-"प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः । सन्निपाते तु यो भूयान् स दोषः परिकीर्तितः"-( च. चि. स्था. अ. ३. ) अथवा प्रायोग्रहणादेकदोषजा द्विदोषजा अपि भवन्ति । अन्ये त्वाहुः-विकृतिविषमसमवायारब्धाः सन्ततादयः सन्निपातजाः, तेषामेवोद्भूतदोषेण व्यपदेशः, प्रकृतिसमसमवायारब्धास्त एक-द्वि-दोषजा अपि भवन्तीति जेज्जटः । प्रकृतिसमसमवायारब्धश्चतुर्थकस्तु पित्तेन न क्रियत एव, व्याधिस्वभावात्; पित्तज-गलगण्डवत् । ननु

---

१ श्रोण्यस्थ्नोः पृष्ठवंशेन सन्धिस्थानं त्रिकम् । २ तेषामिति-प्रकुपितानां दोषाणाम् ।

अस्ति पैत्तिकोऽपि चतुर्थकः; तथा च हारीताचार्यो व्याहरति[1],–"चतुर्थको नाम गदो दारुणो विषमज्वरः । शोषणः सर्वधातूनां बल–वर्णाग्नि–नाशनः ॥ त्रिदोषजो विकारः स्यादस्थि–मज्ज–गतोऽनिलः । कुपितं पित्तमेवं तु कफश्चैवं स्वभावतः ॥ शीतदाह–करस्तीव्रस्त्रिकाङ्गं चानुवर्तते[2] । स सन्निपातसंभूतो विषमो विषमज्वरः ॥ ऊर्ध्वं कायस्य गृह्णाति यः पूर्वं सोऽनिलात्मकः । पूर्वं गृह्णात्यधः श्लेष्मवृद्धचतुर्थकः–" इति । अत्राहुः—अनुबन्धरूपमत्र पित्तं, नत्वारम्भकं;कथमेषा प्रतीतिरिति चेत्, स्थानविशेषानभिधानात्; अत एव हारीतेनापि स्थानं नोदाहृतमेव जङ्घादिवदिति चरकटीकाकृतो व्याचक्षते। किंत्वेषा व्याख्या तदा संगच्छते यदि पित्तलिंगं नोद्भूतं दृश्यते, दृश्यते च, तथा हि कथ्यते–भेडेऽपि पैत्तिकःपठ्यते,-"आमाशयस्थः पवनो ह्यस्थि-मज्जागतोऽपि वा।कुपितः कोपयत्याशु श्लेष्माणं पित्तमेव च"–इति । किंच नागभर्तृतन्त्रे स्थानमप्युक्तमेव,–"ऊर्ध्वकायं तु यः पूर्वं गृह्णाति सोऽनिलात्मकः । मध्यकायं तु गृह्णाति पूर्वं यस्तु स पित्तजः ॥ पूर्वं गृह्णात्यधःकायं श्लेष्मवृद्धचतुर्थकः"–इति । तस्मात्प्रायेण कफवाताभ्यां भवतीति पैत्तिकश्चतुर्थकश्चरकादिभिर्नोदाहृतः, नत्वसंभवादिति मन्तव्यम् । एषां चोत्पत्तिक्रमो वृद्धसुश्रुतादवगन्तव्यः । स यदाह–"अहोरात्रादहोरात्रात्स्थानात्स्थानं प्रपद्यते । ततश्चामाशयं प्राप्य करोति विषमज्वरम् ॥ कफस्थानविभागेन यथासंख्यं करोति हि । सतता-ऽन्येद्युष्क-त्र्याख्य-चतुर्थान् सप्रलेपकान्॥" ( सु. उ. तं. अ. ३९ )। इति अस्यायमर्थः—आमाशय-हृदयकण्ठ-शिरः-सन्धयः पञ्च कफस्थानानि, एषु स्थितैर्दोषैर्यथासंख्यं सततादयः क्रियन्ते । तत्रामाशयस्थितेन दोषेण सततकः क्रियते द्विकालं; न चामाशयप्राप्त्या सर्वदा प्रसंगः, अहोरात्रेषु प्रकोपकालापेक्षया ज्वरोत्पत्तेः । हृदयस्थितेन दोषेण आमाशयमागत्यान्येद्युष्कः क्रियते एककालं,नच सर्वदा, सततारम्भकदोषापेक्षयाऽस्य व्यवहितत्वात् । कण्ठस्थितेन दोषेणैकस्मिन् दिने हृदयमागम्यते, अपरस्मिन्नामाशयमागत्य ज्वर आरभ्यते तृतीयकः । एवं शिरःस्थितेन दोषेण कण्ठ-हृदया-ऽऽमाशयान् त्रीन् त्रिभिर्दिनैः क्रमेण प्राप्य चतुर्थकः क्रियते । पुनः स्वस्थानगमनं तु दोषाणां हृतवेगत्वेन लाघवाद्वेगदिन एव भवति । सन्धिस्थितेन दोषेण प्रलेपकः क्रियते, सन्धयश्चामाशयेऽपि सन्तीति स सर्वदा भवति । अयं चाविषमोऽपि विषमसहचरितः पठितः, कफस्थानोत्पा[3]दानुरोधात् । उक्तं हि सुश्रुते–" प्रलेपकस्त्वविषमः प्रायः क्लेशाय शोषिणाम्"–इति ( सु. उ. तं. अ.३९ ) ॥ ३७–३८ ॥

---

१ व्याहरति कथयति । २ अनुवर्तते आयाति । ३ उत्पादि उत्पत्तिः ।

भा० टी०—तृतीयकज्वर दोष भेदसे तीन प्रकार का होता है—कफपित्त प्रधनत्रिक में पीड़ा करता हुआ आता है, वातकफात्मक-पीठमें पीड़ा करके आता है। वातपित्तात्मक-शिर में पीड़ा पैदा कर आता है। चौथियाज्वर होने पर दो स्थानो में पीड़ा होती है। कफ प्रधान-पहले जङ्घा ( पेंडुरी ) में पीड़ाकर चढ़ता है, वातप्रधान पहले शिर में पीड़ा पैदा करता है॥ ३७-३८ ॥

चतुर्थकविपर्ययमाह—

**विषमज्वर एवान्यश्चतुर्थकविपर्ययः ।**
**स मध्ये ज्वरयत्यह्नी आदावन्ते च मुञ्चति ॥ ३९ ॥**

( च० चि० स्था० अ० ३ श्लो० ६९ )

म०—विषमेत्यादि । अत्र तन्त्रान्तरम्—"अस्थि-मज्जोभयगते चतुर्थकविपर्ययः। स मध्ये ज्वरयत्यह्नी[1] ह्यादावन्ते च मुञ्चति"—इति । आदावेकादिनं मुक्त्वा, मध्ये दिनद्वयं भूत्वा, अन्ते एकदिनं न भवतीति व्याचक्षते जेज्जटादयः । "अस्थिमज्जोभयगते चतुर्थकविपर्ययः । त्र्यहाद् द्व्यहं ज्वरयति ह्यादावन्ते च मुञ्चति"—इति पराशरवचनस्यापि स एवार्थः; त्र्यहादिति त्र्यहस्यादिदिनं विमुञ्चति, दिनद्वयं ज्वरयति त्र्यहस्यान्ते चतुर्थदिनं मुञ्चतीति तात्पर्यार्थं व्याचक्षते। हरिचन्द्रस्त्वाह—द्वे अहनी निरन्तरं ज्वरयित्वा उपरम्यैकमहः पुनर्ज्वरयतीत्येष चतुर्थकविपर्यय इति । आदिदिनाभावश्चोत्तरोत्तरपातिदिवसेष्ववधार्यः।चतुर्थकविपर्ययस्योपलक्षणत्वेनतृतीयकादिविपर्ययोऽप्यूह्य इत्याहुः । तद्यथा—मध्ये एकदिनं ज्वरयति, आद्यन्तयोर्मुञ्चतीति तृतीयकविपर्ययः एककालं विमुच्य सर्वमहोरात्रं व्याप्नोतीत्यन्येद्युष्कविपर्ययः; कालद्वये मुञ्चति, सर्वमहोरात्रं ज्वरयतीति सततकविपर्ययः । अत्र दोषविकृतिरेव नानाविधा हेतुरिति ।"कफस्थानेषु वा तिष्ठन् दोषो द्वि-त्रि-चतुर्षु च । विपर्ययाख्यान्कुरुते विषमान्कृच्छ्रसाधनान् ॥" ( सु. उ. तं. अ. ३९ )—इति वृद्धसुश्रुतवाक्यं व्याचक्षाणो जेज्जटः अन्येद्युष्क-तृतीय-चतुर्थकमात्रस्य विपर्ययमुदाहरति । तद्यथा—आमाशय-हृदयस्थदोषेण यथोदाहृत एवान्येद्युष्कविपर्ययः, आमाशय-हृदय-कण्ठ-स्थितेन तृतीयकविपर्ययः, तत्रैकस्मिन् दिने हृदयस्थो दोष आमाशयमागत्य तत्स्थेन सह ज्वरयति । तद्दिने कण्ठस्थितश्च हृदयमायाति, अपरादिने सोऽप्यामाशयमागत्य ज्वरयति एवं दिनद्वयं भूत्वा पश्चादेकदिनं न भवतीति तृतीयकविपर्ययः; आमाशय-हृदय-कण्ठ-शिरः-स्थेन दोषेण चतुर्थकविपर्ययः क्रियते, तत्र यस्मिन् दिने हृदयस्थो दोष आमाशयमागत्य ज्वरयति तस्मिन्नेव कण्ठस्थो हृदयं शिरस्थश्च कण्ठमायाति,

[1] अह्नी—दिनद्वयमित्यर्थः ।

अपरदिने हृदयस्थ आमाशयमागत्य ज्वरयति, कण्ठस्थितश्च हृदयमायाति, अपरदिने हृदिस्थ एवामाशयमागत्य ज्वरयति, एवं दिवत्रये भूत्वा पश्चादेकदिनं न भवतीति चतुर्थकविपर्यय इति । एते च सर्वे एव ज्वरा न विरुद्धाः, सर्वेषामेव मुनिप्रणीतत्वात् । यथोक्तं स्मृतिशास्त्रे—" स्मृतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ मतौ "—इति । दृश्यन्ते च नानाविधा एव विषमज्वराः, एष एव न्यायश्चरकसुश्रुतयोः कुष्ठवैषम्ये वाप्यचन्द्रेण दर्शितः; न वा चिकित्साभेदोऽप्येषामुक्तः यैव तृतीयकादौ चिकित्सा सैव तद्विपर्ययेऽपीति ॥ ३९ ॥

भा० टी०—चौथिया का उल्टा एक और ज्वर होता है-वह पहले और आखीर में एक एक दिन छोड़ कर बीचमें दो दिन आताहै ॥ ३९ ॥

## अथ वातबलासकज्वरलक्षणम् ।

## (Beri Beri or Epidemic Dropsy)

## बेरी बेरी एपीडेमिक ड्रॉप्सी ।

१ उक्तसंगत्या प्रलेपकादनूपद्रवत्वेन तत्सधर्मिणि वातबलासके वाच्ये प्रतिलोमतन्त्रयुक्त्या वातबलासकमवाह—

**नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति ।**
**स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥ ४० ॥**

( वृद्ध वाग्भट अध्याय २ )

म०—नित्यमित्यादि । वातबलासकाख्यो ज्वरोऽस्यास्तीति वातबलासकी नरः, तेन ज्वरेण, शूनकः=शोथी, सीदत्यवसन्नो भवति, शोथिनः स उपद्रव इत्यर्थः । 'शूनः कृच्छ्रेण सिध्यति' इति पाठान्तरे 'तेन' इति शेषः । वातबलासकमेके कुम्भाह्वय—पाण्डुरोगविषयमाहुरिति गयादासः । वातबलासकारब्धत्वाद्वातबलासकः; बलासकः=श्लेष्मा, पित्तमप्यत्र बोद्धव्यम् । यदुक्तं तन्त्रान्तरे—"वायुः प्रकुपितो दोषावुदीर्योभौ विधावति । स शिरस्थः शिरःशूलम्"—इत्यादि । यच्चोक्तं सुश्रुतेन—"प्रलेपकं वातबलासकं वा कफाधिकत्वात्प्रवदन्ति तज्ज्ञाः"—इति ( सु. उ. तं. अ. ३९ ) तत्तु श्लेष्मणो नित्यानुषक्तत्वेनेति जेज्जटः । रूक्षत्वं चास्य वातपित्ताभिभूतत्वात्कफस्नेहस्य, व्याधिप्रभावाद्वेति ॥ ४० ॥

भा०टी०—वात बलासक ज्वर के लक्षण—हर समय शरीर में मन्दरज्वर बना रहे शरीर रुखा रहे, शरीर में सूजन हो जाय, (यह सूजन सब शरीरमें नही होती प्रायःहाथमें

१—पूर्वं चतुर्थकज्वरप्रकरणे मधुकोषे—"प्रलेपकोऽविषमोऽपि विषमसहचरितः पठितः कफस्थानोत्पादादिति—" उक्तम्, तत्सङ्गत्या यथा प्रलेपकः शोषिण उपद्रवस्तथा वातबलासकोऽपि, इत्युपद्रवत्वेन प्रलेपकतुल्यधर्मा वातबलासकः प्रलेपकनिर्देशादनन्तरं—वक्तव्यस्तथापि प्रतिलोमतन्त्रयुक्त्या पूर्वं वातबलासकस्यैव लक्षणमुच्यत इत्यर्थः ।

प्रलेपकमाह— **Hectic Fever**—हेक्टिक्फीवर

अथ प्रलेपकज्वरलक्षणम् ।

प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च ।
मन्दज्वरविलेपी च सशीतः स्यात्प्रलेपकः ॥ ४१ ॥

( वृ० वा० अ० ३ )

म०–प्रलिम्पन्नित्यादि । मन्दज्वरश्चासौ विलेपी चेति मन्दज्वरविलेपी, विलेपित्वं चास्य यस्माद्धर्म-गौरवाभ्यां लिम्पति=संबध्नातीत्यर्थः । अयं च कफ-पित्तजः । यदुक्तं सुश्रुतेन–"प्रलेपकं वातबलासकं वा"–( सु. उ. तं. अ. ३९ ) इत्यादि । तथा यक्ष्मणि "ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः" ( सु. उ. तं. अ. ४१ )–इत्युक्तं, यक्ष्मणि चायं भवतीति । अन्ये तु त्रिदोषज–यक्ष्म-जनितत्वेन त्रिदोषज एवायम्, उद्भूतत्वेन तु कफपित्तव्यपदेशः ॥ ४१ ॥

भा०टी०–प्रलेपक ज्वर के लक्षण–पसीना इस तरह निकलता रहे कि जान पड़े कि पसीना से किसी ने शरीर को लीप दिया है, शरीर में भारीपन रहे । ज्वर मन्द २ रहे, कुछ २ जाड़ा लगे । यह प्रलेपक ज्वर राजयक्ष्मा में होता है । प्रातःकाल नहीं जान पड़ता, दो पहर के बाद और सायंकाल तथा रात्रि में ऊपर मालूम पड़ता है, और रोगी पसीना से नहा उठता है ॥ ४१ ॥

विषमज्वरविशेषानाह–

देहार्द्धजातज्वरलक्षणम् ।

विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते ।
तेनार्धं शीतलं देहे चार्धं चोष्णं प्रजायते ॥ ४२ ॥

म०–विदग्ध इत्यादि । विदग्धेऽन्नरसे दुष्टे आहाररसे तथा दुष्टे पित्ते दुष्टे श्लेष्मणि च व्यवस्थिते सति, तेन हेतुना देहेऽर्धं शीतलं कफेनार्धं चोष्णं पित्तेन प्रजायते । अर्धत्वम् चार्धनारीश्वराकारेण, नरसिंहाकारेण वा, यथादोषम् व्यवस्थाननियमहेतोरभावादिति ॥ ४२ ॥

भा०टी०–अर्ध देह ज्वर की सम्प्राप्ति–शरीर में भोजन के ठीक न हजम होनेसे कफ पित्त कुपित होकर उल्टी रीति से हों तो आधा शरीर ठण्डा रहता है और आधा ज्वर से गरम ॥ ४२ ॥

शीत-पाणि-पाद-ज्वरलक्षणम् ।

काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः ।
तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः ॥ ४३ ॥

म०-काय इत्यादि । कायेऽन्तरग्नौ, कोष्ठ इति यावत् । अन्ते=हस्त-पादयोः ॥ ४३ ॥

भा०टी०-जब धड़-पेट में पित्त कुपित होता है और कफ हाथ पाँव में कुपित रहता है तो शरीर गरम, और हाथ पाँव ठण्डे रहते हैं ॥ ४३ ॥

उष्ण-पाणि-पाद-ज्वरलक्षणम् ।

कायें श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम् ।
शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः ॥ ४४ ॥

म०-उक्तार्थस्य विपर्ययेण ज्वरान्तरमाह--काये श्लेष्मेत्यादि ॥ ४४ ॥

भा०टी०-और जब शरीर में कफ बिगड़ा रहता है और पित्त हाथ पाँव में कुपित होता है तो शरीर ( पेट ) ठण्डा और हाथ पाँव गरम रहते हैं ॥ ४४ ॥

शीत-दाह-पूर्वज्वरयोर्लक्षणम् ।

त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ॥ ४५ ॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ।
तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ॥ ४६ ॥

म०-त्वक्स्थावित्यादि । त्वक्शब्देन त्वक्स्थो रस उच्यते, [1]तत्स्थस्य तदुपचारेणेति गदाधरः, जेज्जटस्तु त्वचमेवाह । एतदभिप्रायेणैव चरकेण ज्वरेऽभ्याङ्गार्थं तैलादीन्यभिधायोक्तम्—'तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः'—इति ( च. चि. स्था. अ. ३ ) । तयोः=श्लेष्मानिलयोः । प्रशान्तयोरिति प्रशान्तवेगयोः, नहि विषमेषु दोषस्य प्रशान्तिर्भवति, पुनर्वेगागमात् । यदाह सुश्रुतः—'स

१ तत्स्थस्येति—तस्मिन् त्वग्रूपस्थने तिष्ठतीति तत्स्थस्तस्य । उपचारेण आरोपेण

चापि विषमो देहं न कदाचिद्विमुञ्चति । ग्लानि-गौरव-कार्श्येभ्यः स यस्मान्न प्रमुच्यते ॥ वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते । धात्वन्तरस्थो लीनत्वात्सौक्ष्म्यान्नैवोपलभ्यते ॥' इति ( सु. उ. तं. अ. ३९ ) इतरौ=वात-कफौ ॥ ४५ ॥ ४६ ॥

भा०टी०—कफ और वात चमड़ा में रहते हुए ज्वर में पहले जाड़ा पैदा करते हैं, बाद इन दोनों के वेग ( जोर ) कम होजाने पर पित्त उभड़ कर दाह ( जलन ) पैदा करता है। यही ज्वर जूड़ी है ॥ ४५ ॥

उसी प्रकार यदि त्वचा में पित्त रहता है तो ज्वर में पहले दाह होता है, और बाद पित्त के वेग के कम होजाने पर कफ उमड़ कर अन्दर से जाड़ा पैदा करता है ॥ ४६ ॥

अथैतयोः साध्यविवेकः ।

**द्वावेतौ दाहशीतादिज्वरौ संसर्गजौ स्मृतौ ।**
**दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः ॥ ४७ ॥**

( सु० उ० अ० ३९ श्लो० २४ )

म०—दाहशीतादीति । एको=दाहादिः, अपरः=शीतादिः । ननु एतयोः संप्राप्तौ त्रिदोषजत्वमुक्तं तत्कथं संसर्गजावित्युक्तम् ? संसर्गो हि द्वयोर्भवति त्रयाणां सन्निपात इति स्थितिः[1] । उच्यते, संसर्गः=संबन्धः स च द्वयोर्बहूनां च भवति, अत्र त्रयाणामुक्तः, न[2] चैवं सर्वत्र, अथवा संसर्गः = सौम्या[3]–ऽऽग्नेय-दोष—कोटिद्वय—मेलकः । तत्र शीतादौ ज्वरे पित्तमनुबन्धः, दाहादौ वात-कफावनुबन्धौ, अनुबन्ध्यश्च प्राधान्येन चिकित्स्योऽनुबन्धाविरोधेनेति प्रयोजनमेतस्य । तयोर्दाह-शीता-ऽऽदि—ज्वरयोर्मध्ये दाहपूर्वो = दाहादिः कष्ट इति दुःखप्रदः । दाहादेः कष्टसाध्यत्वाभिधानेन शीतादेरर्थतोऽकष्टत्वमिति । उक्तविषमज्वराणामुपलक्षणत्वादन्येऽपि विषमज्वरा रात्रिज्वरादयो बोद्धव्या इति जेज्जटः । उक्तं च तन्त्रान्तरे-'समौ वात-कफौ यस्य क्षीणपित्तस्य देहिनः । प्रायो रात्रौ

---

१ स्थितिर्व्यवस्था ।

२ अत्रैव संसर्ग पदेन त्रिदोष जत्वमुच्यते नतु सर्वत्र, प्राय आयुर्वेदे संसर्ग शब्दस्य "द्वयो दोषयोः सम्बन्धः" इत्यर्थस्य प्रसिद्धेस्तथैवसिद्धान्ताच्च । तथा चोक्तं वाग्भटेन–"संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः" इति । तयोर्द्वयो दोषयोर्मिलितयोः क्षयकोपाभ्यां संसर्गः । तेषांत्रयाणां दोषाणां संमिलितानां क्षयकोपाभ्यां सम्बन्धः सन्निपात इत्यर्थः

३ सौम्या इति सोम सम्बन्धि शीतं तद्दोषः श्लेष्मा वायुश्च । आग्नेयमग्निसम्बन्धोदाहस्तद्दोषः पित्तं, मेलकः सङ्गः ।

ज्वरस्तस्य दिवा हीनकफस्य तु ॥' इति । सर्वेषु च विषमज्वरेष्ववश्यंभावि वायुः । तदाह वृद्धसुश्रुतः–"नर्तेऽनिलाद्धि विषमज्वरः समुपजायते । कफ-पित्ते हि निश्चेष्टे[1] चेष्टयत्यनिलः सदा ॥" इति ( सु. उ. तं. अ ३९ )। तथा विदेहेऽपि-पवनो गतिवैषम्याद्विषमज्वरकारणम्"-इति । एषां च ज्वराणामृत्वादिहेत्वन्तरलाभादन्यथाभावोऽपि दृश्यते । तद्यथा-सन्ततः स्वरूपं त्यक्त्वा सततादीनामन्यतमत्वं प्रतिपद्यते, तथा*चतुर्थकस्तृतीयकादिरूपत्वम् । यदाह चरकः-"ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात् । कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते ॥" इति ( च. अ. स्था. चि. ३ )। अस्यार्थः । बलाबलादिति ऋत्वादिमनोऽन्तेन संबध्यते, बलं चाबलं च बलाबलम् । अर्थशब्दोऽत्र प्राक्तनकर्मवाची, तं तं कालं सततकाद्युक्तम् ज्वरः प्रतिपद्यते इति योजना । (उदाहरणं च )-ऋत्वहोरात्रबलाद्यथा–यदा निदाघोत्पन्नो वातप्रधाश्चतुर्थको वर्षासमयमाप्नोति तदा तेनर्तुनाऽऽप्या[2]यितबलस्तृतयिकान्तानां×सततकादीनामन्यतमत्वं प्राप्नोत्युत्कर्षात् । एवं वर्षासमुत्पन्नः सन्ततः शरदं प्राप्यापकृष्टबलः सततादीनामन्यतमत्वमेत्यपकर्षात् । एवं पित्त-कफयोरप्युत्कर्षापकर्षावृतुकृतौ व्याख्येयौ । अहोरात्रशब्देन कतिपयान्यहोरात्राणि गृह्यन्ते, नह्येकस्मिन्नहोरात्रे सततादीनानामुत्कर्षापकर्षाभ्यामन्यथाभाव उपपद्यते, किंतु कतिपयैरेव । यदा वर्षाशरद्-वसन्त-प्रारम्भे वातादयो ज्वरं चतुर्थकमारभन्ते तदा मध्यानि कतिपयदिनान्यवाप्य स एव तृतीयकपूर्वत्वेन विपरिणमते उत्कर्षात्; अपकर्षात्तु यदाऽन्त्यानि दिनान्याप्नोति तदा सन्ततो वातारब्धः प्रावृषः पित्तारब्धः शरदो वसन्तस्य च श्लेष्मारब्धः, प्रतनुकत्वाद्दोषस्य सतनदीनामन्यतमत्वेन विपरिणमत इति । दोषबलाबलाद्यथा—यदा सततादीनामन्यतमकारी दोषः श्लेष्मा मधुरस्निग्धादीन् दिवास्वप्नादींश्च हेतूनाप्नोति तदा सन्ततकादीन् करोति । एवं वात-पित्तयोरप्यूह्यम् । मनोबलाबलाद्यथा-यदा सन्ततज्वरी सत्त्वगुणोद्रेकात्[3] हर्षावष्टम्भबहुलो भवति तदा सततादीनामन्यतमत्वं प्राप्नोति; यदा चतुर्थकज्वरी तमोगुणभूयिष्ठत्वाद्विषादादिभिरभिभूयते तदा

---

१ निश्चेष्टे क्रियाहीने–अकिञ्चित्करे, इत्यर्थः ।

२ आप्यायितबलो लब्धबलः । अपकृष्टबलो हीनबलः । प्रतनुकत्वात् क्षीणबलत्वात् ।

३ अवष्टम्भः सम्बन्धः प्रहर्षस्यावष्टम्भ सएव बहुलो यस्य सः ।

---

* 'तृतीयकचतुर्थकादिरूपत्वम्' इति पाठान्तरम् ।

× 'तृतीयकादीनामन्य..मत्वम्' इति पाठान्तरम् ।

तृतीयकादीनामन्यतमो भवति, "विषादो रोगवर्धनानाम्" ( च. सू. स्था. अ. २५ ) अन्ये तु मनःशब्देन बुद्धिं व्याख्यानयन्ति, कारणे कार्योपचारात् । तस्याश्च बलाबलं यथा–यदा चतुर्थकज्वरी, प्रज्ञापराधाद्देवादीनभिभूयाहितान्याचरति तदा तृतीयकपूर्वेषामन्यतमत्वमाप्नोति; यदा तु शुद्धसत्त्वोत्कर्षाद्विवेकिन्या बुद्ध्या युक्तः स्यात्तदा शुभानि देवताऽऽराधनेष्टिबल्युपहारादीन्याचरति तदा सन्ततज्वरी सततादीनामन्यतमत्वं प्राप्नोति । अथर्वशाद्यथा-सन्ततज्वरिणोऽपि यदि चतुर्थक[1]वेदनीयं कर्म स्यात्तदा सन्ततोऽपि चतुर्थकत्वेन विपरिणमते । अथ चतुर्थकज्वराविष्टस्य यदि तत्कालपरिपाकि कर्म बलीयो भवति तदा सन्ततत्वेन परिणमते । एतच्च कर्मवशत्वम्, ऋत्वहोरात्र-दोष-बलाबलेष्वपि बोद्धव्यम्, [2]तदन्तरं तन्निर्देशादिति ॥४७॥

भा०टी०–ये दोनों दाहादि और शीतादि ज्वर जिसमें पहले दाह होता है, तथा जिसमें पहले जाड़ा लगता है, संसर्गज-( कई दोषों से ) होते हैं, ( अर्थात् सन्निपातज अथवा संसर्गज=) ठण्डे और गर्म दोषों से पैदा होते हैं । इन दोनों में दाहपूर्वक अत्यन्त दुःख देने वाला और कष्टसाध्य, है, और शीत पूर्वक सुखसाध्य ॥ ४७ ॥

## अथ सौश्रुतानि सप्तधातुगतज्वराणां लक्षणानि ।

उक्तवातादिज्वराणां धातुविशेषदूष्यताऽधिकलक्षणानि भवन्ति । यदुक्तं- "वात-पित्त-कफोत्थानां ज्वराणां लक्षणं तथा । तथा तेषां भिषग्ब्रूयाद् रसादिष्वपि बुद्धिमान् ॥" इति । एतदभिधानं च रसादिगतत्वविरोधेन वातादिचिकित्साकरणार्थम् । अतस्तानाह—

### तत्रादौ रसधातुगतज्वरस्य लक्षणम् ।

**गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ।**
**रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥ ४८ ॥**

म० -गुरुतेत्यादि । हृदयोत्क्लेशः=हृदयस्थितस्य दोषस्योपस्थितवमनत्वमिव रसस्य हृदयस्थत्वात् । रसस्थ इत्यनेन विशेषणात्र रसो दूष्यः, सर्वेषामेव ज्वराणां रसानुगतत्वात् । दैन्यं=क्लान्तचित्तत्वम् ॥४८॥

भा०टी०–रसधातुगत ज्वर के लक्षण-शरीर भारी रहे, ओकाई आवे, सुस्ती रहे, कय, अरुचि, दैन्य=अपने को अकेला समझे, कोई भी उसे सहायक न जान पड़े या मन उदास रहे ॥ ४८ ॥

---

१ वेदनीयमनुमेयम् ।

२ तदनन्तरमिति–तेनामृत्वहोरात्रादीनामनन्तरम् तस्य–अर्थस्य–प्राकनकर्मवाचिनः, निर्देशात् कथनादित्यर्थः ।

रक्तधातुगतज्वरलक्षणम् ।

रक्तनिष्ठीवनं दाहो मोहश्छर्दन-विभ्रमौ ।
प्रलापः पिडका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ ४९ ॥

भा०टी०—रक्तगत ज्वर के लक्षण—खून थूके, दाह, मोह=कुछ न समझे, कय, विभ्रम=चित्त व्याकुल रहे। प्रलाप, प्यास, शरीर भर में या किसी एक जगह फुन्सियाँ निकल आयें ॥ ४९ ॥

मांसधातुगतज्वरलक्षणम् ।

पिण्डिकोद्वेष्टनं तृष्णा सृष्ट-मूत्र-पुरीषता ।
ऊष्मा-ऽन्तर्दाह-विक्षेपौ ग्लानिःस्यान्मांसगे ज्वरे ॥५०॥

म०—पिण्डकेत्यादि । पिण्डिका=जान्वधो जङ्घामांसपिण्डः, तस्या उद्वेष्टनं=दण्डादिना पीडनेनेव वेदना पिण्डिकोद्वेष्टनम्, एवमन्यत्रापि । सृष्ट-मूत्र-पुरीषता=प्रवर्तमान-मूत्र-पुरीषता । ऊष्मा=बहिः, एतच्च विशेषपरं, प्रायः सर्वज्वरेषु तथाभावात् । "ऊष्मा—ऽन्तर्मोह-विक्षेपौ "—इति पाठान्तरे, ऊष्माऽन्तः= अन्तर्दाह इत्यर्थः, विक्षेपो=हस्तादिचालनम् ॥ ५० ॥

भा०टी—मांसगत ज्वर के लक्षण—पेंडुरी में ऐठन समान दर्द हो, प्यास, छुन २ पर पाखानाऔर पेशाब हो, बाहर गरमी मालूम हो, शरीर के अन्दर जलन, हाथ पैर पटका करे, मन प्रसन्न न रहे ॥ ५० ॥

अथ मेदोधातुगतज्वरलक्षणम् ।

भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च ।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥ ५१ ॥

म०—भृशं स्वेद इति । घर्मस्य मेदोमलत्वात्; तद्विकृत्यैव दौर्गन्ध्यं गात्रे । असहिष्णुता=वेदनाया असहत्वम्, क्रोधनत्वमिति कार्तिकः ॥ ५१ ॥

भा०टी०—मदोगत ज्वर के लक्षण—पसीना बहुत निकले, प्यास, मूर्छा, प्रलाप, कय, शरीर में पसीना अधिक निकलने से बदबू आवे, अरुचि, पीड़ा सह न सके कँहरा करे॥ ५१ ॥

---

१ वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः ।
नचान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत् । सु० शा० ।

मन न लगै, ( बेचैनी ) संमोह=मन ठिकाने न रहे, गुदकी वलियाँ पकजाँय, प्रलाप हो तो वैद्य ऐसे अतिसार के रोगी की दवा न करे, क्यों कि यह अतीसार अच्छा नहीं होता, यदि इतना दस्त बराबर हो कि गुदा बंद न हो, रोगी बहुत क्षीण होगया हो, वायु से पेट बहुत फूलता हो, उपद्रव उत्पन्न होगये हों, ( शोथ, शूल, ज्वर, तृष्णा, श्वास, खांसी, अरुचि, कय, वेहोशी, हिचकी, ये अतिसार के उपद्रवहैं ) दस्त के साथ शरीर की गरमी ( पित्त ) गुदमें आकर उसे पकादे और सब शरीर शीत हो जाय तो अतिसार का रोगी नहीं बचता। वैद्य उसकी चिकित्सा न करे। यदि अतिसार में श्वास, शूल, प्यास, क्षीणता और ज्वर हो तो, और विशेष कर वृद्ध पुरुष का अतिसार अच्छा नहीं होता ॥ १४-१६ ॥

### अथ रक्तातिसारलक्षणम् ।

ननु रक्तजोऽप्यतिसारोऽस्ति तस्य सप्तमत्वापत्तेरुक्तं षट्कं विरुध्यते, इत्याशङ्क्य पैत्तिकस्यायमवस्थाविशेष इत्याह—

**पित्तकृन्ति यदाऽत्यर्थं द्रव्याण्यश्नाति पैत्तिके ।**
**तदोपजायतेऽभीक्ष्णं रक्तातीसार उल्बणः ॥ २० ॥**

**म०पित्ते** त्यादि । पैत्तिकेऽतीसारे विद्यमाने भविष्यति वा पित्तकृन्ति=पित्त-कारकाणि द्रव्याण्यत्यर्थं=प्रभूतमभीक्ष्णं=निरन्तरमश्नाति तदा रक्तातीसार उल्व-णो=महानुपजायत इति संबन्धः । अत्र चारुण-कृष्ण-पाण्डु-त्वादिना वातादयो दूषका बोद्धव्याः । यदुक्तम्—"दोषलिङ्गेन मतिमान् संसर्गं तत्र लक्षयेत्" इति । एवं स्नेहाजीर्ण-विसूचिका-विषार्शः-क्रिमि-प्रभृतिजन्येष्वतीसारेषु षट्कातिरिक्तत्वं प्रतिक्षिप्तं बोद्धव्यम्, अव्यभिचरितदोषलिङ्गत्वादिति जेज्जटः ॥ २० ॥

भा० टी०-पित्तातिसार के लक्षण-पित्त का अतिसार हुआ हो या होनेवाला हो, उस हालत में यदि मनुष्य पित्तकारक पदार्थ अत्यन्त खाता है तो बहुत जवर्दस्त रक्तातिसार पैदा हो जाता है ॥ २० ॥

### अथ प्रवाहिकायाः सम्प्राप्तिः । (Dysentery) डिसेन्ट्री

अथ द्रवसरणादामपक्वलक्षणयोगात्प्रवाहिकातीसारयोः साधर्म्यम्, अतोऽतीसाराधिकारे प्रवाहिका[1]सम्प्राप्तिमाह—

**वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य ।**
**प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः २१**

( सु० उ० अ० ४० श्लो० २४ )

---

१ प्रवहति गुदेन कफोऽत्र, प्रवहणं वा । प्रपूर्वकाद्वहतेः रोगाख्यायामिति ण्वुल्, टाप्, प्रात्ययस्थादिति इदादेशश्च।

म०—वायुरित्यादि । अतीसारे नानाविधद्रवधातुसरणं प्रवाहिकायां तु कफमात्रसरणमिति भेदः । निचितं बलासमाहिताशनस्य संचितं कफम्, मलाक्तं=पुरीषसहितं, वायुर्वातः, अधस्तान्नुदति=गुदेन पातयति । प्रवाहतः=प्रवाहणं कुर्वतः भोजादौ त्रियं विस्रंसीति नाम्ना पठ्यते; पराशरे त्वन्तर्ग्रन्थिरिति । हारीतस्तु निश्चारकाख्यामेतां पठति । यदाह—"प्रवाहिकेति सा ज्ञेया कैश्चिन्निश्चारकस्तु सः"—इति ॥ २१ ॥

भा०टी०—प्रवाहिका के लक्षण-अहित भोजन करने से वायु बिगड़कर संचित कफ को मलके साथ थोड़ा २ गुदमार्ग से बार बार गिराता है, वैद्य लोग उसे प्रवाहिका कहते हैं । कोई इसे विस्रंसी, कोई अन्तर्ग्रन्थि और कोई निश्चारक भी कहते हैं । अतिसार में अनेक प्रकार का पतला धातु गिरता है और प्रवाहिका में केवल कफ, यही इन दोनों में परस्पर भेद है ॥ २१ ॥

अथ सर्वासां प्रवाहिकानां पृथक् पृथक् लक्षणानि ।

तस्या वातादिभेदेन रूपमाह—

**प्रवाहिका वातकृता सशूला, पित्तात्सदाहा, सकफा कफाच्च ।**
**सशोणिता शोणितसंभवा च ताः स्नेह-रूक्ष-प्रभवा मतास्तु ।**
**तासामतीसारवदादिशेच्च लिङ्गं क्रमं चाम-विपक्वतां च ॥२२॥**

( सु० उ० अ० ४० श्लो० ३१ )

म०—प्रवाहिकेत्यादि । ननु वायुः प्रवृद्धो निचितं बलासमित्युक्तं तत्कथं वातकृतेति ? उच्यते, आधिक्येन व्यपदेशात्[1] । ननु तथापि पित्त-रक्त-संभवा कुतः ? उच्यते, अहिताशनस्येत्युक्तम्, आहारो हि विरुद्धस्तस्यामवस्थायां पित्तं रक्तं च कोपयति, ते च पश्चाद्वातस्यानुबले स्वलिङ्गं यदा दर्शयतस्तदा ताभ्यां व्यपदेशः स्नेह-रूक्ष-प्रभवा इति स्नेहप्रभवा=कफजा, रूक्षप्रभवा=वातजा; तुशब्दाच्च तीक्ष्णोष्णप्रभवा=पित्तजा रक्तजा च । लिङ्गं=वातादिभेदेन लक्षणम् । क्रममामपक्व-भेदेन चिकित्साक्रममिति ॥ २२ ॥

भा०टी०—यदि प्रवाहिका में वात अधिक रहता है तो शूल, और पित्तके आधिक्य में दाह होता है । कफ की अधिकता में कफ अधिक निकलता है । रक्त रहने पर पाखाना में खून निकलता है । प्रवाहिका में वात आदि के लक्षण, आम और पक्व की पहचान तथा चिकित्साक्रम अतिसार की तरह जानना चाहिए ॥ २२ ॥

---

१ व्यपदेशात्-व्यवहारात् ।

## अथ मुक्तातिसारलक्षणम् ।

वातविष्टम्भादुदावर्ताद्वा मलाप्रवृत्तावतीसारानिवृत्तिरिति शङ्कानिरासार्थमतीसारानिवृत्तिलक्षणमाह—

**यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।**
**दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥ २३ ॥**

( सु० उ० अ ४० श्लो० ३१ )

**( ज्वरातीसारयोरुक्तं निदानं यत्पृथक् पृथक् ।**
**तस्याज्ज्वरातिसारस्य तेन नात्रोदितं पुनः ॥ १ ॥ )**

इति श्रीमाधवकरविरचिते माधवनिदानेऽतीसारनिदानं समाप्तम् ।

**म०-यस्येत्यादि** । उच्चारं विना यस्य मूत्रं प्रवर्तते, सम्यगिति सम्यक्-प्रवृत्त्या न हीनयोगेनेत्यर्थः । वायुश्च गच्छति, गुदेनेति शेषः । स्थितो=निवृत्तिं गतः । उदरामयोऽतीसारः; प्रकरणात् । एतेन संप्राप्तिभङ्ग उक्तः । अतीसारे हि संप्राप्तिरियम्—यन्मूत्रोचितोऽपि द्रवधातुर्गुदेनैव प्रवर्तते, सर्वस्यैवाब्धातोर्गुदप्रवृत्तत्वात् । यदा तु मूत्रमार्गेण प्रवर्तते, तदाऽपि पुरीषप्रवृत्तिसमकालमिति ॥ २३ ॥

भा०टी०-अतिसार के अच्छे हो जाने के लक्षण—अतिसारमें पेटकी सब पानीदार चीजें पाखाने के ही रास्तेसे निकलती हैं अतः मूत्र मालूम होने पर भी मूत्र न होकर वह गुदाकेही रास्ते निकल जाता है, यदि होता भी है तो पाखाना पेशाब एक साथ ही होताहै। हवा भी साथ ही खुलतीहै। अलग नहीं। जब कि ये बातें न हों, पाखाना पेशाब और हवा अलग जाय, अग्नि दीप्त और पेट हल्का हो तो समझना चाहिए कि अतिसार रोग अच्छा हो गया ॥ २३ ॥

भा०टी०—यदि किसी को ज्वर और अतिसार साथही हो तो उन दोनों के जो अलग २ लक्षण पहले लिखे गये हैं उनके द्वारा समझ लेना चाहिए कि किस दोष से यह रोग है। अतः अलग लक्षण दोनों का नहीं लिखा गया है।

इति श्री हरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय भाषाटीकायामतीसारनिदानम्



## अथ ग्रहणीरोगनिदानम्

( Indian Sprue, ) ( Duodinal Diarrhoea )
इन्डियन स्प्रू डुऑडिनल डायरिया

### अथ ग्रहण्याः सम्प्राप्तिः ।

द्रवसरणसाधर्म्यात्परस्परानुबन्धित्वाच्चातीसारानन्तरं ग्रहणी, तस्याः संप्राप्तिमाह—

अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ।
भूयः संदूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥ १ ॥

( सु० उ० अ० ४० श्लो० ३३ )

म०—अतीसार इत्यादि । अपिशब्दादानिवृत्तेऽप्यतीसार इति व्याचक्षते । मन्दाग्नेरित्यनेन दीप्ताग्नेरहिताशनमपि न विकारकारीति बोधयति । उक्तं हि—"दीप्ताग्नेर्विरुद्धं[1] वितथं भवेत्" ( सु. सू. स्था. अ. २० ) इति । भूय इति पुनरत्यर्थं वा, संदूषितः पूर्वमतीसारेऽपि दूषितत्वात्, अभिदूषयेत्=समन्ताद्दूषयेत् । एतेन निवृत्तातीसारेणाहिताऽऽहारपरिहारः करणीयः, आवह्निबललाभादित्युक्तं भवति । अत एवाह सुश्रुतः—"तस्मात्कार्यः परीहारस्त्वतीसारे[2] विरिक्तवत् । यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥" ( सु. उ. तं. अ. ४० )—इति ॥ १ ॥

भा० टी०—अतिसार में मन्दाग्नि अधिक होता है, अतिसार के अच्छे हो जाने पर भी कुछ दिन तक मन्दाग्नि रहता ही है, उससमय यदि कोई मनमानी अहित भोजन करता है तो मन्दाग्नि और प्रबल होकर ग्रहणी अङ्ग को विगाड़ देता है । अतिसार होने परही ग्रहणी होती है, यह बात नहीं, बिना अतिसार के—जिसे अतिसार नहीं हुआ रहता है, उसे भी ग्रहणी रोग होजाता है ॥ १ ॥

---

१ विरुद्धं विरुद्धभोजनं, वितथं व्यर्थमव्यापत्तिकरमित्यर्थः ।

२ अतिसारे निवृत्ते यावत् दोषतो वातादिभिः प्राणतो बलेन प्रकृतिस्थः स्वस्थो न भवेत्तावत् विरिक्तवत् गृहीतविरेचनरुग्णवत् परिहारोऽपथ्यपरित्यागः कार्य इति ।

## अथ संग्रहण्याः संम्प्राप्तिपूर्वकं सामान्यलक्षणम् ।

तस्याः संप्राप्तिपूर्वकं सामान्यलक्षणमाह—

एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ २ ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ३ ॥

( सु० उ० अ० ४० श्लो० ३६ )

**म०**–एकैकश इत्यादि । मूर्च्छितैरतिवृद्धैः, 'मूर्च्छा मोह-समुच्छ्राययोः' इति धात्वर्थात् । 'उच्छ्रितैः'–इति पाठान्तरे स एवार्थः । सा ग्रहणी दोषैर्दुष्टा सती भुक्तमाहारमाममपक्वमेव पक्वं वा विमुञ्चति । वाशब्दश्चार्थे, एवकारः समुच्चीयमानावधारणे, यथा–"नरं च नारायणमेव चोभौ स्वतःसुतौ संजनयाम्बभूवतुः"—इति । अथवा एवकारो विकल्पार्थः, निपातानामनेकार्थत्वादिति । सरुजं=सशूलं, पूति=दुर्गन्धि । वातेन मुहुर्बद्धं, पित्तेन मुहुर्द्रवम् । ग्रहणीरोगमिति ग्रहण्या रोगो ग्रहणीरोगः । ग्रहणी=चाग्न्यधिष्ठानं नाडी । यदाह चरकः–"अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता । नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता ॥ अपक्वं धारयत्यन्नं पक्वं सृजति चाप्यधः।' ( च. चि. स्था. अ. १५ ) इति । सुश्रुतेऽप्येतदुक्तम्–"षष्ठी पित्तधरा नाम या कला परिकीर्तिता । पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्तिता ॥" ( सु. उ. तं. अ. ४० )–इति । कला=धात्वाशयान्तरमर्यादा, पक्वामाशयमध्यस्था=पच्यमानाशयरूपेत्यर्थः ॥ २ ॥ ३ ॥

**भा० टी०**–ग्रहणी रोगकी सम्प्राप्ति और सामान्य लक्षण—कुपित हुए अलग २ एक२ वा सन्निपात दोषों से ग्रहणी बिगड़ जाती है । तब जो कुछ खाया जाता है वह बहुत करके कच्चाही गिर पड़ता है । कभी २ पका भी गिरताहै । बदबू अधिक आती है, पीडा होती है, कभी पतला दस्त होता है और कभी बँधा हुआ । आयुर्वेद के ज्ञाता वैद्य लोग उसे ग्रहणी रोग कहते हैं । २–३ ॥

## अथ ग्रहणीरोगस्य पूर्वरूपम् ।

पूर्वरूपमाह—

पूर्वरूपं तु तस्येदं तृष्णाऽऽलस्यं बलक्षयः ।
विदाहोऽन्नस्य पाकश्च चिरात्कायस्य गौरवम् ॥ ४ ॥

( च० चि० अ० १६ श्लो० ५२ )

म०—पूर्वरूपमित्यादि । तृष्णा=पिपासा । विदाहोऽन्नस्य अग्निमान्द्येनाहारस्य विदग्धत्वम्, अत एव चिरात् पाकश्चान्नस्यैव । कायस्य गौरवं सामत्वादिति ॥ ४ ॥

भा०टी०—ग्रहणी का पूर्वरूप—प्यास, आलस्य सुस्ती, अन्न आधा हजम हो और देर में हजम हो, शरीर भारी मालूम हो ॥ ४ ॥

### अथ वातिकग्रहण्या निदानपूर्विका सम्प्राप्तिः ।

वातिकग्रहण्या निदानपूर्विका सम्प्राप्तिमाह—

कटु-तिक्त कषायातिरूक्ष-संदुष्ट-भोजनैः ।
प्रमितानशनात्यध्व-वेगनिग्रह-मैथुनैः ॥ ५ ॥
मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् ।

म०—कटुतिक्तेत्यादि । संदुष्टभोजनं=संयोगादिविरुद्धभोजनम् । संदुष्टभोजनैरित्यत्र शीतादिभोजनैरिति पाठान्तरम् । प्रमितमल्पभोजनम्, प्रमृतेति पाठान्तरे अतीतकालभोजनं बोद्धव्यम् । अनशनमुपवासः । एतैः कारणैः कुपितो मारुतः वह्निं संछाद्य=संदूष्य, गदान् करोति ॥ ५ ॥—

भा० टी०-वातिक ग्रहणी का निदान और सम्प्राप्ति—कटु, तिक्त, कसैला, रूखा, विरुद्ध-भोजन, खुराकसे बहुत कम खाना, उपवास, अधिक रास्ता चलना, पाखाना पेशाब रोकना, अधिक मैथुन, इन कारणों से पेटका वायु विगड़ कर अग्नि को विगाड़ कर रोगों को पैदा कर देताहै ॥ ५ ॥

### अथ वातिकग्रहण्या लक्षणानि ।

कान् गदान् करोतीत्याह—

तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ॥ ६ ॥
कण्ठाऽऽस्यशोषोऽक्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ।
पार्श्वोरुवङ्क्षण-ग्रीवा-रुगभीक्ष्णं विसूचिका ॥ ७ ॥
हृत्पीडा-कार्श्य-दौर्बल्यं वैरस्यं परिकर्तिका ।
गृद्धिः सर्वरसानां च मनसः सदनं तथा ॥ ८ ॥

जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ।
स वातगुल्म-हृद्रोग-प्लीहाऽऽशङ्की च मानवः ॥ ९ ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्द-फेन-वत् ।
पुनः पुनः सृजेद्वर्चः कास-श्वासार्दितोऽनिलात् ॥ १० ॥

( च० चि० अ० १६ श्लो० ५८-६२ )

म०-तस्यान्नमित्यादि । शुक्तपाकम्=अम्लपाकम्, एतच्चाग्निमान्द्यजनितान्नविदाहाद्भवति । खराङ्गता=कर्कशशरीरत्वम्, वातेन त्वग्गतस्नेहशोषात् । तिमिरं=मन्ददृष्टिता । रुक् पीडा, सा च पार्श्वादिभिः संबध्यते । विसूचिका=ऊर्ध्वमधश्चान्नप्रवृत्तिः । वैरस्यं=विरुद्धरसास्यता । परिकर्तिका=गुदे कर्तनवत्पीडा । गृद्धिः=काङ्क्षा, सर्वरसानां मधुरादीनां, कर्मणि षष्ठी । एतच्च वातदूषितान्तःकरणत्वेन, व्याधिमहिम्ना वा । मनसः सदनमवसादः । आध्मानं जीर्णे जीर्यति च "अन्ने" इति शेषः । स वातगुल्म-हृद्रोग-प्लीहाऽऽशङ्कीति वातगुल्मादिवत्पीडायुक्तत्वात्तच्छङ्की । द्रवं शुष्कं=कदाचित् द्रवं कदाचित् शुष्कम् । तनु=अल्पमिति ॥ ६-१० ॥

भा०टी०-इस आदमीका भोजन दुःखके साथ पचताहै,खट्टी डकार आतीहै । शरीर रूखा हो जाता है । गला मुंह सूखता है । भूख प्यास बंद होजाती है । आँख की रोशनी कम हो जाती है । कानमें साँयर आवाज उठती है, पँसुली वङ्क्षण (पट्टा)गर्दन में पीड़ा होती है । कय और दस्त होतेहैं, हृदय में पीड़ा होती है । नाताकती होजातीहै । शरीर दुबलापतला होजाताहै । मुंहका स्वाद फीका पड़ जाताहै । गुदामें कैंचीसे कतरने ऐसी पीड़ा होती है । अनेक रस—खट्टा मीठा चरपरा आदि खाने की इच्छा होती है । मन उदास रहताहै । भोजन के पकते समय और पक जाने पर पेट फूलता है । खा लेने पर तुरन्त-कुछही देरतक कुछ आरामसा मालूम होताहै । वातगुल्म, हृद्रोग, प्लीहा रोगों के कुछ२लक्षण मिलनेसे कुछ२इन रोगों के होनेका भी सन्देहहोता है । दस्त जो आते हैं,वह कभीपतले और कभी सूखे, थोड़ा, कच्चा, आवाज के साथ और फेनदार, दस्त बार२कई होते हैं, खांसी आती है और दम फूलता है । यह वात ग्रहणी का लक्षण है । इसमें जो सबरसों के खाने की इच्छा होती है उसे इस रोग का प्रभाव समझना चाहिए ॥६-१०॥

## अथ पैत्तिक-ग्रहण्या हेतवो लक्षणानि च ।

पैत्तिकग्रहण्या निदानसंप्राप्तिपूर्वकं रूपमाह—

कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ।
आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् ॥ ११ ॥

सोऽजीर्णं नीलपीताभं पीताभः सार्यते द्रवम् ।
पूत्यम्लोद्गार-हृत्-कण्ठ-दाहारुचि-तृडर्दितः ॥१२॥
( च० चि० अ० १६ श्लो० ६३—६४ )

म०-कट्वित्यादि । विदाहि=विदाहजनकं वंशकरीरादि । क्षारोऽपामार्गादिकृतः, तथा सक्षारं च द्रव्यं; क्षारोदकसाधितं हि व्यञ्जनमश्नन्ति कामरूपादौ । आद्यग्रहणाल्लवण-तीक्ष्णोष्णानां ग्रहणं, तैर्वृद्धं पित्तमनलं आप्लावयत्=अभिभवत् तं हन्ति । ननु पित्तमाग्नेयमग्निरेव वा, ततश्च वृद्धिमेवाप्नोति कथं हन्त्यत आह—जलं तप्तमिवानलमिति । यथा उष्णगुणयुक्तमपि जलमनलं हन्ति, तथा द्रवांशेन परिवृद्धं पित्तमूष्मरूपमग्निं हन्त्येवेति । स पीताभः पुरुषः सार्यते, 'वर्चः' इत्यनुवर्तते ॥ ११ ॥ १२ ॥

हि०टी०-पैत्तिक ग्रहणी का निदान तथा संप्राप्ति—कटु=चरपरा, अजीर्ण, जलन पैदा करने वाली चीजें=वंशकरीर राई आदि । खटाई, क्षार(जवाखार) तीखा तथा गरम पदार्थों से पित्त बढ़कर उदराग्नि को दूषित करता हुआ उसे मन्द कर देता है। यद्यपि पित्त और अग्नि में कोई अन्तर नहीं, पित्तके बढ़ने से अग्निवृद्धि हो सकती है न कि मन्द, तथापि पतला=पानीदार पित्त विना पानी वाले अग्निको मन्द करताही है जैसे कि गरम पानी आग को बुझा देता है। बाद कच्चा नीला या पीले रंग का पतला दस्त होता है। शरीर पीला हो जाता है। बदबूदार और खट्टी डकारें आती हैं। छाती' गला में जलन होती है। अरुचि तथा प्यास से तकलीफ होती है ॥११-१२॥

## अथ श्लैष्मिक-संग्रहण्या हेतवो लक्षणानि च ।

श्लैष्मिकग्रहण्या निदानादिपूर्वकं रूपमाह--

गुर्वतिस्निग्ध-शीतादि-भोजनादतिभोजनात् ।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥ १३ ॥
तस्यान्नं पच्यते दुःखं हृल्लास-च्छर्द्यरोचकाः ।
आस्योपदेह-माधुर्य कास-ष्ठीवन-पीनसाः ॥ १४ ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥ १५ ॥
भिन्नाऽऽम-श्लेष्म-संसृष्ट-गुरु-वर्चः प्रवर्तनम् ।
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥ १६ ॥
( च० चि० अ० १५ श्लो० ६५-६८ )

म०—गुर्वित्यादि । आदिशब्दात् पिच्छिलमधुरादीनां ग्रहणम् । अतिभोजनादतिमात्रभोजनात् । ननु, भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निमिति विरुद्धम् ? स्वप्नोऽत्र दिवास्वप्नो ग्राह्यः, रात्रिस्वापस्य स्वास्थ्यहेतुत्वात्; दिवास्वापश्च स्रोतः संमीलनेन जठरानलं [1]सन्धुक्षयति, अत एवाह—"अतीसारिणामजीर्णिनां च दिवास्वापो विहितः"—इति । उच्यते, भुक्तवतां दिवास्वापोऽत्यन्तकफवृद्ध्याऽग्निं हन्ति अभुक्तवतां तु संधुक्षयति । यदुक्तम्—"नराग्निरशनान् कामं दिवा स्वापयेत्"—इति । आस्योपदेहमाधुर्यमिति मुखस्य लिप्तत्वं मधुरत्वं च श्लेष्मणैव । स्त्यानं=घनद्रवाऽऽपूरितमिव । स्तिमितं=विबद्धं, निश्चलमित्यर्थः । गुरु=जडम् । दुष्टो=विकृतः । मधुरः=मधुरत्वेनोपलक्षित उद्गारः । सदनमग्निसादः । स्त्रीष्वहर्षणं=स्त्रीरिरंसाया अभावः । भिन्नं च तदाम-श्लेष्मभ्यां संसृष्टं चेति समासार्थः । दौर्बल्यमसामर्थ्यमिति ॥ १३—१६ ॥

भा०टी०—गुरु, अतिस्निग्ध, ठण्डा, लबाबदार, मधुर चीजों के अत्यन्त सेवन से, अधिक भोजन करने से, खाकर दिन में तुरन्त सोजाने से कफ कुपित होकर अग्नि मन्द कर देता है । उससे भोजन तकलीफ के साथ पचता है,हृल्लास=मुह में नमकीन पानी आना, कय, अरुचि,मुह कफ से भरा और मीठा रहता है, खांसी,बार२ थूकना, जुकाम, हृदय भारी तथा पेट निश्चल और भारी होता है । डकार खराब और मीठी आती है । सदन=मंदाग्नि हो जाती है । स्त्री रमण करने की इच्छा नहीं होती, फटा, कच्चा, कफसे मिला, कुछ गाढ़ा पाखाना होता है । ऊपर से देखने में रोगी मोटा जान पडता है, परन्तु भीतर से उसे शक्ति नहीं रहती, और आलस्य रहता है । यह लक्षण कफ ग्रहणी में होता है ॥ १३—१६ ॥

## अथ सान्निपातिक-संग्रहणीलक्षणम् ।

शिष्यहितैषितया प्रकृतिसमसमवेतत्वेन सुगमाया अपि त्रिदोषजग्रहण्या अतिदेशेन लक्षणमाह—

पृथग्वातादीनिर्दिष्टहेतुलिङ्गसमागमे ।
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि भेषजम् ॥ १७ ॥

( च० चि० अ० १६ श्लो० ७० )

---

१ सन्धुक्षयति दीपयति ।

अथ संग्रह-ग्रहणीलक्षणम् ।

(अन्त्रकूजनमालस्यं दौर्बल्यं सदनं तथा
द्रवं शीतं घनं स्निग्धं सकटीवेदनं शकृत् ॥ १ ॥
आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् ।
पक्षान्मासाद्दशाहाद्वा नित्यं वाऽप्यथ मुञ्चति ॥ २ ॥
दिवा प्रकोपो भवति रात्रौ शान्तिं व्रजेच्च सा ।
दुर्विज्ञेया दुश्चिकित्स्या चिरकालानुबन्धिनी ॥ ३ ॥
सा भवेदामवातेन संग्रहग्रहणी मता ।

भा०टी०-संग्रहग्रहणीके लक्षण-आंत में गुड़गुड़ाहट, आलस्य, दौर्बल्य, अग्निमान्द्य, हो जाता है। पाखाना, पतला, ठण्डा, गाढ़ा, चिकना, कच्चा, लबाबदार, आवाज तथा कमर और पेटकी पीडा के साथ बहुत-कई बार होता है। दस्त पन्द्रह दिनों पर या महीने भर पर अथवा प्रतिदिन होता है । दिन में अधिक होता है और रात में कम इसकी पहचान जल्दी नहीं होती और बड़ी मुश्किल से चिकित्सा की जाती है। यह जल्दी अच्छी नहीं होती। इसका लगाव बहुत दिनों तक रहता है। इसके होने का मुख्य कारण आमवात है ॥ १—३ ॥

अथ घटीयन्त्राख्य-ग्रहणीरोगलक्षणम् ।

स्वपतः पार्श्वयोः शूलं गलज्जलघटीध्वनिः ।
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ॥ ४ ॥)

भा० टी०-घटीयन्त्र नामक ग्रहणी रोग के लक्षण—पतले दस्त हों, सोने पर पँसुलियों में पीडा हो, दस्त होते समय ऐसी आवाज हो जैसे कि भरे घड़ेसे पानी निकलते समय होता है। यह घटीयन्त्र ग्रहणी रोग असाध्य माना गया है ॥ ४ ॥

म०-पृथगित्यादि । संपूर्णश्लोकानुरोधात् 'तेषां वक्ष्यामि भेषजम्'-इति लिखितम् । ग्रहणीदुष्ट्या ग्रहण्याश्रितवह्नेरपि दुष्टेरग्निमान्द्यादयोऽपि ग्रहणीविकारा उच्यन्ते । यदुक्तं चरके—"यश्चाग्निः पूर्वमुद्दिष्टो रोगानीके चतुर्विधः । तं चापि ग्रहणीरोगं समं ब्रूमो भिषग्वराः" ( च. चि. स्था. अ. १५ )- इति ॥ १७ ॥

भा० टी०-सन्निपातग्रहणी के लक्षण—वात, पित्त, कफ ग्रहणी के जो अलग २ निदान और लक्षण लिखे गये हैं उनके इकट्ठे होने से त्रिदोष ग्रहणी समझना चाहिये। इसकी दवा आगे लिखी जायगी। यहां 'तेषां वक्ष्यामि भेषजं' यह पद श्लोक खण्डित न होने की गरज से लिखा गया है। इस ग्रन्थ में दवा है ही नहीं ॥ १७ ॥

अथ ग्रहण्यामाम-पक्व-दोष परिज्ञानम् ।

दोषं सामं निरामं च विद्यादत्रातिसारवत् ॥ १८ ॥

भा० टी०-ग्रहणी में मलकी आमता और निरामता अतिसार की तरह जानना चाहिए ॥ १८ ॥

अथ असाध्य ग्रहणीरोगलक्षणम् ।

लिङ्गैरसाध्यो ग्रहणीविकारो यैस्तैरतीसारगदो न सिध्येत् ।
वृद्धस्य नूनं ग्रहणीविकारो हत्वा तनूं नैव निवर्तते च १९

अथ वयोभेदेन ग्रहण्याः साध्यासाध्यत्वादिविज्ञानम् ।

( बालके ग्रहणी साध्या यूनि कृच्छ्रा समीरिता ।
वृद्धे त्वसाध्या विज्ञेया मतं धन्वन्तरेरिदम् ॥ १ ॥ )

म०-यथाऽतीसारे जलनिमज्जनादिना आमं, तद्विपरीतेन निरामं ज्ञायते तथाऽत्रापि ज्ञेयम् । यैर्लिङ्गैरतीसारगदो न सिध्येत्तैर्लिङ्गैर्ग्रहणीविकारोऽसाध्यः, अतीसारस्य यान्यसाध्यलिङ्गानि ग्रहण्या अपि तानि ॥ १८ । १९ ॥

भा० टी०—जिन लक्षणों से अतिसार असाध्य समझा जाता है उन्हीं लक्षणों से ग्रहणी रोगभी असाध्य होताहै, अर्थात् अतिसारके जो असाध्य लक्षणहैं वेही ग्रहणी के भी हैं ॥१९॥

भा०टी०-बाल्यावस्था में ग्रहणी साध्य होती है, जवानी में कृच्छ्रसाध्य और बुढ़ापे में असाध्य । यह धन्वन्तरि भगवान का मत है ॥ १ ॥

इति श्री हरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय भाषाटीकायां ग्रहणीनिदानम् ।

पाइल्स, हिमरॉइडस

अथाशोनिदानम् । ( piles Heemorrhoids )

अतीसारग्रहण्यर्शसां परस्परानुबन्धित्वादतीसारग्रहण्यनन्तरमर्श उच्यते—

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च ।
अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥

म०-पृथगित्यादि । अरिवत् प्राणान् शृणाति=हिनस्तीत्यर्शइति पृषोदरादिपाठान्निरुक्तिमाहुः । सहजानीति सह शरीरेण जातानि गुद[1]वल्यारम्भक-

[1]-गुदवल्यारम्भकेति—वीर्ये सर्वेषामेवांगानामाभ्यन्तरबाह्यानां सूक्ष्मासूक्ष्माणां बीजं भवति, ततश्च गर्भाधानसमये यदि अर्शोनिर्वर्तकदोषैर्गुदवल्यारम्भकं बीजं दूषितं स्यात्तदा सहजार्शस उत्पत्तिरिति ।

बीजभागस्य दूषितत्वात् । अत्र द्वन्द्वजानि प्रकृतिसमसमवायारब्धत्वान्न पृथगगणितानि । उक्तं हि सुश्रुते–" अर्शःसु दृश्यते रूपं यदा वै दोषयोर्द्वयोः । संसर्गं तं विजानीयात्संसर्गः षड्विधश्च सः ॥ [ सु. नि. स्था. अ. २ ]"–इति । षड्विधत्वं चात्र संसर्गस्य वातादिभिर्युग्मैस्त्रयः संसर्गाः, तैरेव रक्तयोगादपरे त्रय इति । सन्निपातजं त्वेकैकदोषजेष्वदृष्टस्यासाध्यत्वस्य योगाद्विकृतिविषमसमवायारब्धमिति संख्यया पृथग्गणितम् । गुदवलित्रय इति अर्धपञ्चाङ्गुलमानं गुदं, तस्यावयवभूतास्तिस्रो वलय उपर्युपरि व्यवस्थिताः शङ्खावर्तनिभाः [1]प्रवाहणी-विसर्जनी-संवरणीनामिकाः, तत्र गुदौष्ठमर्धाङ्गुलं, तदूर्ध्वमङ्गुलमाना प्रथमा वीलः सुश्रुतेन [ सु. नि. स्था. अ. २ ] निर्दिष्टा । भोजेनाऽप्युक्तम्—"रोमान्तेभ्यो यवा[2]-ध्यर्धं गुदौष्ठं परिचक्षते । गुदौष्ठादङ्गुलं चैकं प्रथमां तां वलीं विदुः ॥" इति सार्धाङ्गुलमाना द्वितीया चेति ॥ १ ॥

हि० टी०-पाखाना के मुकाम ( गुदा ) की तीन वलियों में छः प्रकार के अर्श (बवासीर) होते हैं। १ वात से,२ पित्तसे, ३ कफ़से,४ सन्निपात से५ शोणित (खून) से और ६ सहज, जो कि पैदाइशी होता है ॥ १ ॥

## अथार्शसां स्वरूपम् ।

संप्राप्तिपूर्वकमर्शःस्वरूपमाह—

**दोषास्त्वङ्-मांस-मेदांसि संदूष्य विविधाकृतीन् ।**
**मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥२॥**

( वा० नि० अ० ७ श्लो० २० )

म०-दोषा इत्यादि । त्वङ्मांसग्रहणेन त्वङ्मासाश्रितं रक्तमपि गृह्यते, चिकित्सायां रक्तस्रावणोपदेशात् । अपानं = गुदम्, आदिशब्देन नासिकादीनां ग्रहणम् । कायाचिकित्सकास्तु गुदजस्यैवार्शस्त्वमिच्छान्ति नासादिजानां त्वाधिमांसत्वं, तेषु[2] 'पञ्चात्मा मारुतः' इत्यादिसंप्राप्तेरभावात्, विष्टम्भ इत्यादिपूर्वरूपस्य चासंभवात् । यदाह चरकः–"शिश्न"–इत्यारभ्य यावत् "अधिमांसव्यपदेश एव" ( च. चि. स्था. अ. १४ ) इति । सुश्रतेन तु मांसाङ्कुरत्वसाधर्म्यात् शस्त्रक्षाराग्नि-साध्यत्वाच्च तेष्वर्शःशब्दप्रयोगः कृतः, सर्षपादिस्नेहे तैलव्यपदेशवत् । सुश्रुतानुवादिना वाग्भटस्याप्ययमेवाभिप्राय इति ॥ २ ॥

भा० टी०—अर्श की सम्प्राप्ति और स्वरूप-दोष त्वक्, मांस, मेदस् और रक्त को खराब कर गुदा आदि में मांस के अँकुवे ( मस्से ) पैदा कर देते हैं उन्हीं को वैद्य

१–अत्र प्रवाहणी सर्वाभ्यन्तरे ततोऽधो विसर्जनी, तदधः संवरणी तदधो गुदौष्ठमिति क्रमतो ज्ञेयमेतत्संनिवेशः ।
१–यवाध्यर्धमङ्गुलार्धम् । २–तेषु नासिकाद्युत्पन्नेषु अर्शःसु ।

लोग अर्श बतलाते हैं। गुदा के अलावा नाक,कान, आँख,लिङ्ग और नाभि में भी बवासीर के मस्से होते हैं,परन्तु चरक सिर्फ गुद में ही पैदा हुए मस्से को बवासीर कहते हैं, कान, नाक आदि के मस्सों को नहीं। क्योंकि बवासीर के "विष्टम्भोऽन्नस्य" आदि पूर्व रूप और "पञ्चात्मा मारुतः"आदि सम्प्राप्ति के लक्षण, गुद के अतिरिक्त स्थानों में उत्पन्न मस्सों में नहीं होते। परन्तु सुश्रुतने सब स्थानों में पैदा हुए मस्से को बवासीर माना है, इस लिए कि सब जगह एकही तरह के मस्से होते हैं और उनकी चिकित्सा भी प्रायः एकही ( शस्त्र, क्षार, अग्नि, ) होती है । वाग्भट भी सुश्रुत के ही अनुगामी हैं ॥ २ ॥

## अथ वातार्शसां हेतवः ।

वातार्शसो निदानमाह—

कषाय-कटु-तिक्तानि रूक्ष-शीत-लघूनि च ।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम् ॥ ३ ॥
लंघनं देश-कालौ च शीतौ व्यायामकर्म च ।
शोको वातातप-स्पर्शौ हेतुर्वातार्शसां मतः ॥ ४ ॥

( च० चि० अ० ६ श्लो० १२, १३ )

म०—कषायेत्यादि । प्रमितमल्पतमम्, अल्पं =मात्राहीनमशनम्, जेज्जटस्त्वाह प्रमितमतीकालभोजनं; प्रमृतेति पाठे तु नष्टशक्तिकं धान्यादिकमाहुः । प्रमिताशनमेकरसाभ्यास इत्यन्ये । तन्नातियुक्तम्, एकरसाभ्यासः किं वातप्रकोपकस्य कट्वादेः,कफप्रकोपकस्य मधुरादेर्वा ? नाद्यः,कट्वादेरत्रैवोपात्तत्वात्,द्वितीये मधुरादीनां त्वभ्यासो वातशामक एव, एकरसाभ्यासाच्च दौर्बल्यमुक्तं न तु वातवृद्धिरिति चिन्त्यमेतत् । तीक्ष्णमिति मद्यविशेषणं, पैष्टिकादिमृदुमद्यस्य वातप्रशमकत्वात् । शीतो देश आनूपः, कालो हेमन्तादिः । आतपस्योष्णगुणस्याप्युद्भूतरौक्ष्याद्वातप्रकोपकत्वमिति ॥ ३–४ ॥

भा० टी०—वात के अर्श के कारण—कसैला, चर्परा, कडुवा, रूखा, ठंडा, हलका भोजन,बहुत कम या बिना भूखके खाना,खुराक से कम खाना, तेज शराब पीना,अधिक मैथुन, उपवास, ठण्डी जगह—सीड़वाली—जैसे—गया, पटना, छपरा आदि। ठण्डा समय—जाड़ा का दिन, बर्सात, अधिक व्यायाम, शोक, तेज हवा और तेज घाम ॥ ३—४॥

## अथ पैत्तिकार्शोनिदानानि ।

पित्तार्शोनिदानमाह—

**कट्वम्ल-लवणोष्णानि व्यायामाग्न्यातपप्रभाः ।**
**देश-कालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ५ ॥**
**विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् ।**
**पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ६ ॥**

( च० चि० अ० ६ श्लो० १४–१५ )

म०—कट्वम्लेत्यादि । देशकालावशिशिराविति उष्णो देशो मरुः, उष्णः कालः शरद् ग्रीष्मश्च । असूयनं परसम्पत्तौ द्वेषः, सक्रोधविशेष एव । पित्तोल्वणानामित्यनेन सर्वेषामर्शसां त्रिदोषजत्वम्, अधिकेन तु व्यपदेश इति दर्शितं चरकेण । यदाह स एव—"अर्शांसि नाम जायन्ते नासन्निपतितैस्त्रिभिः । दोषैर्दोषविशेषात्तु विशेषः कथ्यतेऽर्शसाम्" [ च. चि. स्था. अ. १४ ] इति ॥ ५ ॥ ६ ॥

भा० टी०—पित्तार्श के कारण—कटु=चरपरा; नमक, गरम, भोजन, व्यायाम अग्नि, घाम, किसी तेजस्वीकी प्रभा, गर्म देश जैसे मरुभूमि-माड़वार-अलवर बीकानेर आदि । गर्म समय(शरदऋतु, गरमी का दिन) । क्रोध, मद्यपान । असूयन=दूसरे की उन्नति में डाह करना, विदाह जनक, तीखा, गर्म भोजन गर्म पीने की चीज, और गर्म दवा ॥५–६॥

## अथ कफार्शसां हेतवः ।

श्लेष्मार्शोनिदानमाह—

**मधुर-स्निग्ध-शीतानि लवणाम्ल-गुरूणि च ।**
**अव्यायामो दिवास्वप्नः शय्या-ऽऽसन-सुखे रतिः ॥ ७ ॥**
**प्राग्वातसेवा शीतौ च देश-कालावचिन्तनम् ।**
**श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ ८ ॥**

( च० चि अ. ६ श्लो. १६, १७, )

म०--मधुरेत्यादि । शय्या--ऽऽसन--सुखे रतिरिति=सुखशय्यासने रतिरासक्तिः । प्राग्वातसेवा=पुरोवातसेवनम् । अचिन्तनं=निश्चिन्तता ॥७॥८॥

भा०टी०–कफज अर्शके निदान—मधुर, स्निग्ध, ठंडा, नमक, खटाई, गुरु पदार्थों का खाना, कुछ काम न करना, दिनमें सोना, हर समय सेज़ और गद्दीपर सोये और बैठे रहना, पुरवैया हवा में अधिक रहना, ठंडा देश, ठंडा समय, बेफिक्र रहना ॥७–८॥

अथ द्वन्द्वजार्शोविज्ञानम् ।

द्वन्द्वजार्शोनिदानादिकमाह—

**हेतु-लक्षण-संसर्गाद् विद्याद् द्वन्द्वोल्वणानि च ।**

( च० चि० अ० श्लो० १८ )

म०—हेत्वित्यादि । हेतु–लक्षण–संसर्गादिति दोषद्वयस्य निदानमेलकेन लक्षणमेलकेन च द्वन्द्वोल्वणानि द्वन्द्वजानि विद्यात् ॥—

भा०टी०–दो दोषोंके कारण और लक्षण मिले होनेसे द्वन्द्वज बवासीर भी जानना चाहिए।

अथ त्रिदोषजार्शोनिदानम् ।

त्रिदोषजार्शोनिदानमाह—

**सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणं समम् ॥६॥**

( च० चि० अ० ६ श्लो० १६ )

म०—सर्व इत्यादि । सर्वो हेतुरिति एकैकशो वाताद्यर्शसां यो हेतुरुक्तः स त्रिदोषजानां भवति, त्रयो दोषा जनकत्वेनैषां सन्तीति त्रिदोषजानि । सहजैर्लक्षणं सममिति तेषां लक्षणं सहजैरर्शोभिः सह समं सदृशम् । सहजानां यल्लक्षणं तत्त्रिदोषजानामित्यर्थः । 'सहजैर्लक्षणैः समम्' इति पाठान्तरे तु सहजैः सहजार्शोभवैर्लक्षणैः समं सह सर्वो हेतुस्त्रिदोषाणामिति योज्यम् । सहजार्शोलक्षणं चात्र संग्रहे नोक्तं तन्त्रान्तरादनुस्मर्तव्यम्, यदाह सुश्रुतः—"दुर्दर्शनानि परुषाऽरुण-पाण्डूनि दारुणान्तर्मुखानि, तैरुपद्रुतः कृशोऽल्पभुक् सिरासंततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निर्घ्राण शिरोऽक्षि-श्रवण-रोगवान्, सततमन्त्रकूजनाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते– [ सु. नि. स्था. अ. २ ]" इति । चरके च–"कानिचिदणूनि--" [ च. चि. स्था. अ. १४ ] इत्यादिना प्रभूततरं लक्षणमुक्तम् । ननु त्रिदोषजानीति विशेषाभिधानमनुपपन्नं, सर्वेषामेव रोगाणां त्रिदोषजत्वात् । यदुक्तम्–"द्रव्यमेकरसं नास्ति न रोगोऽप्येकदोषजः । योऽधिकस्तेन निर्देशः क्रियते रस-दोषयोः"-इति । नैवम् 'सर्वदेहचरास्तु वात-पित्त-श्लेष्माणः' इति वचनादेकस्मिन् धात्वादौ दोषेण दूषिते सति तद्गतेतरदोषेऽप्यवश्यंभाविनी काचिद् दुष्टिः, दुष्टदोषसंबन्धात् । किंच स्वकारणाद्वृद्धो वायुः शैत्याच्छीतस्य श्लेष्मणो बलमादधाति, लाघवात्तेजोरूपस्य पित्तस्य; पित्तं च कटुत्वाद्वातस्य, द्रवत्वात् श्लेष्मणः; कफश्च शैत्याद्वायोः, द्रवत्वात् पित्तस्येति । अत एवोक्तम्–"न रोगोऽप्येकदोषजः;–इति । अनेनैवाभिप्रायेणोक्तम् – 'एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्"–इति । यत्र तु स्वकारणात्त्रयोऽपि कुपितास्तत्र त्रिदोषव्यपदेश इति सिद्धान्तः; एवं सर्वत्र ॥६॥

भा० टी०-अलग २ वात आदि अर्श के जो निदान पहले बतलाये गये हैं, वे सब त्रिदोषज अर्श के निदान हैं। सहज और त्रिदोषज बवासीर के लक्षण एकही होते हैं। सहज अर्श के लक्षण—मस्से मुश्किल से देख पड़ें, रूखे, लाल तथा पाण्डु वर्ण के हों, मुँह भीतर हो, रोगी कृश हो, खाया कम जाय, शरीर में शिरायें (नसें) उभड़ जाँय, सन्तान कम हों, वीर्य क्षीण रहे, आवाज मन्द हो जाय, क्रोध अधिक आये, मन्दाग्नि रहे, नाक, आँख, कान में पीड़ा रहे, गुड़गुड़ाहट हो, हृदय भारी रहे, अन्न में अरुचि रहे, ॥ ६ ॥

### अथ वातार्शसां लक्षणानि ।

पूर्वं निदानमुक्तम्, संप्रति वातादिभेदेनार्शसां लक्षणान्युच्यन्ते, तत्र प्रथमं वातार्शोलक्षणमाह—

गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमचिमान्विताः ।
म्लानाः श्यावारुणाः स्तब्धा विषदा परुषाः खराः ॥ १० ॥
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ।
बिम्बी-खर्जूर-कर्कन्धू-कार्पासी-फल-सन्निभाः ॥ ११ ॥
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ।
शिरः-पार्श्वांस-कट्यूरु-वङ्क्षणाद्यधिकव्यथाः ॥ १२ ॥
क्षवथूद्गार-विष्टम्भ-हृद्ग्रहारोचक-प्रदाः ।
कास-श्वासाग्निवैषम्य-कर्णनाद-भ्रमावहाः ॥ १३ ॥
तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेन-पिच्छानुगतं विबद्धमुपवेश्यते ॥ १४ ॥
कृष्ण-त्वङ्-नख-विण्-मूत्र-नेत्र-वक्त्रश्च जायते ।
गुल्म-प्लीहोदराष्ठीला-संभवस्तत एव च ॥ १५ ॥

( वा० नि० अ० ७ श्लो० २८-३३ )

म०—गुदेत्यादि ।-गुदाङ्कुरा गुदे अङ्कुराकारा मांसप्ररोहाः, त एव अर्शांसि बह्वनिला=वातोल्बणाः । शुष्काः=स्रावरहिताः । चिमचिमा=वेदनाविशेषः । म्लाना=अनुपचिताः । स्तब्धाः काठिन्यात् । विशदा=अपिच्छिलाः, धूलिस्पर्शवत् । परुषाः=कर्कशाः, गोजिह्वास्पर्शवत् । खराः=कर्कोटफलवत्सूक्ष्मानेककण्टकाचिताः।

एषु विकल्पेषु वक्ष्यमाणं केचिदिति पदं संबन्धनीयम् । मिथोविसदृशाः=परस्पर-भिन्नरूपाः । वक्रा=धनुःकाष्ठादिवत् । तीक्ष्णाः=सूक्ष्माग्राः । फलसन्निभा इति बिम्ब्यादिभिः संबध्यते, बिम्ब्यादिसान्निभत्वं चाकृत्या ज्ञेयम् । बिम्बी=ओष्ठोपम-फला, 'तेलाकुचा' इति लोके ख्याता, कार्पासी=वनकार्पासी, कदम्बपुष्पाभाः, स्थूला=अनेकसूक्ष्मशिखराः सिद्धार्थकोपमाः=सूक्ष्मपिडकारूपाः । हृदयं गृहीतमिवेति वेदना=हृद्ग्रहः । ग्रथितं=ग्रन्थिलं पाषाणवत् । रुक्=शूलम् । पिच्छा=पिच्छिलो द्रवभागः । उपवेश्यते=वर्चस्त्याज्यते । कृष्णशब्दस्त्वगादिभिर्वक्त्रान्तैः प्रत्येकं संबध्यते अस्योपद्रवमाह-गुल्मेत्यादि । अष्ठीला=वातरोगविशेषः ॥ १०-१५ ॥

भा० टी०—वातार्श के लक्षण—वातके मस्से सूखे होतेहैं,उनमेंचुनचुनाहट होती है, म्लान=मुरझाये से होते हैं । रंग उनका स्याह और लाल होता है । स्तब्ध=कड़े होते हैं। विशद=धूल की तरह भुरभुरे से हों, परुष=खरदरे हों, खर=खेकसा की तरह अनेक काँटों से युक्त हों, आपस में एक से दूसरे भिन्न हों, वक्र=टेढ़े हों, मुँह फटे हों, कुँदरू, खजूर ( छोहारा ) बैर, कपास के फल के समान आकार वाले हों । कोई कदम के फूल की तरह अनेक अनीदार हों, शिर, पसवाड़ा, कंधा, कमर, जाँघ, वङ्क्षण= पट्टा आदि में अधिक पीड़ा हो, छींक, डकार, कब्ज, हृद्ग्रह=हृदय को मानो पकड़े हो, ऐसी पीड़ा हो, अरुचि, खाँसी, श्वास, अग्निवैषम्य, कान में शब्द, भ्रम, यह सब रोग पैदा हों । इनसे बड़ीही तकलीफ रहे, पाखाना थोड़ा गाँठदार, आवाज के साथ, वात प्रवाहिका के लक्षण युक्त, पीड़ा के साथ, पतला, लबाबदार, कब्ज के साथ हो,चमड़ा, नख,पाखाना,पेशाब,आँख और मुँह का रंग काला पड़ जाय । इसके बाद गुल्म,प्लीहा, उदर रोग, अष्ठीला ( वात रोग में आगे है ) यह सब रोग उपद्रव रूप से पैदा हो जाते हैं ॥ १०—१५ ॥

### अथ पित्तार्शसां लक्षणानि ।

पित्तार्शोलक्षणमाह—

पित्तोत्तरा नीलमुखा रक्त-पीतासित-प्रभाः ।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ॥ १६ ॥
शुकजिह्वा-यकृत्खण्ड-जलौकोवक्त्र-सन्निभाः ।
दाह-पाक-ज्वर-स्वेद-तृण-मूर्च्छा-ऽरुचि-मोहदाः ॥१७॥

सोष्माणो द्रव-नीलोष्ण-पीत-रक्ताऽऽम-वर्चसः ।
यवमध्या हरित्-पीत-हारिद्र-त्वङ्-नखादयः ॥ १८ ॥

( वा० नि० अ० ७ श्लो० ३४, ३५, ३६ )

म०—पित्तोत्तरा इत्यादि । नीलमुखाः=नीलाग्राः । तनु=अघनम्, अस्रं=रक्तं, स्रवन्तीति तन्वस्रस्राविणः । विस्रा=आमगन्धिनः । तनवः=स्वल्पाः । मृदवः= कोमलाः । श्लथाः=लम्बनशीलाः । यवमध्याः=यववन्मध्ये स्थूलाः । हरित्पत्र-वर्णं, पीतं=हरितालाभं, हारिद्रं=हरिद्रावर्णम्, आदिशब्दाद्विण्मूत्र-नेत्र-वक्त्राणां ग्रहणम् ॥ १६—१८ ॥

भा० टी०—पित्तार्श के लक्षण—पित्तज बवासीरके मस्से नीले मुहवाले, लाल, पीले असित—श्यामवर्ण के हो; मस्सों से पतला खून बहे, कचाइन बू उठे, मस्से मुलायम और लटके हों, सुग्गे की जीभ, यकृत्=जिगर, जोंक के मुह की तरह हों। दाह, पाक (पकना) ज्वर, पसीना, प्यास, मूर्च्छा, अरुचि, मोह=बेहोशी सी, ये सब उपद्रव पैदा हो जायँ, पाखाना, गर्म, पतला, नीला और कच्चा होता है, पीला खून गिरता है। मस्से जव की तरह अगल बगल पतले और बीचमें मोटे होते हैं ॥ १६—१८ ॥

## अथ कफजार्शोलक्षणानि ।

श्लेष्मार्शोलक्षणमाह—

श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचित-स्निग्ध-स्तब्ध-वृत्त-गुरु-स्थिराः ॥ १९ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ २० ॥
वङ्क्षणानाहिनः पायु-बस्ति-नाभि-विकर्षिणः ।
सश्वास-कास-हृल्लास-प्रसेका-ऽरुचि-पीनसाः ॥ २१ ॥
मेह-कृच्छ्र-शिरोजाड्य-शिशिरज्वर-कारिणः ।
क्लैब्याग्निमार्दव-च्छर्दिरामप्राय-विकारदाः ॥ २२ ॥
वसाभ-सकफ-प्राय-पुरीषाः सप्रवाहिकाः ।
न स्रवन्ति न भिद्यन्ते पाण्डु-स्निग्ध-त्वगादयः ॥ २३ ॥

( वा० नि० अ० ७ श्लो० ३७—४१ )

**म०–श्लेष्मोल्बणा इत्यादि** । अत्र गुदाङ्कुरा इत्यनुवर्तते । महामूला=दूरवास्त्ववगा[1]हिनः। घना=निबिडावयवाः। उत्सन्ना=दैर्घ्येणोद्गताः, उपचिताः=परिणाहेन स्थूलाः, स्तब्धा=अनम्राः, वृत्ताः=परिणा[2]हेन वर्तुलाः, गुरवो=गुरुद्रव्याक्रान्तामिव गुदं कुर्वते, स्थिरा=अचञ्चलाः। श्लक्ष्णा=मणिवन्मसृणाः। कण्ड्वाढ्याः=कण्डूबहुलाः, कण्डूव्यपगमार्थं स्पृश्यमानाः प्रीणयन्त्यर्शसमिति स्पर्शनाप्रियाः। करीरो=मरुजद्रुमः, पनसः=कण्टकिफलं, तयोरस्थ्याभाः; अथवा करीरो=वंशाङ्कुरः, तेन करीराभाः; पनसास्थ्याभाश्चेत्यर्थः तथा गोस्तनसन्निभाः=गोस्तनसदृशा इत्यर्थः। वङ्क्षणौ आनद्धुं=बद्धुमिव शीलं येषां ते तथा, गुदप्रत्यासत्त्या वङ्क्षणयोः प्रेरणाद्यसामर्थ्यकारिण इत्यर्थः । पायु-बस्ति-नाभिविकर्षिण इति पाय्वादिष्वाकर्षवत्पीडाकारिणः । प्रसेको मुखस्य गुदस्य वा। कृच्छ्रं=मूत्रकृच्छ्रं, शिरोजाड्यं=शिरःस्तिमितता, शिशिरज्वरकारिणः=शीतज्वरकारिणः । क्लैब्यं=स्त्रीष्वनुत्साहः, अग्निमार्दवं=वह्निमान्द्यं, छर्दिर्वमिः। आमप्रायविकारदाः=आमबहुला ये रोगा अतीसारग्रहण्यादयस्तत्प्रदाः। प्रायस्थाने 'प्राज्य' इति पाठान्तरे स एवार्थः। प्राय-प्राज्य-शब्दयोः प्रचुरार्थत्वात्। वसाभं च सकफं च प्राज्यं च पुरीषं येषां ते तथा। न स्रवन्ति 'क्लेद-रक्तादिकम्' इति शेषः। न भिद्यन्ते गाढ-विट्क-प्रपीडिता अपि न विदीर्यन्त इति ॥ १९–२३ ॥

**भा० टी०—कफार्श के लक्षण**—कफके मस्से खूब जड़-थाला बाँधे रहते हैं। खूब ठोस होतेहैं, पीड़ा कम होती है,रंग उनका सफेद होता है। उचाई में उभड़ेसे होते हैं। मोटे, खड़े(न झुकने वाले) गोल;स्थिर=हिलाये डुलाये न जा सकें। छूने पर फिसलन सी मालूम हो, मन्द, चिकने हों, खुजली उनमें बहुत आये, छूने पर अच्छा मालूम हो, करीर ( वृक्ष के फल ) और कटहर की गुठली की तरह हों, या गाय के थन की तरह हों, पट्ठा में तनाव और दर्द हो, गुदा, पेडू और नाभि में खिंचावट जैसी पीड़ा हो। श्वास, खांसी, मुंह में नमकीन पानी भर जाना, प्रसेक ( मुह गुदा से पानी टपकना ) अरुचि, पीनस, प्रमेह, मूत्रकृच्छ; शिर का भारी होना,जूड़ी ज्वर, नामर्दी,मन्दाग्नि,कय; आमजनित रोग=विसूचिका,अलसक अतीसार,ग्रहणीआदि,यह सब रोग पैदाहो जाँय। पाखाना—चरबी की तरह, कफ के साथ, बहुत हो, प्रवाहिका हो, गाढ़े पाखाने से दब कर भी मस्से न फूटते हैं और न बहते हैं, चमड़ा, नख, मूत्र, पुरीष, नेत्र, मुख ये सब पाण्डु वर्ण के और चिकने हो जाते हैं ॥ १९—२३ ॥

---

१ वास्तु अधिष्ठानम्। "दूरधात्ववगाहिनः" इति पाठान्तरम्।

२ परिणाहेन विशालतया "परिणाहो विशालता" इत्यमरः।

अथ सान्निपातिकानां सहजार्शसां च लक्षणम् ।

सन्निपातार्शसः सहजार्शसश्च लक्षणमाह—

सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ।

(वा० नि० अ० ७ श्लो० ४२)

म०—सर्वैरित्यादि । सर्वैर्वातजाद्यर्शोभवैर्लक्षणैः सर्वात्मकानि=त्रिदोषजानि तथा तैरेव लक्षणैः सहजान्यप्याहुः, तेषामपि त्रिदोषजत्वात् ॥—

भा०टी०—वात आदि से उत्पन्न अर्श के जो अलग २ लक्षण लिखे गये हैं, वे सब लक्षण जिस अर्श में मिलें तो उसे त्रिदोषज और सहज ववासीर समझना चाहिए। सहज और त्रिदोषज अर्श के लक्षण प्रायः एकसे होते हैं ॥

अथ रक्तार्शसां लक्षणानि ।

(Bleeding piles) ब्लीडिङ्ग पाइल्स

रक्तार्शोलक्षणमाह–

रक्तोल्बणा गुदेकीलाः पित्ताऽऽकृतिसमन्विताः ॥ २४ ॥
वटप्ररोहसदृशा गुञ्जा-विद्रुम-सन्निभाः ।
तेऽत्यर्थं दुष्टमुष्णं च गाढ-विट्क-प्रपीडिताः ॥ २५ ॥
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ।
भेकाभः पीड्यते दुःखैः शोणित-क्षय-संभवैः ॥ २६ ॥
हीन-वर्ण-बलोत्साहो हतौजाः कलुषेन्द्रियः ।

(वा० नि० अ० ७ श्लो० ४३-४५)

विट् श्यावं कठिनं रूक्षमधोवायुर्न वर्तते ॥ २७ ॥

(च० चि० अ० ६ श्लो० १७१)

म०—रक्तोल्बणा इत्यादि । गुदेकीलाः कीलवत् कीलाः अर्शांसि, "हलदन्तात् सप्तम्याः संज्ञायाम्"–(पा. अ. ६ पा. ३ सू. ९) इत्यलुक्समासः । पित्ताकृतिसमन्विताः=पैत्तिकार्शो लक्षणयुक्ताः । विद्रुमसन्निभाः=प्रवालमणिवल्लोहिता इत्यर्थः । ते गाढ-विट्क-प्रपीडिताः कठिन-पुरीष-यन्त्रिताः, दुष्टम्=आविलं रक्तमुष्णं च स्रवन्ति । तस्येति रक्तस्य, अतिप्रवृत्तितोऽतिक्षयात्, भेकाभः=मण्डूकवर्णाभः पीतच्छविः, 'पुरुषः' इति शेषः । दुःखैः=रोगैः । शोणित-

क्षय-संभवैरिति त्वक्पारुष्याम्ल-शीतप्रार्थना-सिराशैथिल्यैः सुश्रुतोक्तैः। ( सु. सू. स्था. अ. १५ ) । बलम्=स्थौल्यं, उत्साहा=हर्षः । हतौजा=हत-शक्तिः । कलुषेन्द्रिय=आविलचक्षुः व्याकुलसर्वेन्द्रियो वा । विट् श्यावामिति। विट्शब्दो नपुंसकोऽप्यस्ति, एतन्निर्देशादेव। काश्मीरास्तु चरके—"विट् श्यावा कठिना रूक्षा"—इत्येव पठन्ति । अधोवायुर्न वर्तते गुदेन, प्रतिलोमग-त्वात् ॥ २४–२७ ॥

भा० टी०—रक्तार्श के लक्षण—खूनी बवासीर ( मस्से ) पित्तार्श के सदृश होते हैं, वरोह,लालघुमची, मूंगा के रंग के होतेहैं।कड़े पाखाने से दबनेपर उनसे खून बहताहै । खून के अधिक जानेसे रोगी मेंढा की तरह पीला हो जाता है, और खून के कमहो नेसे—चमड़ा का रूखा होना, खटाई, ठण्डी चीजों पर मन चलना, शिराओंका शिथिल होजाना आदि रोग पैदा होजाते हैं,बल, प्रसन्नता,शरीरका रंग, शक्ति, ये सब कम हो जाते हैं, सब इन्द्रियाँ व्याकुल होजाती हैं। पाखाना स्याह, कड़ा और रूखा आता है। हवा नहीं खुलती है ॥ २४–२७ ॥

### अथ रक्तार्शसि वातानुबन्धलक्षणम् ।

इदानीं तस्यैव रक्तार्शसो निदानस्य रक्तस्य वातादिभेदेन लक्षणमाह—

**तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ।**
**कट्यूरु-गुद-शूलं च दौर्बल्यं यदि चाधिकम् ॥ २८ ॥**
**तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ।**
**शिथिलं श्वेत-पीतं च विट् स्निग्धं गुरु शीतलम् ॥ २९ ॥**

( च० चि० अ ९ १७३, १७२ )

म०—तन्वित्यादि । तत्रानुबन्धो वातस्येति वातादिदुष्टस्यैव रक्तस्यार-म्भकत्वान्न तु केवलस्य, दोषत्वाभावात् । शिथिलमित्यादिना कफानुबन्धस्य । ननु, पित्तानुबन्धः कुतो नोक्त इति? उच्यते,रक्त-पित्तयोः प्रायः समानलिङ्गत्वात् । उक्तं च पूर्वम् ' रक्तोल्बणा गुदेकीलाः पित्ताकृतिसमन्विताः"—इति॥२८–२९॥

भा० टी०—खूनी बवासीर में वात आदि का लक्षण–यदि खून, पतला, लाल, फेनदार हो और कटि, जांघ और गुदामें शूल हो, दुर्बलता अधिक हो तथा रक्तार्श का कारण रूखीचीजोंका सेवन होतो वहां वात का सम्बन्ध, और पाखाना ढीला सफेद या पीला, चिकना आवे तथा स्निग्ध द्रव्योंका सेवन कारण हो तो रक्तार्शमें कफका सम्बन्ध जानना चाहिए ॥ २८-२९ ॥

अथ श्लेष्मानुबन्ध-रक्तार्शोलक्षणम्।

यद्यर्शसां घनं चासृक् तन्तुमत्पाण्डु पिच्छिलम्।
गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम्।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ ३० ॥

(च० चि० अ० ६ श्लो० १७१)

भा० टी०—कफ जनित रक्तार्शके लक्षण-खूनी बवासीर का खून-गाढ़ा, तारदार, पाण्डुवर्ण, लबाबदार हो, गुदा गीली, ठंडी मालूम हो, गुरु तथा स्निग्धद्रव्योंका सेवन कारण हो, तो वहां कफ का सम्बन्ध जानना चाहिए ॥ ३० ॥

अथार्शसां पूर्वरूपाणि।

पूर्वरूपमाह—

विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥ ३१ ॥
ग्रहणी-दोष-पाण्ड्वर्तेराशङ्का चोदरस्य च।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ ३२ ॥

(च० चि० अ० ६ श्लो० २१, २२)

म०—विष्टम्भ इत्यादि। विष्टम्भोऽन्नस्येति विष्टभ्यान्नस्य जीर्णतागमनम्, आहारो विष्टब्ध आमाशय एवावतिष्ठते, वातवैगुण्यात्। दौर्बल्यम्=हीनशक्तिता। 'विष्टम्भोऽङ्गस्य' इति पाठान्तरे विष्टम्भो मलस्य, अङ्गस्य दौर्बल्यम्। यद्यपि निदानानन्तरं पूर्वरूपं वक्तव्यं भवति, तथाऽपि निदानलक्षणानन्तरमत्र पूर्वरूपं; निदानलिङ्गयोश्चिकित्साङ्गतमत्वप्रतिपादनार्थं तयोः पूर्वमभिधानम्, अथवाऽवश्यवक्तव्यानां कामचारादभिधानमिति। एवमन्यत्रापि व्यतिक्रमे द्रष्टव्यम्। कुक्षेराटोपो गुडगुडाशब्द इति चक्रः, तलतल इति गुणाकरः, रुजापूर्वकः क्षोभ इति गदाधरः, पुरीषवृद्धिलक्षणे च आटोपमाध्मानमिति विवृतवान्, एतच्च न सर्वत्र, गुल्मपूर्वरूपे आटोपाऽऽध्मानयोरुभयोरपि पाठात्। उद्गारबाहुल्यमधोनिरुद्धस्य वायोरूर्ध्वगमनात्। सक्थिसादो=जङ्घावसादः। ग्रहणी-दोष-पाण्ड्वर्तेः ग्रहणी-दोष-युक्त-पाण्डुरोगस्य उदरस्य चाशङ्का, तेषां लक्षणदर्शनात्। 'ग्रहणीदोषपाण्ड्वर्तिः' इति पाठान्तरे ग्रहणीदोषस्य पाण्डोः पाण्डुरोगस्य चार्तिः पीडा स्यात्। अभिवृद्धये=उत्पत्त्यर्थमिति ॥ ३१ ॥ ३२ ॥

भा० टी०—बवासीर के पूर्वरूप—भोजन जल्दी हजम न हो कर कब्ज हो, शक्ति कम हो जाय, पेटमें गुड़गुड़ाहट हो, शरीर दुवला पतला हो जाय,डकार अधिक आवे, टांग थहराय, पाखाना कम हो,ग्रहणी रोग,पाण्डु रोग, उदर रोग के लक्षण मिलने से इनरोगों के होने की आशङ्का हो ॥ ३१–३२ ॥

## अथार्शसामुत्पत्तौ सर्वदोषप्रकोपः ।

ननु, गुददेशदुष्ट्या गुदजस्योत्पादात्कथं सर्वदेहे कृशत्व--कृष्णत्वादिरूपा दुष्टिरित्यत आह–

पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् ।
सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥ ३३ ॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ ३४ ॥

म०–पञ्चात्मेत्यादि।पञ्चात्मा पञ्चस्वरूपः,[1]प्राणापानसमानोदानव्यानभेदात्, एवं लिङ्गविपरिणामात् पञ्चात्मकत्वं पित्तेऽपि योज्यं,पित्तं [2]ह्यालोचक-रञ्जक-साधक- पाचक-भ्राजक-भेदाद्भिन्नम् । एवं कफोऽपि पञ्चात्मा, हृदयाऽऽमाशयजिह्वा-शिरः-सन्धिषु क्रमेणावलम्बक-क्लेदक-बोधक-तर्पक- श्लेष्मक-भेदात् । यदाह गौतमः- "श्लेष्मा पञ्चविधोरःस्थः श्लेष्मकादिस्वकर्मणा । कफधाम्नां च सर्वेषां यत् करोत्यवलम्बनम् ॥ अतोऽत्रलम्बकः श्लेष्मा यस्त्वामाशयसंश्रितः । क्लेदकः सोऽन्नसंघातक्लेदनाद्रसबोधनात् ॥ बोधको रसनास्थस्तु शिरः संस्थोऽक्षतर्पणात् । तर्पकः श्लेष्मकः सम्यक् श्लेषणात्सन्धिषु स्थितः"–इति । गुदवलित्रयस्य च प्रकोपो विकृतत्वं, प्रवाहणादिस्वकार्याकर्तृत्वं च । गुदवलित्रये इति पाठान्तरं न युक्तं, तत्र प्राणोदानयोः सन्निधानस्याप्यभावात्, बलिदुष्टेरप्राप्तेश्च । सर्व एवेति उक्तमारुतादयः एवेति । बहुव्याधिकराणीति जठराग्निमान्द्याद्युपद्रवकराणि । प्रायः कृच्छ्रतमानीति प्रायोग्रहणादसाध्यानि सुखसाध्यान्यपि ॥ ३३ ॥ ३४ ॥

भा० टी०—अर्शकी उत्पत्ति में सवदोषों का कोप—अर्श के उत्पन्न होने पर प्राण, अपान, समान, उदान, व्यान ये पाँच प्रकार के वात। पाचक, भ्राजक, रञ्जक, आलोचक, साधक, ये पाँच प्रकार के पित्त। क्लेदन, स्नेहन, रसन, अवलम्बन, श्लेष्मक ये पाँच प्रकार के कफ, तथा गुदा की तीनों वलियाँ, ये सब के

---

[1] हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठ देशे स्यात् व्यानः सर्वशरीरगः ।
[2] आलोचकं नेत्रयोः । रञ्जकं यकृति, साधकम् हृदि । पाचकमामाशये, भ्राजकं त्वचि ।

सब बिगड़ जाते हैं,इसी लिए अर्श से बड़ी तकलीफ होती है,अग्निमान्द्य आदि अनेक रोग पैदा हो जाते हैं, सारे शरीर में कष्ट मालूम होताहै और यह कष्टसाध्य या असाध्य होता है। गुदाकी वलियों के खराब होने से काँखा नहीं जाता ॥३३-३४॥

(च० चि० अ० ६ श्लो-२४, २५)

### अथ सुखसाध्यार्शसां लक्षणानि।

उक्तवाताद्यर्शसां साध्यत्वादिकमाह—

बाह्यायां तु वलौ जातान्येकदोषोल्वणानि च।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥३५॥

(च० चि० अ० ६ श्लो० ३१)

म०—बाह्यायामित्यादि। न चिरोत्पतितानीति अनतिक्रान्तसंवत्सराणि॥३५॥

अर्शकी सुखसाध्यता आदि—

यदि मस्से बाहर की वलि में हुए हों, एक ही दोष जान पड़े, एक वर्ष न बीता हो तो जल्दी अच्छा हो जाता है॥ ३५॥

### अथ कृच्छ्रसाध्यार्शसां लक्षणानि।

द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च॥ ३६॥

(च० चि० अ० ६ श्लो० २८)

म०—परिसंवत्सराणीति परिगतोऽतिक्रान्तः संवत्सरो यैस्तानि तथा। यानि तु बाह्यवलिजातानि द्विदोषोल्वणानि तानि कृच्छ्राणि त्रिदोषजानि याप्यानीत्युक्तम्, एवं द्वितीयायामेकदोषोल्वणानि कृच्छ्राणि, द्विदोषोल्वणानि याप्यानि॥ ३६॥

भा०टी०—यदि दूसरी वलिमें मस्से हों और द्वन्द्वज हों, एक वर्ष के पुराने हों तो कृच्छ्र साध्य होते हैं॥ ३६॥

### अथासाध्यार्शोलक्षणानि।

सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम्।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत्॥ ३७॥

(च० चि अ० ६ श्लो० २६)

म०—त्रिदोषोल्वणान्यसाध्यानि; एवं तृतीयायामेकदोषोल्वणानि याप्यानि शेषाण्यसाध्यानि । यदियाप्यं प्रत्याख्येयं वा तद्दोषवलिभेदेऽप्यसाध्यमेव, यदुक्तं चरकेण,—"नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्" ( च. नि. स्था. अ. ८ )—इति ॥ ३७ ॥

भा० टी०—भीतर की तीसरी वलि में उत्पन्न हों, तथा सहज और त्रिदोषज अर्श असाध्य होते हैं ॥ ३७ ॥

## अथ असाध्येष्वपि याप्य-प्रत्याख्येयभेदः ।

असाध्यो हि द्विविधो[1] याप्य-प्रत्याख्येय-भेदात्, तत्र यद्यायुः शेषोऽस्ति चतुष्पादसंपात्तिश्च तदा याप्यत्वमन्यथा प्रत्याख्येयत्वमित्याह—

**शेषत्वादायुषस्तानि चतुष्पादसमन्विते ।**
**याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥ ३८ ॥**

( च० चि० अ० ६ श्लो० ३० )

म०—शेषत्वादित्यादि । चतुष्पादसमन्विते 'अर्शोरोगिणि' इति शेषः । समन्वित इति भावे क्तः, तेन चतुष्पादसमन्वये सतीति चक्रः ॥ ३८ ॥

भा० टी०—याप्य अर्श के लक्षण—चिकित्साके चार पाद होते हैं १ वैद्य,२ रोगी, ३ परिचारक-सेवक(कम्पाउन्डर)४ औषध । यदि अर्श रोगी की आयु(उम्र)बाकी हो,चारो पाद ठीक २ गुणवान् हों, रोगी की जठराग्नि तीक्ष्ण हो तो अर्श याप्य होता है, और यदि ये बातें न हों तो चिकित्सा न करनी चाहिए । जब तक दवा और पथ्य सेवन हो तब तक रोग दबे रहें, और दवा पथ्य छूट जाने पर फिर उभड़ जाँय, इसे याप्य कहते हैं ॥ ३८ ॥

## अथैषांमुपद्रवादसाध्यत्वम् ।

उपद्रवादसाध्यत्वमाह—

**हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।**
**शोथो हृत्-पार्श्व—शूलं च यस्यासाध्योऽर्शसो हि सः ॥३९॥**
**हृत्-पार्श्व-शूलं संमोहश्छर्दिरङ्गस्य रुग् ज्वरः ।**
**तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ ४० ॥**

---

[1] याप्यस्वरूपं यथा—यापनीयं विजानीयात् क्रियाधारयते तु यम् । क्रियायां तु निवृत्तायां सद्य एव विनश्यति ।प्राप्ता क्रियाधारयति सुखिनं याप्यमातुरम् । प्रपतिष्यदिवागरः स्तम्भो यत्नेन योजितः ॥ आयुर्वेदविज्ञानम् ।

**तृष्णा-ऽरोचक-शूलाऽऽर्तमातिप्रस्रुतशोणितम् ।**
**शोथा-ऽतिसार-संयुक्तमर्शांसि क्षपयन्ति हि ॥ ४१ ॥**

( च० चि० अ० ६ श्लो० २६-२८ )

म०-हस्त इत्यादि । हस्तपादादिशोथो मिलितोऽसाध्यलक्षणम् । अत्र हृत्पार्श्वशूलसंमोहादि व्यस्तं समस्तं वा ॥ ३६-४१ ॥

भा० टी०—अर्श के उपद्रव—हाथ पैर में सूजन हो, नाभि, मुख, गुद, अण्डकोश, सूजे जांघ, छाती पंसुली में पीड़ा हो तो रोगी नहीं बचता ॥

हृदय, पंसुली दर्द करे, मूर्च्छा, कय, शरीर में पीड़ा, ज्वर, प्यास, गुद पक जाय, तो रोगी मर जाता है ॥

प्यास, अरुचि, दर्द, शोथ ( सूजन ) अतिसार हो, तथा मस्से से खून अधिक बहे तो रोगी नहीं बचता ॥ ३६—४१ ॥

### अथ मेढ्रजादीनां लक्षणम् ।

अथ मेढ्रजादीनां स्वरूपमाह—

**मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं; नाभिजानि च ।**
**गण्डूपदाऽऽस्यरूपाणि पिच्छिलानि मृदूनि च ॥ ४२ ॥**

( वा० नि० अ० ७ श्लो० ५६ )

म०-मेढ्रादिष्वित्यादि । मेढ्रादिष्वपि वक्ष्यन्ते यथास्वमित्यन्तेन छेदः । तेन नासार्श इत्यादिव्यपदेशः। गण्डूपदास्यरूपाणि=किञ्चुलिकमुखसदृशानि ॥४२॥

भा० टी०—अन्य स्थानों के अर्श के लक्षण—लिङ्ग, नाक,नाभि आदि स्थानों के भी अर्श बतलाये जाँयगे, वे केंचुवा के मुंह की तरह, कोमल तथा पिच्छिल होते हैं। ४२॥

### अथ चर्मकीलस्य सम्प्राप्तिः ।

चर्मकीलसंप्राप्तिमाह—

**व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ।**
**कीलोपमं स्थिरखरं चर्मकीलं तु तद्विदुः ॥ ४३ ॥**

( वा० नि० अ० ७श्लो० ५७ )

**म०-व्यान इत्यादि ।** व्यानो वायुः, एतच्च गुदौष्ठदेश एव नान्यत्रेति कार्तिककुण्डादयः ॥ ४३ ॥

भा० टी०—चर्मकीलके लक्षण—व्यान वायु (सर्व शरीर में रहने वाला ) कफ को बिगाड़ कर बाहर चमड़ा में कील की तरह कड़ा रूखा मस्सा पैदा कर देता है उसे चर्म कील कहतेहैं। किसी का मत है कि यह सब जगह होता है और किसी का मत है कि गुदा में ही बाहर होता है ॥ ४३ ॥

**अथ वातादिभेदेन तल्लक्षणम् ।**

तस्यैव वातादिभेदेन लक्षणमाह—

वातेन तोदपारुष्यं पित्तादसितवक्त्रता ।
श्लेष्मणा स्निग्धता चास्य ग्रथितत्वं सवर्णता ॥ ४४ ॥
( अर्शसां प्रशमे चित्तमाशु कुर्वीत बुद्धिमान् ।
तान्याशु हि गुदं बद्ध्वा कुर्युर्बद्धगुदोदरम् ॥ ४५ ॥

( वा० नि० अ० ७ श्लो० ५८, ५६ )

इति श्रीमाधवकरविरचिते माधवनिदानेऽर्शोनिदानं समाप्तम् ।

**म०—वातेनेत्यादि ।** सवर्णता गात्रसवर्णता ॥ ४४ ॥

भा० टी०—यदि वात से चर्मकील होता है तो तोद (कोंच) और रूखा होता है। पित्तसे मुंह उसका स्याह होता है और कफ से चिकना, गँठीला तथा शरीर के रंग की तरह होता है ॥ ४४ ॥

भा०टी०—ववासीर के पैदा होते ही उससे छुटकारा पाने के लिए कोशिश करनी चाहिए। नहीं तो अर्श बढ़कर सारे गुद को छेक कर बद्ध गुदोदर रोग पैदा कर देते हैं ॥ ४५ ॥

इति श्रीहरिनारायणश वैद्यकृतायां निदानदीपिकायांरुग्विनिश्चय-
भाषाटीकायामर्शोनिदानम् ।



## अथाग्निमान्द्याजीर्ण-विसूचिका-ऽलसक-विलम्बिका-निदानम् ।

### अथ मन्दाग्निनिदानम् ।

### डिस्पेप्सिया या लास आफ एपिटाइट ।

### ( Dyspepsia, or Loss of Appetite )

अर्शः कार्यत्वादग्निमान्द्यादीनां तान्याह—

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफ-पित्तानिलाऽऽधिक्यात्तत्साम्याज्जाठरोऽनलः ॥१॥

म०—मन्द इत्यादि । मन्दस्य दुर्जयत्वात्प्रागभिधानम् । कफपित्तानिलाधिक्यादिति यथाक्रमं मन्दादिषु योज्यम् । तत्साम्यादिति तेषां कफादीनां साम्यात् । समोऽविकृतः, धातुसाम्यहेतुरित्यर्थः । एतस्याविकारस्यापि विकारप्रस्तावेऽभिधानं प्रकृतिज्ञानानन्तरीयकं विकृतिज्ञानमिति बोधनार्थम् । जाठर इति धात्वग्निभूताग्निव्यवच्छेदार्थम् ॥ १ ॥

भा०टी०—अग्नि मान्द्य आदि-पेट की अग्नि चार प्रकार की होतीहै । पित्ताधिक्य होने से तीक्ष्ण, कफ से मन्द, वायुसे विषम और तीनों दोषोंके बराबर होने से सम होती है ॥ १ ॥

### अथ समाग्न्यादीनांलक्षणानि ।

प्रतिलोमतन्त्रयुक्त्या तेषां रूपमाह—

विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसंभवान् ॥ २ ॥
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पाऽपि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥ ३ ॥
कदाचित्पच्यते सम्यक्कदाचिन्न विपच्यते ।
मात्राऽतिमात्राऽप्याशिता सुखं यस्य विपच्यते ।
तीक्ष्णाग्निरिति तं विद्यात्; समाग्निः श्रेष्ठ उच्यते ॥४॥

म०-विषम इत्यादि । वातजान् रोगानिति वातनानात्मजानामशीतेरन्यतमान्, सामान्यजांश्च ज्वरातीसारादीन, एवं पित्तनानात्मजानामोषचोषादीनां

चत्वारिंशतोऽन्यतमान् एवं कफनानात्मजानां विंशतेरालस्यादीनामन्यतमान् । एते च विकाराश्चरके महारोगध्याये ( च.सू. स्था. अ. २० ) एव द्रष्टव्याः । समेत्यादि । समा उचिता, मात्रा आहारस्य, सम्यग्यस्य विपच्यते स समाग्निः । तीक्ष्णाग्निरिति तं विद्यादिति छेदः । मात्राऽतिमात्रेत्युपलक्षणम्, तेनाजीर्णगुरुभोजनादिकमपि लक्षणीयम् । यदुक्तमन्यत्र–"[१]अतिमात्रमजीर्णेऽपि गुरु चान्नमथाश्नतः। दिवाऽपि स्वपतो यस्य पच्यते सोऽग्निरुत्तमः"–इति । तीक्ष्णग्रहणेन भस्मकस्यावरोधः, अत्यन्ततीक्ष्णाग्निरेव भस्मक इत्युच्यते । यदुक्तं चरके–"नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् । स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति ॥ तदा लब्धबलो देहं विरुजेत् सानिलोऽनलः । अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥ पक्त्वाऽन्नं स ततो धातून् शोणितादीन् पचत्यपि । ततो दौर्बल्यमातङ्कान् मृत्युं चोपानयेन्नरम् ॥ भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति । तृट्–श्वास–दाह–मूर्च्छाः स्युर्व्याधयोऽत्यग्निसंभवाः ॥ (च. चि. स्था. अ.१५)"–इति ॥ २–४ ॥

भा० टी०—विषम अग्नि वातज रोग,तीक्ष्ण पित्तज रोग मन्द कफज रोगों को पैदा करती है। जिसका विधिपूर्वक भोजन किया हुआ विना क्लेश हज़म होजाय वह समाग्नि है। मन्दाग्नि पुरुष थोड़ा भी भोजन हज़म नहीं कर सकता, विषमाग्नि से कभी हज़म हो जाता है कभी नहीं, जिसका भोजन झटपट हज़म हो जाय, चाहे अधिक खाया हो चाहे खुराक भर खाया हो उसे तीक्ष्णाग्नि कहते हैं। इन चारो प्रकार के अग्नि में समाग्नि श्रेष्ठ है ॥ २–४ ॥

चरक में एक भस्मक रोग कहा गया है। वह तीक्ष्णाग्नि से होता है। उसमें बड़ी तेज भूख लगती है। आदमी १०—५ सेर तक खा लेता है सब धड़ाधड़ जल्दी हजम हो जाता है। यदि अन्न खाने में देर लगती है तो खून मांस आदि धातु हज़म होने लगते हैं। खाने पर कुछ देर के लिए आराम हो जाता है मगर पच जाने पर फिर तकलीफ होती है। दुर्बलता खांसी, दाह, मूर्च्छा प्यास, आदि रोग पैदा हो जाते हैं। यदि चिकित्सा ठीक तरह हुई तो रोग अच्छा हो जाता है। नहीं तो रोगी नहीं बचता।

---

१ अतिमात्रमतिशयभोजनम् । अजीर्णेऽपि आहारेऽपरिपक्वे सत्यपि गुरुचान्नमश्नतो भुञ्जानस्य दिवा स्वपतोऽपि यस्य येनौदरेणाग्निना सम्यक् पच्यते तस्य स उत्तमोऽग्निरिति ।

## अथाजीर्णनिदानम् ।

**अग्निमान्द्याजीर्णयोः परस्परकारणत्वादजीर्णान्याह—**

**आमं विदग्धं विष्टब्धं कफ-पित्ता-ऽनिलैस्त्रिभिः ।**
**अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ५ ॥**
**अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ।**
**वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥ ६ ॥**

**म०—आममित्यादि** । त्रिभिरिति कफादिभिरेकैकशो यथासंख्येन । रसशेषत इति रसाय शेषो[1] रसशेषः, प्रकृतिविकृतिभावे चतुर्थी, यथा—यूपाय दारु यूपदारु; अथवा रसशब्देन रसवानाहारोऽभिप्रेतो लक्षणया, तेन रसशब्देन रसवानाहारोऽभिधीयते, तस्य शेषोऽपरिणतिलक्षणो रसशेष इति **जेज्जटः** । ननु यद्येवं तदा आम-विदग्ध-विष्टब्धानामन्यतमरूपस्यावश्यंभावित्वान्न तेभ्यो भेदः; किंच तल्लिङ्गैरम्लोद्गारादिभिर्भवितव्यं, तथा च सत्युद्गारशुद्धे रसशेषाजीर्णलक्षणस्यानुदयप्रसङ्गः । उक्तं हि **सुश्रुते**—"[2]उद्गारशुद्धावपि भक्तकाङ्क्षा नजायते हृद्गुरुता च यस्य । रसावशेषेण तु सप्रसेकं चतुर्थमेतत्प्रवदन्त्यजीर्णम्" इति ( सु. सू. स्था. अ. ४६ ) **आरोग्यमञ्जर्यां नागार्जुनोऽप्याह—**उद्गारेऽपि विशुद्धतामुपगते काङ्क्षा न भक्तादिषु स्निग्धत्वं वदनस्य सन्धिषु रुजा कृत्वा शिरोगौरवम् । [3]मन्दाजीर्णरसे तु लक्षणमिदं तत्रातिवृद्धे पुनर्हल्लास-ज्वर-मूर्च्छनादि च भवेत्सर्वामयक्षोभणम्"—इति । नैवम् अवश्यंभाविविदग्धादिरूपस्याप्याहारशेषस्यात्यल्पत्वेन न [4]तदनुरञ्जितोद्गारोदयप्रसङ्गः, अकालबुभुक्षायामिव । यदाह **सुश्रुतः**—स्वल्पं यदा दोषविबद्धमामं लीनं न तेजः पथमावृणोति । भवत्यजीर्णेऽपि तदा बुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति ( सु. सू. स्था. अ. ४६ )"—इति । **तन्त्रान्तरे**ऽप्याहारापाकज-रसशेष—लक्षणमुक्तम्—"आमं विदग्धं विष्टब्धं रसशेषमथापि च । चतुर्विधमजीर्णं स्यादाहारापरिपाकतः "—इति । **गदाधरस्त्वाह—**रसे शेषो रसशेषः, आहारजनिते रसे शेष [5]आहारावयवोऽनुप्रविष्टोऽलक्ष्यमाणः क्षीरे नीरमिव रसशेषः । ननु, आमाजीर्णादिभ्यो रसशेषस्य को भेदः ? उच्यते, आमादित्रयमन्नजं, रसशेषस्त्वाहाररसजः; वातिकादिव्यपदेशश्चात्र न

---

१ परिणतावशिष्ट आहारः । २ "न जायते,, इत्यस्यान्वयो भक्तकाङ्क्षा पदेन सह । हृद्गुरुता च भवति । ३ मन्दाजीर्णरसे रसशेषाजीर्णरसे । सर्वामयक्षोभणं सर्वरोगोत्पादनम् । ४ तदनु इति–आमादि लिङ्गाम्लाद्युद्गारप्रवर्तनं न भवति। इत्यर्थः । अकालेऽजीर्णे बुभुक्षा तस्याम् । ५ आहारावयव आहारस्यापरिपक्वांश इत्यर्थः । अनुप्रविष्टः सूक्ष्मरूपेण प्रविष्टः

विस्तरस्तु सुश्रुते जेज्जटे द्रष्टव्यः। कफप्रधानता च वेगरोधादिकुपितवातविप्लुताग्निमान्द्यादिना बोद्धव्या। रसवर्त्मसु रसवहधमनीषु, अत्रादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः। तेन रक्तादिवहस्रोतोरोधोऽपि बोध्यः। अथवा रसकारणतया रक्तादीनां रसदुष्ट्यैव रक्तादिदुष्टिरिति कार्तिकः। इदमत्र सूचितं,—यन्मार्गरोधात् हृदयस्थो रसस्तत्रैवावस्थितो विकृतो मुखेन निःसरति। यदाह चरकः—"रसःस्रोतःसु रुद्धेषु स्वस्थानस्थो विदह्यते। स ऊर्ध्वं कासवेगेन बहुरूपः प्रवर्तते" (च.चि. स्था.अ. ८) इति। एतेनानुलोमक्षयो दर्शितः, कारणभूतरसधातुक्षये सति रक्तादीनां रसकार्याणां पोषकाभावेन क्षीयमाणत्वात्। प्रतिलोमक्षयं दर्शयितुमाह—अतिव्यवायिनो वेत्यादि। रेतसि क्षीणे सत्यनन्तराः समीपगा धातवः क्षीयन्ते, तद्यथा—शुक्रे क्षीणे मज्जा क्षीयते, मज्जनि क्षीणेऽस्थि, एवं पूर्वं पूर्वम्। ननु, कार्यभूतस्य शुक्रस्य क्षयात् कथं कारणभूतानां धातूनां क्षय इति चेत्? उच्यते, शुक्रक्षयाद्वायुः प्रकुप्यति, यदुक्तम्—"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" ( च. चि. स्था. अ. २८ )—इति। स वायुः सान्निध्यान्मज्जानं शोषयति; एवं पूर्वपूर्वधातून्। दृष्टं च [1] प्रत्यासत्त्याऽपि कार्यजननं, यथा—अग्निसन्तप्तायोगोलकसन्निधानादार्द्रभूभागस्यापि शोषः। तथा च रससञ्चारपक्षे सुश्रुतवचनम्—"पूर्वः पूर्वोऽतिवृद्धत्वाद्वर्धयेद्धि परं परम्। तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम्" ( सु. सू. स्था. अ. १५ )—इति ॥ २ ॥

राजयक्ष्मा की सम्प्राप्ति—कफाधिक दोषों से रस बहने वाले मार्ग के रुक जाने पर, अथवा अधिक मैथुन से वीर्य के कम हो जाने पर वायुद्वारा पास का धातु मज्जा कम होता है। फिर अस्थि आदि, इस प्रकार सब धातु के धीरे २ कमजोर हो जाने से, रोगी सूख जाता है। रास्ता रुके रहने से रस हृदय में ही रहता हुआ खराब होकर खांसी के साथ कफ की सूरत में मुँह से निकलता है ॥ २ ॥

## अथ यक्ष्मणः पूर्वरूपाणि ।

पूर्वरूपमाह—

**श्वासाङ्गमर्द-कफसंस्रव-तालुशोष-**
**वम्यग्निसाद-मद-पीनस-कास-निद्राः ।**
**शोषे भविष्यति भवन्ति स चापि जन्तुः**
**शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ ३ ॥**

---

१—प्रत्यासत्त्या—सामीप्येन।

२ — श्वासाङ्गसादेति पाठान्तरम्।

स्वप्नेषु काक-शुक-शल्लकि-नीलकण्ठा-
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरून्पवन-धूम-दवा-ऽर्दितांश्च ॥ ४ ॥

( सु० उ० अ० ४१ श्लो० १६ )

म०—श्वासेत्यादि । संस्रवः=ष्ठीवनम् । पीनसः=प्रतिश्यायः । मांसपरो=मांसभोजनेच्छुः । रिरंसुः स्त्रियं रन्तुमिच्छुः; एतच्च व्याधिमहिम्ना मनोदोषात् । तथा स्वप्नेषु काकादिवाहनं च पूर्वरूपमेव । शल्लकी 'शरारु' इति ख्याता, नीलकण्ठो=मयूरः । विजलाः=निर्जलाः । दवो=वनाग्निः । अर्दितान्=अभिभूतान् । चकारात्तृण-केश-निपातादयो द्रष्टव्याः।यदुक्तं चरके—"पूर्वरूपं प्रतिश्यायो[1]दौःशील्यं दोषदर्शनम् । अदोषेष्वपि भावेषु काये बीभत्सदर्शनम् ॥ घृणित्वमश्नतश्चापि बल-मांस-परिक्षयः । स्त्री-मद्य-मांस-प्रियता प्रियता चावगुण्ठने ॥ मक्षिका-घुण केशानां तृणानां पतनानि च । प्रायोऽन्नपाने केशानां नखानां चातिवर्धनम् ॥ पतत्रिभिः पतङ्गैश्च श्वापदैश्चाभिघर्षणम् ।" ( च. चि. क्षया. अ. ८ )—इति । तत्र श्वापदाः=व्याघ्रादयः ॥ ३ ॥ ४ ॥

राजयक्ष्मा का पूर्वरूप—श्वास, अङ्गमर्द=अँगड़ाई । कफ का अधिक गिरना, तालु सूखे, कय, मन्दाग्नि, नशासा, जुकाम, खाँसी, नींद अधिक आये, आखें सफेद हो जाँय, मांस खाने की इच्छा हो, स्त्री के साथ रमण करने का मन चलै । सपना में आदमी अपने को कौआ, तोता, साही, नीलकण्ठ, गीध, बन्दर गिरगिटांग पर चढ़ा हुआ देखे और सूखे, हवा से उखड़े, धुवाँ से झुलसाये, वनाग्नि से व्याप्त पेड़ों को और सूखी नदियों को देखै ॥ ३–४ ॥

**अथ क्षयस्य त्रीणि मुख्यलक्षणानि ।**

त्रिरूपसंपन्नमाह—

अंस-पार्श्वाऽभितापश्च सन्तापः कर-पादयोः ।
ज्वरः सर्वाङ्ग[2]श्चेति लक्षणं राजयक्ष्मणः ॥ ५ ॥

( च० चि० अ० ८ श्लो० ५० )

---

१ – दौःशील्यं दुष्टस्वभावः । अदोषेष्वपि भावेषु पदार्थेषु दोषदर्शनम् दोषज्ञानम् । धर्षणमाक्रमणम् ॥

२ सर्वाङ्गगः—सर्वधातुगतप्रलेपकाख्यो ज्वर इत्यर्थः ।

म०—अंसेत्यादि । अंस-पार्श्वयोरभितापः=पीडा; अंसो भुजस्योपरिभागः, अभितापत्वेन एकं रूपम्, एवं संतापेऽपि वाच्यम् । कर-पादयोरित्यत्र प्राण्यङ्गत्वादेकवद्भावं मन्यमानाः काश्मीराः—'तापः पादकरस्य च'—इति पठन्ति, 'करपादिकः' इति च पाठान्तरम् । एतत्त्रयं प्रायोभावित्वेन चरकेणोक्तम्, तेनैकादशरूपेषु मध्येऽन्यदपि त्रयं बोध्यम् । तथा च भोजः—"कासो ज्वरो रक्तपित्तं त्रिरूपे राजयक्ष्मणि" इति । अन्ये त्वाहुः—राजयक्ष्मणि यो ज्वरस्तस्यैतल्लक्षणमिति । जेज्जटस्तु त्रिरूपसंपत्तिमेव व्याख्यातवान् ॥ ५ ॥

भा० टी०—क्षय का सामान्य लक्षण—कंधा पंसुली में पीड़ा हो, हाथ पैर में जलन हो, सब शरीर भर में मन्द २ ज्वर रहे । यह राजयक्ष्मा का सामान्य तीन रूप वाला लक्षण है ॥५॥

अथ क्षयस्य षड् लक्षणानि चरकोयाणि ।

( कासो ज्वरः पार्श्वशूलं स्वरवर्चो गदोऽरुचिः ।
षडिमान्यपि जानीयाल्लक्षणानि च यक्ष्मणः ॥ )

( च० चि० अ० ८ श्लो० ४४ )

भा० टी०—खाँसी, ज्वर, पार्श्वशूल, स्वरभंग, दस्त, अरुचि, ये छः भी राजयक्ष्मा के लक्षण हैं । चरक—।

अथ तान्येव सौश्रुतानि ।

( भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् ।
स्वरभेदश्च जायेत षड्रूपे राजयक्ष्मणि ॥ )

( सु० उ० अ० ४१ )

भा०टी०—भक्तद्वेष, ज्वर, श्वास, कास, खून निकले, स्वरभेद, ये छ रूप राजयक्ष्मा के होते हैं ।

अथ क्षयस्यैकादश रूपाणि ।

राजयक्ष्मणस्त्रैदोषिकस्यैकादश रूपाणि विभज्य व्याधिप्रभावाज्जायन्ते, न तु सन्निपातज्वरलिङ्गवत्सर्वदोषैः सर्वाणीत्याह—

स्वरभेदोऽनिलाच्छूलं संकोचश्चांस-पार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥ ६ ॥

शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः ॥ ७ ॥

( सु० उ० त० अ० ४१ श्लो० ८ )

म०—स्वरभेदोऽनिलादित्यादि । शूलम् अंसपार्श्वयोरेव, संकोच एक एव गणनीयः । अभक्तच्छन्दो=भक्तारुचिः । कण्ठस्य उद्ध्वंसः=कण्ठभेदः, उत्कासिकेति कार्तिकः ॥ ६—७ ॥

भा० टी०—राजयक्ष्मा के ग्यारह रूप-वात से-१ स्वर भेद, २ अंस ( कंधा ) पसवाड़े में शूल, ३ उन्ही दोनों स्थानों का जगह संकोच पित्त से—१ ज्वर, २ दाह, ३ अतिसार, ४ खून निकले, । कफ से—१ शिर भारी रहे, २ अरुचि, ३ खाँसी और ४ कण्ठ भेदया गला का सहराना ॥ ६-७ ॥

## अथासाध्यक्षयलक्षणम् ।

असाध्यलक्षणमाह—

एकादशभिरेभिर्वा षड्भिर्वाऽपि समन्वितम् ।
कासाऽतीसार-पार्श्वाऽऽर्ति-स्वरभेदा-ऽरुचि-ज्वरैः ॥ ८ ॥
त्रिभिर्वा पीडितं लिङ्गैः कास-श्वासा-सृगामयैः ।
जह्याच्छोषार्दितं जन्तुमिच्छन् सुविमलं यशः ॥ ९ ॥

( सु० उ० अ० ४१ श्लो० १२, १३ )

म०—एकादशभिरित्यादि । एकादशभिरेभिरिति=स्वरभेदादिभिः कण्ठोद्ध्वंसान्तैः । षड्भिरिति सुश्रुतेन षड् रूपाणि पठितानि—"भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् । स्वरभेदश्च जायेत षड्रूपं राजयक्ष्मणि" ( सु. उ. तं. अ. ४१ )—इति । 'कासाऽतिसार-पार्श्वार्ति-स्वरभेदा-ऽरुचिज्वरैः'—इति तु कस्यचित्तन्त्रस्य षड् रूपाणि माधवकरेण लिखितानीति । एतानि चैकादशरूपाणि प्रायोभावित्वादुक्तानि, अन्यतमरूपपरिहाराद्रूपान्तरयोगेऽप्येकादशत्वं षट्त्वं च स्यादेव, तथाहि चरको निदाने एकादशरूपाणि पठित्वा चिकित्सितेऽपि वेगरोधादिकारणचतुष्टयजे प्रतिकारणं चतुर्धा एकादशरूपाणि पठितवान् । यथा—"कासोंऽसतापो वैस्वर्यं ज्वरः पार्श्व-शिरो-रुजा । छर्दनं रक्तकफयोः श्वासो वर्चोग्रहोऽरुचिः ॥ रूपाण्येकादशैतानि यक्ष्मणि षडिमानि च । कासो ज्वरः पार्श्वशूलं स्वर-वर्चोग्रहोऽरुचिः" ( च. चि. स्था. अ. ८ ) इति । एकादशवचनेनैव बोधयति—सम्पूर्णे यक्ष्मण्येकादशैव रूपाणि भवन्तीति । जह्यादिति 'बल-मांस-क्षये सति' इति शेषः

तथा च चरकः—"वातव्याधिरपस्मारी कुष्ठी रक्तपित्ती च यो नरः ॥ अचिकित्स्या भवन्त्येते बलमांसपरिक्षयात् । स्वल्पेष्वपि विकारेषु भिषगेतान् विवर्जयेत् ॥" ( च. इ. स्था. अ. ९ ) इति ॥८–९॥

भा० टी०—इन ग्यारहों रूपों से युक्त हो, अथवा कास, अतिसार, पार्श्वपीड़ा, स्वरभेद, अरुचि, ज्वर इन छः रूपों से युक्त हो, या कास, श्वास, खून का गिरना इन तीन लक्षणों से युक्त रोगी असाध्य कहा गया है। अपना यश चाहने वाले वैद्य को ऐसे रोगी की दवा न करनी चाहिए ॥ ८–९ ॥

अथापरमसाध्यलक्षणम् ।

सर्वैरर्धैस्त्रिभिर्वाऽपि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ॥ १० ॥

( च० चि० अ० ८ श्लो० ४५ )

म०—सर्वैरित्यादि । ननु सर्वरूपाण्येकादश, एकादशानामर्धं सार्धपञ्च भवन्ति, तत्र कतमस्य रूपस्यार्धत्वं, किंभूतं वा भवति ? तदुच्यते, एकस्य रूपस्यार्धत्वासंभवे षट्पञ्चरूपयोरर्धयोरुत्कृष्टत्वात् षड्रूप एवार्धो ग्राह्यः । लिङ्गैर्युक्त इति संबन्धः । अतोऽन्यथेति बलमांसक्षयाभावेऽपति ॥ १० ॥

भा० टी०—राजयक्ष्मा का दूसरा असाध्य लक्षण—यदि रोगी बाहर से दुबला और भीतर से निर्बल होगया हो तो चाहे ग्यारह रूप हों, या छः रूप हों अथवा तीन रूप हों। रोगी नहीं बचता, हाँ यदि निर्बलता न हो तो चाहे सभी लक्षण क्यों न हों, अच्छा हो सकता है ॥१०॥

अथापराण्यसाध्यलक्षणानि ।

महाशनं क्षीयमाणमतीसारनिपीडितम् ।
शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् ॥ ११ ॥

( सु० उ० त० अ० ४१ श्लो० २९ )

म०—महाशनं क्षीयमाणमित्येकमसाध्यलक्षणम्, अरिष्टरूपत्वात्, अतीसारनिपीडितमिति द्वितीयम्, यक्ष्मिणो मलायत्तजीवितस्योक्तत्वात्; शूनमुष्कोदरमिति तृतीयम्, मुष्कशोथस्य विरेकसाध्यत्वेन विरुद्धोपक्रमत्वात् ॥ ११ ॥

---

१ 'अर्धोनानि षट्' इति पाठान्तरम् ।

२ मलायत्तं मलाधीनं यज्जीवितं जीवनं तस्य ।

भा० टी०-राजयक्ष्मा के तीन असाध्य लक्षण (१) राजयक्ष्माका रोगी खाय खूब, मगर उसका कुछ फल न देखपड़े, अर्थात् क्षीण होता जाय, (२) यक्ष्मा के रोगी को अतिसार हो (३) अण्डकोश और पेट पर सूजन आगई हो तो, रोगी नहीं बचता॥११॥

**अथान्यदसाध्यलक्षणम् ।**

**शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम् ।**
**कृच्छ्रेण बहुमेहन्तं यक्ष्मा हन्तीह मानवम् ॥ १२ ॥**

म०-शुक्लेत्यादि । शुक्लाक्षत्वादय एकैकशोऽसाध्यलक्षणानि ॥ १२ ॥

भा० टी० दूसरे चार असाध्यलक्षण-यक्ष्मा के रोगी की आँखे सफेद होगई हों, [२] अरुचि जबर्दस्त हो, [३] ऊर्ध्वश्वास हो, [४] कष्ट के साथ पेशाब कई बार हो तो रोग असाध्य समझना चाहिए ॥ १२ ॥

**अथास्य चिकित्स्यत्वम् ।**

चिकित्स्यत्वमाह—

**ज्वरानुबन्धरहितं बलवन्तं क्रियासहम् ।**
**उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥ १३ ॥**

( सु० ऊ०।अ० ४१ श्लो० २१ )

म०-ज्वरेत्यादि । उपक्रमेत्=चिकित्सेत् । अकृशमित्यनेन वयस्थोऽपि प्रत्याख्यायोपक्रम्यत इति सूच्यते । यदुक्तमन्यत्र,—"परं[1] दिनसहस्रं तु यदि जीवति मानवः । सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः"—इति ॥ १३ ॥

भा० टी०-यदि बार बार ज्वरका सम्बन्ध न रहे, रोगी के शरीर में बल मौजूद हो, चिकित्सा-दवा सह सकताहो-जितेन्द्रिय अर्थात् परहेज करने वाला हो, मन्दाग्नि न हुई हो, देखनें मे ऊपर से दुबला न मालूम हो तो ऐसे रोगी को चिकित्सा करनी चाहिए । तौभी यह अवश्य कहदे कि यह रोग ही असाध्य है । शायद फायदा हो जाय ॥ १३ ॥

**अथ क्षयस्यान्ये प्रकाराः ।**

व्यवायादिजनितधातुशोषणमात्रेण राजयक्ष्मत्वं निरस्यन्नाह—

**व्यवाय-शोक-वार्धक्य-व्यायामा-ऽध्व-प्रशोषितान् ।**
**व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु ॥ १४ ॥**

( सु० उ० अ० ४१ श्लो० १४ )

---

१ परमित्यवधारणे, दिनसहस्रमेव सुभिषग्भिरुक्रान्तो जीवति न तु ततः परस्यमिर्थः ।

म०—व्यवायेत्यादि । यदुक्तं सुश्रुते:—"केषांचिदेवं शोषो हि कारणैर्भेदमागतः । न तत्र दोषलिङ्गानां समस्तानां निपातनम् ॥ क्षया एव हि ते ज्ञेयाः प्रत्येकं [1]धातुसंक्षयात्" ( सु. उ. त. अ. ४१ )–इति । वृद्धस्य भावो वार्धक्यमिति स्वार्थे कनि ततः ष्यञिति कार्तिकः ॥ १४ ॥

भा०टी०–क्षयरोग—अधिक मैथुन,शोक,बुढ़ापा, अधिक परिश्रम,अधिकदूर रस्ता चलना, घाव हो जाना, भीतर छाती में जखम हो जाना,क्षयरोग का कारण है । क्षय में सब धातु क्षीण होने लगते हैं और रोगी का शरीर सूख जाता है । इसमें प्रायः राजयक्ष्मा के ही लक्षण होते हैं । मगर इसे राजयक्ष्मा नहीं कहना चाहिए, ये क्षय या शोष माने गये हैं ॥ १४ ॥

## अथ व्यवायशोषिणो लक्षणम् ।

व्यवायशोषिणो लक्षणमाह—

**व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ।**
**पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः ॥ १५ ॥**

( सु० उ० अ० ४१ श्लो० १५ )

म०—व्यवायेत्यादि । शुक्रस्य क्षयलिङ्गैरिति सुश्रुतोक्तैः । तद्यथा—"शुक्रक्षये मेढ्र-वृषण-वेदना, अशक्तिर्मैथुने, चिराद्वा प्रसेकः, प्रसेके चाल्पदर्शनं रक्तस्य शुक्रस्य वा" ( सु. सू. स्था. अ. १५ )—इति ॥ १५ ॥

भा०टी०–व्यवाय शोषी के लक्षण–व्यवाय शोषी के वेही लक्षण होते हैं,जो कि वीर्य के क्षय होने पर होते हैं—जैसे–इन्द्रिय और अण्ड कोशमें पीड़ा, मैथुनकरने की शक्ति न रहै, वीर्य देरमें गिरे, और कम गिरे कभी २ खून गिरे । शरीर पीलाहो जाय, सबधातु क्षीण हो जाँय ॥ १५ ॥

## अथ शोकशोषिणो लक्षणम् ।

शोकशोषिणो लक्षणमाह—

**प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ।**

(सु० उ० अ० ४१ श्लो० २१)

म०—प्रध्यानेत्यादिना । शोकशोष्यपि तादृश इति शुक्रस्य क्षयलक्षणव्यतिरिक्तेन शुक्रशोषलिङ्गेन युक्तः, यदुक्तं सुश्रुते—"विना शुक्रक्षयकृतैर्विकारैरुपलक्षितः" ( सु. उ. तं. अ. ४१ ) इति ॥–

---

१ "केवलं धातुसंज्ञिताः" इति पाठान्तरम् ।

भा० टी० शोक शोषी के वेही व्यवायशोषी वाले सब लक्षण होते हैं शिर्फ शुक्रक्षय लक्षणके नहीं होते ।

### अथ जराशोषिणो लक्षणम् ।

वार्धक्यशोषिणो लक्षणमाह—

**जराशोषी कृशो मन्द-वीर्य-बुद्धि-बलेन्द्रियः ॥ १६ ॥**
**कम्पनोऽरुचिमान् भिन्न-कांस्य-पात्र-हतस्वरः ।**
**ष्ठीवति श्लेष्मणा हीनं गौरवा--ऽरति-पीडितः ॥ १७ ॥**
**संप्रस्नुताऽस्य-नासाऽक्षः शुष्क-रूक्ष-मल-च्छविः ।**

(सु० उ० त० अ० ४१ श्लो० १७-१८)

म० — जरेत्यादि । कम्पनः=कम्पयुक्तः । भिन्नस्य स्फुटितस्य कांस्यपात्रस्य हतस्य दण्डादिनेव स्वरो यस्य स तथा । ष्ठीवति श्लेष्मणा हीनमिति श्लेष्महरणाय यत्ने कृतेऽपि न श्लेष्मनिः[1]सरणम् । शुष्क-रूक्ष-मल-च्छविरिति शुष्करूक्षे यथाक्रमं मलच्छवी यस्य स तथा ॥ १६ ॥ १७ ॥ —

भा० टी०-जरा शोषके लक्षण—बुढ़ापा आने पर प्रायः ये सब लक्षण होने लगते हैं । शरीर दुर्बल होजाता है, वीर्य, बुद्धि, बल, इन्द्रिय, शक्ति, ये कम हो जाते हैं । शरीर और शिर काँपता है । खाने में रुचि नहीं रहती । फूटा हुआ काँसे का वर्तन चोट खाने पर जैसे खन खनाता है वैसी आवाज हो जाती है । कोशिश करने पर भी थूक में कफ नहीं निकलता । शरीर में भारीपन रहता है । मन उचाट रहता है । आँख; नाक, से पानी बहता है,मुहसे लार टपकता है । पाखाना सूखा होता है और शरीर की कान्ति रूखी होजाती है ॥ १६-१८ ॥

### अथ मार्गशोषिणो लक्षणम् ।

अध्वशोषिणो लक्षणमाह—

**अध्वशोषी च स्रस्ताङ्गः संभृष्ट-परुष-च्छविः ॥ १८ ॥**
**प्रसुप्तगात्रावयवः शुष्क-क्लोम-गलाऽऽननः ।**

( सु० उ० अ० ४१ श्लो० १९ )

---

[1] अस्याग्रे कस्मिंश्चित्पुस्तके 'पुनरुक्तिग्रहणमत्यन्तरोग ख्यापनार्थम्' इत्यधिकं पठ्यते ।

म०—अध्वेत्यादि । संभृष्टस्येव=भर्जितस्येव छविर्वर्णो यस्य स तथा । प्रसुप्तः=स्पर्शानभिज्ञः । क्लोम=पिपासास्थानं, क्लोमस्थाने तालुनीति पाठान्तरम् ॥ १८ ॥

भा०टी०-अध्वशोषी के लक्षण—शरीर शिथिल हो जाता है । मुखकी कान्ति झुलसी सी मालूम होती है । शरीर सुन्न होजाता है । क्लोम=पिपासा स्थान, गला, और मुंह सूखते हैं ॥ १८ ॥

## अथ व्यायामशोषिणो लक्षणम् ।

व्यायामशोषिणो लक्षणमाह—

**व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ॥ १९ ॥**
**लिंगैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना ।**

( सु० उ० त० अ० ४१ श्लो० २० )

म०—व्यायामेत्यादि । एभिरध्वशोषलक्षणैः, अध्वनो व्याया[1]ममात्रसामान्यात् । भूयिष्ठमत्यर्थम्, अध्वशोषेऽल्पानि लक्षणानि व्यायामजे तु महान्तीत्यर्थः । तथा-'उरःक्षतकृ[2]तलिङ्गैः संयुक्तः क्षतवर्जितैः' इति सुगमः पाठः । गदाधरस्तु "लिंगैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना—" इति पठति, व्याचष्टे च—उरःक्षतेन व्यायाम-भाराऽध्ययन-द्रुतयानादि-हेतुना यः कृतः शोषः सोऽप्येभिरेवाध्वशोष-लिङ्गैर्भूयिष्ठं संयुक्तः, क्षतं क्षतकार्यं विना । क्षतकार्यं तु सुश्रुते यथा—'तस्योरसि क्षते रक्तं पूयः श्लेष्मा च गच्छति—"इत्यारभ्य "भिन्न-वर्ण-स्वरो नरः" ( सु. उ. तं अ. ४१ )—इत्यन्तमेतान्येव लक्षणानि क्षतेऽधिकानि; उरःक्षतकारण-व्यायाम-भारादिकृतशोषस्य लक्षणमेव भूयिष्ठं यत्तदेवोरःक्षतकारणमात्रत्वादध्वनोऽपीत्यर्थः। अथवा क्षतं विना=व्रणं विना, उरःक्षतनिमित्त-भारा-ध्ययनादिनाऽतिमात्रेण यः कृतः शोषः सोऽप्येभिरेवात्यर्थाध्वशोषलिंगैः । समन्वित इति प्रकृतेन सम्बन्धः; सव्रणस्य तु वक्ष्यमाणमेव लक्षणमिति ॥ १९ ॥—

भा०टी०-व्यायाम शोषमें अध्वशोषके लक्षण अधिक होते हैं, और उरक्षत के लक्षण भी कुछ २ होते हैं । उरक्षतमें छातीमें व्रण होता है, इसमें नहीं ॥१९॥

## अथ व्रणशोषिणो लक्षणम् ।

कारणत्रयेण व्रणशोषिणमाह—

**रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।**
**व्रणितस्य भवेच्छोषः स चासाध्यतमो मतः ॥ २० ॥**

( सु० उ० त० अ० ४१ श्लो० २३ )

---

[1] व्यायाममात्रसाम्यत्वात् इति पाठान्तरम् । [2] उरःक्षतशोषलिङ्गैरित्यर्थः ।

म०–रक्तक्षयादित्यादि । वेदना=व्रणवेदनाः,ताभिर्भय–शोक-वन्मनः क्षोभाद्वातप्रकोपादेव शोषः : स चासाध्यतम इति स्वार्थिकस्तमप्, यथा–"युधिष्ठिरः श्रेष्ठतमः कुरूणाम्"–इति । अत्रेष्ठनैवातिशायिकप्रत्ययेन प्रशस्ततमत्वस्य प्रतिपादितत्वात् । अथवा याप्यापेक्षयाऽसाध्यतमशब्देन प्रत्याख्येय उच्यते, याप्य स्याप्यसाध्यरूपत्वात् । ननु, एवं सति "कृशानां व्रणशोषिणाम् । बृंहणीयो विधिः कार्यः" ( सु. चि. स्था. अ. १ )-इति सुश्रुतेनैवोक्तं चिकित्सितस्थाने विरुध्यते ? उच्यते, प्रबलशोषे प्रत्याख्येयत्वं, नातिप्रबले तु चिकित्साविधानमिति समर्थनीयम् । चन्द्रिकाकारस्तु 'स चासाध्यतमः स्मृतः'–इत्यस्य स्थाने 'याप्या साध्यतमस्तु सः' इति पठति चिकित्सायां बृंहणविधेरभिधानादिति ॥ २० ॥

भा०टी०-व्रण की अवस्थामें खून अधिक निकलने से, पीड़ा होनेसे, भोजन कुछ न होनेसे व्रणी मनुष्यका शरीर और धातु सूखने लगता है अत एव इसे व्रण शोष कहते हैं। बहुतही असाध्य—होता है ॥ २० ॥

अथोरःक्षतस्य हेतवो लक्षणानि च ।

ब्रांकाइटेसिस केविटेशन हेमोटाइसिस

[ Bronchiectasis, Cavitation, or Haemoptysis. ]

शोषनिदानेनैव साहसादिना उरःक्षतस्य संभवात्, उरःक्षतेनापि शोषसंभवात्, शोषाधिकारे सनिदानमुरःक्षतमाह—

धनुषाऽऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
युध्यमानस्य बलिभिः पततो विषमोच्चतः ॥ २१ ॥
वृषं हयं वा धावन्तं दम्यं वाऽन्यं निगृह्णतः ।
शिला-काष्ठा-ऽश्म-निर्घातान् क्षिपतो निघ्नतः परान् ॥ २२ ॥
अधीयानस्य वाऽत्युच्चैर्दूरं वा व्रजतो द्रुतम् ।
महानदीर्वा तरतो हयैर्वा सह धावतः ॥ २३ ॥
सहसोत्पततो दूरं तूर्णं वाऽपि प्रनृत्यतः ।
तथाऽन्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥ २४ ॥
विक्षते[1] वक्षसि व्याधिर्बलवान् समुदीर्यते[2] ।
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥ २५ ॥

१ विक्षते विशेषतः क्षते । २ समुदीर्यते-वर्धते ।

उरो विभज्यतेऽत्यर्थं भिद्यतेऽथ विरुज्यते ।
प्रपीड्येते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥ २६ ॥
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ।
ज्वरो व्यथा मनोदैन्यं विड्भेदाग्निवधावपि ॥ २७ ॥
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहुः ।
कासमानस्य चाभीक्ष्णं कफः सासृक् प्रवर्तते ॥ २८ ॥
स क्षती क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।

( च० चि० अ० १६ श्लो० २-६ )

म०- धनुषेत्यादि । आयस्यत इति आयासं कुर्वतो नरस्य, 'आयम्यतः' इति पाठान्तरे विस्तीर्यमाणहृदयस्य । दम्यं=दमनार्हं वृषादिकमेव बलवन्तामित्यर्थः अन्यं वा गजोष्ट्रादिकं,निगृह्णतः=विधारयतः । शिला=दीर्घशिला,अश्मा=तदितरप्रस्तर-[1] खण्डः, निर्घातोऽस्त्रविशेषः, किंवा निर्घातः शिलादीनां प्रेरणविशेषोऽतिबलसंपादितः । निघ्नतः परान्=शत्रून् ताडयतः । अधीयानस्य पठतः । महानदीस्तरत इति 'बाहुभ्याम्' इति शेषः । तूर्णं=शीघ्रम् । तथाऽन्यैःकर्माभिः क्रूरैर्मल्लयुद्धादिभिरभ्याहतस्य, क्रूरैरिति शत्रुभिरित्यन्ये । एषां कारणानां मध्ये किंचिन्निखिलदेहस्याऽऽयासकरं, किंचिदुरस एवेति बोद्धव्यम् । व्याधिरिति उरःक्षतलक्षणः अथवा व्याधिर्वायुः. 'दोषा अपि व्याधिशब्दं लभन्ते' इत्यागमादिति जेज्जटः । उरो विभज्यते भज्यत इव, भिद्यते विदार्यते द्विधा क्रियत इव; 'विदह्यत' इति पाठान्तरमसंगतं, कारणाभावात्, टीकाकारैरव्याख्यातत्वाच्च । वीर्यं=शक्तिः । बलं=मांसोपचयः । 'विड्भेदोऽग्निवधादपि' इति पाठान्तरे अग्निवधाद्धेतोर्विड्भेदो भवतीत्यर्थः, अपि शब्दात् व्याधिमहिम्ना विनाऽप्यग्निवधाद्विड्भेदो भवतीत्याहुः । दुष्टो=व्यापन्नः, तदेव विवृणोति श्याव इत्यादि । विग्रथितो=विशेषेण ग्रन्थिलः, विबद्ध इति जेज्जटः । स पुरुषः, क्षती=उरःक्षतवान्, क्षीयते धातुशोषमाप्नोति । न केवलं क्षतादेव क्षीयते किं तर्हि स्त्रीसेवादिना शुक्रौजसोः क्षयादपीत्याह–तथेत्यादि ॥ २१–२८ ॥

भा०टी०–उरःक्षतकी संप्राप्ति और निदान—जोरसे धनुष खींचना,भारी बोझा ढोना. अपने से बलवान् के साथ लड़ना, ऊँचे खाले से गिरना, व दौड़ते हुए बलवान् घोड़े या सांड अथवा हाथी ऊँट को पकड़ना, पत्थर की पटिया, लकड़ीका कुन्दा, पत्थरका

---

१ "पर्वतादिप्रस्तरखण्डः" इति पाठान्तरम् ।

ढोका, ढेलवांस को उठाकर फेंकना, शत्रुओं से लड़ना, जोर २ पढ़ना, जल्दी २ दूरतक जाना, बढ़ी हुई बड़ी नदीको हाथोंसे तैरना, घोड़े के साथ दौड़ना, एकाएक ऊपर कूदना जल्दी २ नाचना, दूसरे भी कठिन काम करना—कुश्ती लड़ना आदि। इन कार्यों से छाती में जख्म हो जाता है, बाद बलवान् रोग पैदा होते हैं। अधिक मैथुन करनेसे और रूखा सूखा कम खानेसे भी उरःक्षत होता है। छाती फूट जातीहै, या फटजाती है। दर्द होताहै। पँसुली में पीड़ा होतीहै, शरीर सूखता है और कांपता है। धीरे २ शक्ति और मोटाई, रंग, रुचि, उदराग्नि, सब कम होने लगताहै। ज्वर होताहै। शरीर में पीड़ा होतीहै। मन उदास रहता है। दस्त आते हैं। मन्दाग्नि होजाती है। खाँसनेपर बिगड़ा हुआ-श्याव वर्णका, बदबूदार, पीला, गंठीला बहुत अधिक कफ बार २ निकलता है। उरः क्षत के रोगी का सब धातु सूखजाता है। केवल उरःक्षतसे ही क्षीणता या शोषधातु नहीं होता, अधिक मैथुन से भी वीर्यऔर ओज के क्षीण होजाने पर होता है ॥ २१—२८ ॥

### अथोरःक्षतस्य पूर्वरूपम् ।

पूर्वरूपमाह—

**अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम् ॥ २९ ॥**

( च० चि० अ० २६ श्लो० १७ )

म०—अव्यक्तमित्यादि ॥ २९ ॥

भा० टी०—उरः क्षतका यदि पूरा २ सब लक्षण प्रकट न हो, जितना ही हो, वही उसका पूर्वरूप माना जाता है ॥ २९ ॥

### अथोरःक्षतक्षीणयोर्मुख्यलक्षणानि ।

क्षतक्षीणयोरसाधारणलक्षणमाह—

**उरोरुक्शोणितच्छर्दिः कासो वैशेषिकः क्षते ।**
**क्षीणे सरक्तमूत्रत्वं पार्श्व-पृष्ठ-कटी-ग्रहः ॥ ३० ॥**

( च० चि० अ० १६ श्लो० ११ )

म०—उरोरुगित्यादि । वैशेषिको=विशिष्टः कासः, स च विशेष उक्तः। दुष्टश्यावादिकफसंयुक्तत्वं; किंवा वैशेषिक उद्भूतः । क्षत इति छेदः । क्षीण इति क्षय इत्यर्थः । सरक्तमूत्रत्वमालोहितमूत्रता ॥ ३० ॥

भा० टी०—क्षत तथा क्षीण में फर्क—क्षत में छाती में पीड़ा होती है। मुंह से खून गिरता है। तथा खांसी ज्यादा आती है और खराब कफ अधिक गिरता है, किन्तु

क्षण, में पेशाब में खून गिरता है. पँसवाड़ा पीठ और कमर जकड़ी रहती तथा पीड़ा होती है ॥ ३० ॥

अथानयोः साध्यासाध्यत्वविचारः ।

तयोः साध्यलक्षणमाह—

अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।
परिसंवत्सरो याप्यः सर्वलिङ्गं तु वर्जयेत् ॥ ३१ ॥

( च० चि० अ० १६ श्लो० १९ )

म०-अल्पेत्यादि ॥ ३१ ॥

भा०टी०-यदि उरः क्षत तथा क्षीणके मन्दाग्नि नहीं है, रोगी बलवान् है, रोग नया है तो अच्छा हो जाता है । यदि एक वर्षका भी पुराना मर्ज़ है तो याप्य और पूरा२ लक्षण होने पर असाध्य होता है ॥ ३१ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चयभाषा टीकायां राजयक्ष्मादि निदानम् ।

अथ कासनिदानम् । ( Cough ) कफ ।

अथ कासस्य हेतु-सम्प्राप्ति-पूर्वकं लक्षणम् ।

क्षयरूपे कासपाठात् कासोपेक्षया च क्षयोत्पत्तेस्तदनन्तरं कासनिदानमाह—

धूमोपघाताद्रसतस्तथैव व्यायाम-रूक्षान्न-निषेवणाच्च ।
विमार्गगत्वाच्च हि भोजनस्य वेगावरोधात्क्षवथोस्तथैव ॥१॥
प्राणो ह्युदानानुगतः प्रदुष्टः स भिन्न-कांस्य-स्वनतुल्य-घोषः ।
निरेति वक्त्रात् सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः ॥२॥

( सु० उ० अ० ५२ श्लो० २ )

म०—धूमोपघातादित्यादि । धूमेन मुखनासाप्रविष्टेनोपघातो धूमोपघातः । रसत इति वातेनोर्ध्वं नीतादामरसात्, 'रजस' इति पाठान्तरे मुखनासाप्रविष्टधूलेरित्यर्थः । विमार्गगत्वं च हि भोजनस्यातिद्रुताभ्यवहारादिना, चशब्दः समुच्चये, हि पादपूरणे । वेगावरोधादिति पुरीषादेः, तेन हि वायुरूर्ध्वगः स्यात् ।

---

१ "रजसः" इति पाठान्तरम् ।

क्षवथोस्तथैवेति वेगावरोधादिति सम्बन्धः । प्राणोवायुरुदानेन दुष्टेनानुगतो वक्त्रान्निरेति । स वायुः; भिन्नकांस्यपात्रवत् हतस्वनः कास इति प्रदिष्टः । सदोषः=सकफ-पित्तः वातिक-पैत्तिकादि-भेदभिन्न इति वा । एतेनैव समान-स्थान-निदानाभ्यां हिक्का-श्वासाभ्यामस्य भेदः, नहि तत्र वातिक-पैत्तिकादिभेदेन व्यपदेश इति गदाधरः । कसति=शिरः कण्ठादूर्ध्वं गच्छति वायुरिति कासः, 'कस' गतौ इत्यस्मात्; 'कसनात् कासः'[1] (च. चि. स्था. अ. १८ ) । इति चरके पाठः, कासनं कास इति वा, "भिन्नस्वरः कासति शुष्कमेव" ( सु. उ. तं. अ. ५२ )-इति सुश्रुतदर्शनात् ॥ १ ॥ २ ॥

भा०टी०-मुह और नाकमें धुँवा के लगने से,आमरस गला तक आनेसे या अन्दर धूलके चले जाने से, अधिक परिश्रम करने,रूक्षान्न-चना जव के अधिक खाने से,भोजन के समय बोलने से, या जल्दी २ खाने से, भोजन के कुछ अंश के जिस रास्ते से सांस आती जाती है, उस रास्ते में चले जाने से ( जिसे नाथू चढ़ना या छिछनी कहते हैं ) मलमूत्र और छींक के रोकने से, प्राणवायु तथा उदानवायु दुष्ट होकर पित्त कफके साथ फूटे हुए कांसे के वर्तन की आवाज ( खनखनाहट ) की तरह मुँह से ( खों खों करता हुआ ) निकलता है, विद्वान् वैद्य लोग उसे खांसी ( कास ) कहते हैं ॥ १-२ ॥

## अथ कासभेदाः ।

संख्यामाह —

पञ्च कासाः स्मृता वात-पित्त-श्लेष्म-क्षत-क्षयैः ।
क्षयायोपेक्षिताः सर्व बलिनश्चोत्तरोत्तरम् ॥ ३ ॥

(अ० हृ० नि० अ० ३ श्लो० १७, १८)

म०-पञ्चेत्यादि । पञ्च कासा इति संख्येयनिर्देशादेव संख्यायां लब्धायां पञ्चग्रहणं जराकासस्य दोषजेष्वन्तर्भूतस्याधिकत्वनिरासार्थं, पञ्चानामपि वा क्षयकारणत्वप्रतिपादनार्थमिति । क्षयाय=धातुक्षयाय ॥ ३ ॥

भा० टी०—कास पाँच प्रकार का होता है —वात से, पित्त से, कफ से; क्षत से, क्षय से । यदि खांसी की चिकित्सा पैदा होते ही न की जाय तो बढ़ कर वह राज यक्ष्मा पैदा कर देता है या सब धातुओं का क्षय कर देता है । इन पाँचों में एक से दूसरा कड़ा होता है वात की खांसी से पित्त की, पित्त से कफ की, कफ से क्षत की और क्षत से क्षय की ॥ ३ ॥

---

१ कासते अनेन, कास शब्द कुत्सनयोः । इत्यत्र विग्रहः । इति शब्दार्थचिन्तामणिः ।

## अथ कासस्य पूर्वरूपम् ।

पूर्वरूपमाह—

पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च[1] जायते ॥ ४ ॥

(च० चि० अ० २२ श्लो० ३)

म०-पूर्वेत्यादि । भोज्यानामवरोध इत्यरुचिरभ्यवहारासामर्थ्यं वा ॥४ ॥

भा० टी०—कास का पूर्व रूप—गला में ऐसी गड़न मानो जव गेहूँ का बाल अन्दर घुसा है। गला सहराय, अरुचि हो या कवल निगलने में गला में दर्द हो ॥ ४ ॥

## अथ वातकासलक्षणम् ।

वातिककासस्वरूपमाह—

हृच्छङ्ख-मूर्धोदर-पार्श्व-शूली-क्षामाननः क्षीण-बल-स्वरौजाः ।
प्रसक्तवेगस्तु समीरणेन भिन्नस्वरः कासति शुष्कमेव ॥ ५ ॥

( सु० उ० अ० ५२ श्लो० ५ )

म०-हृदित्यादि । शङ्खो=ललाटैकदेशः । क्षामाननः=शुष्कमुखः, वातेन शोषणात् । प्रसक्तवेगः=सततकासवेगः । शुष्कमिति श्लेष्मादिनिष्ठीवनरहितम् ॥ ५ ॥

भा० टी०—वात जन्य कास के लक्षण-छाती, कनपटी, शिर, पेट, पँसुली में पीड़ा हो, मुह-चेहरा सूख जाय, खांसी सूखी आवे, कफ न निकले, गला बैठ जाय, खांसी जब आवे तो लगातार आवे, बीच में दम न मिले ॥ ५ ॥

## अथ पित्तकासस्य लक्षणम् ।

पैत्तिककासमाह—

उरोविदाह-ज्वर-वक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्तः ।
पित्तेन पीतानि वमेत्कटूनि कासेत्सपाण्डुः परिदह्यमानः ॥ ६ ॥

(सु० उ० अ० ५२ श्लो० ६)

म०-उर इत्यादि । अभ्यर्दितः=पीडितः ॥ ६ ॥

भा० टी०—पित्त जन्य कास के लक्षण-छाती जले, ज्वर हो; मुह सूखे, प्यास लगे, मुह का जायका कड़ुवा हो, पीला और कड़ुवा कफ हो, चेहरा आँख, नाखून त्वचा आदि पाण्डुवर्ण हो जाँय, गरमी मालुम हो ॥ ६ ॥

---

[1] भोज्यानामवरोधः "कवलनिगलने कण्ठव्यथा" इति भावमिश्रः ।

## अथ कफजकासलक्षणम् ।

कफजकासमाह—

प्रलिप्यमानेन मुखेन सीदन् शिरोरुजार्तः कफपूर्णदेहः ।
अभक्तरुग्-गौरव-कण्डु-युक्तः कासेद् भृशं सान्द्रकफः कफेन ॥७॥

(सु० उ० अ० ५२ श्लो० ७)

म०—प्रलिप्यमानेनेत्यादि । प्रलिप्यमानेन=श्लेष्मलिप्तेन मुखेनोपलक्षितः, सीदन्=अङ्गावसादयुक्तः । अभक्तरुगरुचिः ॥ ७ ॥

भा० टी०—कफज कास के लक्षण–मुह कफ से भरा हो, शरीर सुस्त रहे, शिर में पीड़ा हो, देह भर में कफ भरा है–ऐसा मालूम हो, अरुचि हो, शरीर भारी रहे, गला सहराय, बहुत खांसी आवे, कफ अधिक और गाढ़ा गिरे ॥ ७ ॥

## अथ क्षतजकासलक्षणम् ।

क्षतकासमाह—

अति-व्यवाय-भाराध्व-युद्धाश्व-गज-विग्रहैः ।
रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमाचरेत् ॥ ८ ॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत्सशोणितम् ।
कण्ठेन रुजताऽत्यर्थं विरुग्णेनव चोरसा ॥ ९ ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥ १० ॥
पर्वभेद-ज्वर-श्वास-तृष्णा-वैस्वर्य-पीडितः ।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात् ॥ ११ ॥

(सु० उ० अ० ५२ श्लो० १०–१३)

म०–अतिव्यवायेत्यादि । विग्रहो=विधारणं युद्धस्योपात्तत्वात् । 'निग्रह' इति पाठे स एवार्थः । ततः ष्ठीवेत् सशोणितामिति कासाभिघातेन हृदयस्य विदारणात् । कण्ठेनेत्युपलक्षणे तृतीया, एवमुरसेति । विरुग्णेनेव=भग्नेनेव, सूचीभिरिव तुद्यमानेन, शूलिना दुःखस्पर्शेन चोरसेति सम्बन्धः, दुःखस्पर्शत्वं स्पर्शासहत्वम् ।

शूलेनोपलक्षितः; तच्च पार्श्वादौ बोध्यम् । वाग्भटेनापि पठ्यते—"पार्श्वशूली" ( वा. नि. स्था. अ. ३ )—इति । भेदपीडाभितापिनेति शूलविशेषणम् । पारावत इवा-कूजन्, भवतीति शेषः ॥ ८–११ ॥

भा० टी०—क्षतज कास के लक्षण—अधिक मैथुन, अधिक बोझा ढोना, अधिक दूर तक पैदल चलना, युद्ध करना, भागते हुए घोड़ा हाथी को अपना बल लगाकर रोकना, इन कारणों से छाती में जख्म होता है, और वायु कुपित होकर खांसी पैदा कर देता है। पहले तो सिर्फ खांसी ही आती है बाद खून भी आने लगता है। गला में पीड़ा होती है। छाती में ऐसी पीड़ा होती है कि भीतर से वह दो टुकड़ा हो गई है। ऐसी पीड़ा होती है कि कोई सूई कोंच रहा है, भेद रहा है छाती पर हाथ रखने से पीड़ा होती है। पँसुली में पीड़ा होती है। सन्धियों के पोर२ में पीड़ा होती है। ज्वर, श्वास, तृष्णा, गला बठना, ( स्वर का खराब होना ) ये रोग होकर बड़ी ही तकलीफ देते हैं। जब खांसी आती है तो उस तकलीफ से रोगी कबूतर की भाँति कहँरता है ॥८–११॥

### अथ क्षयजकासस्य लक्षणम् ।

क्षयजकासमाह—

विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ।
कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ॥ १२ ॥

स गात्रशूल-ज्वर-दाह-मोहान् प्राणक्षयं चोपलभेत कासी ।
शुष्यन्विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम् ॥ १३ ॥
तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति

( सु० उ० अ० ५२ श्लो० १४–१६ )

म०—विषमेत्यादि । घृणिनां शोचतां चाहाराभावात्कुपितेन वायुनाऽग्नेरुपप्लवाद्दोषत्रयप्रकोप इति । क्षयजमिति शुक्रादिधातुक्षयजम्, न तु राजयक्ष्मजम् । त्रिदोषजेऽपि राजयक्ष्मणि कासः कफेनैव क्रियते । यदुक्तम्—"कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः"—इति । क्षयजकासस्तु त्रिदोषज इति । ननु कासादेव क्षयो जायते तत्कथं क्षयजः कासः इति ? उक्तं हि—"कासात्सञ्जायते क्षयः"—इति । उच्यते, दृष्टो हि परस्परं व्यक्तिभेदेन कार्यकारणभावो बहुशः,—

यथाऽतीसारार्शोऽग्निमान्द्यादाविति । स गात्रशूलेत्यादिश्लोकार्धस्य क्षयजकास-मध्ये पाठोऽयुक्तः प्रतिभाति, सुश्रुते क्षतजकासे पठितत्वात्; क्षयकासश्चात्र चरक-सुश्रुत-वाक्ये मेलयित्वा माधवकारेण लिखितः; उच्यते, स गात्रशूलेत्याद्यनन्तरं क्षयकासः सुश्रुतेन पठितः, तेन स गात्रशूलेत्यादिश्लोकार्धस्य परेण सम्बन्धात् क्षयकासालिङ्गत्वमिति माधवकरस्याभिप्रायः । एतच्चान्ये नानुमन्यन्ते,यतः क्षतकास-स्यावस्थायामसाध्यत्वख्यापनपरमेतद्व्याख्यातं जेज्जटेन, गयदासेनापि क्षतजका-सरूपत्वेनेति ॥ १२-१३ ॥

भा० टी०—क्षयज कांस के लक्षण-विषम और असात्म्य-मन के प्रतिकूल ( अहितकर भोजन ) से, अधिक मैथुन और मलमूत्र के वेग रोकने से, घृणा करने से, शोक से, अग्नि मन्द हो जाती है, तीनों दोष कुपित हो जाते हैं। सब धातु क्षीण होने लगते हैं और ऐसी खांसी उठती है कि सब शरीर क्षीण होने लगता है, शरीर में पीड़ा, ज्वर, दाह, मूर्च्छा; ये उपद्रव खड़े होकर प्राण नाश कर देते हैं। शरीर सूखता है, रोगी वार २ खून और पीप थूंकता रहता है। शरीर बिल्कुल दुवला हो जाता है, सिर्फ चमड़ा और हड्डी शरीर में देख पड़ता है। इसमें तीनों दोषों के लक्षण होते हैं, यह क्षयज कास अत्यन्त दुश्चिकित्स्य होता है ॥१२-१३॥

**अथैषां साध्य साध्यत्वविचारः ।**

असाध्यत्वादिलक्षणमाह—

इत्येषः क्षयजः कासः क्षीणानां देहनाशनः ।
साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः ॥ १४ ॥
नवौ कदाचित्सिध्येतामपि पादगुणान्वितौ ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः ।
त्रीन् पूर्वान्साधयेत्साध्यान्पथ्यैर्याप्यांस्तु यापयेत् ॥ १५ ॥

( सु० उ० अ० ५२ श्लोक० ६ )

इति श्रीमाधवकरविरचिते माधवनिदाने कासनिदानं समाप्तम् ।

म०—इतीत्यादि । पादगुणान्वितावििति वैद्यादिचतुष्पादसम्पन्नौ । स्थविराणां वृद्धानां; स्थविराणामित्युक्तेऽपि जराशब्दोपादानं जरानिमित्तधातुक्षयज एव कासो याप्यः, अपचारजनितदोषजस्तु साध्य इति बोधनार्थम् ॥ १४-१५ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां कासनिदानं समाप्तम्।

भा० टी०—यह क्षयजकास दुर्बल आदमी को पाकर नहीं छोड़ता-मार ही डालता है। यदि रोगी बलवान् हो तो अच्छा हो जाता है। या याप्य होता है, इसी प्रकार क्षतज कासभी दुर्बल का नहीं अच्छा होता और बल रहने पर अच्छा हो जाता है या याप्य होता है। अगर रोगी समझदार, वैद्य उत्तम, परिचारक (कम्पाउन्डर) होशियार और दवा अच्छी हुई तो दोनों क्षतज और क्षयज कास, यदि तुरत-हाल के पैदा हों तो कदाचित् अच्छे हो जाते हैं। बुढ़ापा में जो धातु क्षय होने से खांसी आती है उसे जराकास कहते हैं, वह चाहे किसी दोष से हो, जड़से नहीं अच्छी होती। अच्छी दवा और परहेज से दब जाती है, अतः वह याप्य कहलाती है, बुढ़ापा में धातुक्षयज कास ही याप्य होता है। अपचार जनित कास याप्य नहीं होता। तीन-वात, पित्त और कफ की खांसी साध्य है, उनको अच्छी तरह से दवा करनी चाहिए। और याप्य खांसी में कुछ दवा और पथ्य करता रहे, जिससे तकलीफ न हो ॥ १४-१५ ॥

इति श्रीहरिनारायणशर्म वैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां कासनिदानम् ।

## अथ हिक्का-श्वास-निदानम् ।

हिकप् ऐस्थमा

**हिक्का**= Hiccup **श्वास**=Asthma, Dyspnoeia, or Difficulties of Breathing

### अथ हिक्का-श्वासयोर्निदानानि ।

समानिदानत्वात् कासनिदानानन्तरं हिक्काश्वासावाह—

**विदाहि-गुरु-विष्टम्भि[1]-रूक्षाभिष्यन्दि-भोजनैः ।**
**शीत-पानाशन-स्थान-रजो-धूमाऽऽतपानिलैः ॥ १ ॥**

---

१-विष्टम्भि रुजापूर्वकाल्पमलप्रवृत्तिकारकं। यथा-कलायमसूरादि। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदजनकम् यथा-दधिफाणितादि।

व्यायाम–कर्म–भाराध्व–वेगाऽऽघातापतर्पणैः ।
हिक्का श्वासश्च कासश्च नृणां समुपजायते ॥ २ ॥

( सु० उ० अ० ५० श्लो० २ )

म०–विदाहीत्यादि । ननु, एतेषां प्रायस्तुल्यनिदानचिकित्सितत्वेन एकाधिकारे कथमनभिधानम् ? उच्यते, कास-श्वास-हिक्कानां निदानं समानम्, तथाऽपि कासस्य दोषभेदाद्भेदः, यथा–वातिकः, पैत्तिकः, श्लैष्मिक इत्यादि । हिक्का-श्वासौ तु कफ-वातात्मकावेव, यदाह दृढबलः–"कफ-वातात्मकावेतौ पित्तस्थानसमुद्भवौ" ( च. चि. स्था. अ. १७ ) इति । सुश्रुतोऽप्याह–"वायुः कफेनानुगतः पञ्च हिक्काः करोति हि" ( सु. उ. तं, अ. ५१ )—इति । भेदस्त्वनयोः सम्प्राप्तिभेदाद्वेगक्रियादिना च, न तु कासवद्दोषभेदेन । श्वास–कासाभ्यां हिक्कायाः स्वनतोऽपि भेदः । पित्तस्थानसमुद्भवाविति विशेषः, सुश्रुतमते क्षुद्रां न प्राप्नोति, सा हि जत्रुमूलात्प्रधावितेति पठ्यते । चरकमते तु व्यपेतां न प्राप्नोति, साऽपि जत्रुमूलादसन्ततेति पठ्यते । तस्मात् पित्तस्थानसमुद्भवाविति विशेषणं छत्रिणो गच्छन्तीति न्यायेन बोध्यम् । शीतशब्दः पानादिभिस्त्रिभिः सम्बध्यते । रजो=धूलिः, सा च धूमवन्नासादिप्रवेशात् कारणम् । व्यायाम कर्म=धनुराकर्षणादिव्यापारः, वेगाघातो=मलादिवेगविधारणम्, अपतर्पणमनशनादि । कासश्चोक्तोऽप्येकनिदानत्व प्रतिपादनार्थं पुनरभिहित इति ॥ १ ॥ २ ॥

भा०टी०—विदाहि=जलन पैदा करने वाले पदार्थ, ( जैसे–कोल्हू का पेरा ऊखका रस, मद्य, मिर्च, राई आदि) गुरु पदार्थ, रूक्ष, अभिष्यन्दि—श्लेष्म पैदा करने वाले—दही आदि के सेवनसे, ठण्डी चीज पीने से, ठण्डा भोजन करने से, ठण्डी जगह रहनेसे, नाक मुह के द्वारा अन्दर धूल और धूँवा चले जानेसे, घाम और तेज हवा में अधिक देरतक रहनेसे, परिश्रम अधिक करने से, भार ढोनेसे, मलमूत्र के वेग रोकने से, उपवास से मनुष्यों को हिक्का ( हिचकी ) श्वास ( दमा ) और कास ( खांसी ) रोग पैदा होते हैं ॥ १–२ ॥

इन तीनों रोगोंका एक निदान है, इस लिए यहां फिरसे कासका जिक्र किया गया।

तीनोंमें परस्पर भेद—

भा०टी०–श्वास और हिक्का सिर्फ वात कफसे पैदा होता है, मगर कास अलग २ तीनों दोषों से होता–है वातिक, पैत्तिक, श्लैष्मिक । श्वास हिक्का की संप्राप्ति, चिकित्सा और वेग भी अलग २ होते हैं । और दोनोंमें आवाजभी अलग होती है । हिक्का में हिक् २ और दमा में नहीं, सिर्फ सांस फूलती है ॥ १–२ ॥

### अथ हिक्कानां स्वरूपं निरुक्तिश्च ।

हिक्कानां स्वरूपं निरुक्तिं चाह—

**मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् ।**
**स घोषवानाशु हिनस्त्यसून्यतस्ततस्तु हिक्केत्यभिधीयते बुधैः ॥**

(सु० उ० अ० ५० श्लो० ३)

म०–मुहुर्मुहुरित्यादि । वायुरत्र सोदानः प्राण इत्याहुः । उदेति=ऊर्ध्वं गच्छति । सस्वन इति=हिगिति शब्दवान् । ऊर्ध्वगमनमेव विशिनष्टि–यकृदित्यादि । अत्र प्लिहेति ह्रस्वेकारश्छन्दोऽनुरोधात् । मुखादिति ल्यब्लोपे कर्मणि पञ्चमी, तेन यकृत्प्लीहान्त्राणि मुखमानीय आक्षिपन्=निःसारयन्निवेत्यर्थः । स इति वायुः । 'हिनस्त्यसून्' इति हिक्केति निरुक्तिः, पृषोदरादिना रूपसिद्धिः । हिगिति कृत्वा कायति=शब्दायते इति हिक्केति शाब्दिकाः ॥ ३ ॥

भा०टी०–हिक्का का स्वरूप और निरुक्ति—प्राण और उदान वायु हिक् हिक् आवाज के साथ ऊपर की तरफ आता है । उस समय ऐसा मालूम होता है कि प्लीहा (वरवट या तिल्ली) और आँतें मुहसे बाहर निकल रही हैं । हिक् आवाज के साथ निकलते २ वायु प्राण नाश कर देता है, इसी लिए विद्वान् लोग उसे हिक्का कहते हैं ॥ ३ ॥

### अथ हिक्कानां भेदाः सम्प्राप्तिश्च ।

तासाम्भेदं संप्राप्तिं चाह—

**अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ।**
**वायुः कफेनानुगतः पञ्च हिक्काः करोति हि ॥ ४ ॥**

(सु० उ० अ० ५० श्लो० ४)

म०–अन्नजामित्यादि । यमलैव चरके व्यपेतेति नाम्ना पठिता, अन्नपाने व्यपेते परिणते जायत इत्यतो हेतोः, अस्यां चानुक्तमपि यमलवेगत्वं सुश्रुतदर्शनाद्विज्ञेयम् । अन्नजायाः साध्यत्वेन प्राशस्त्यात्पूर्वमभिधानम् ॥ ४ ॥

भा० टी०—हिक्का पाँच प्रकार की होती है—१ अन्नजा, २ यमला, ३ क्षुद्रा, ४ गम्भीरा, और ५ महती । ये पाँचों वायुकफ से पैदा होती हैं ॥ ४ ॥

## अथ हिक्कानां पूर्वरूपाणि ।

पूर्वरूपमाह—

**कण्ठोरसोर्गुरुत्वं च वदनस्य कषायता ।**
**हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ॥ ५ ॥**

( च० चि० अ० २१ श्लो० १७ )

म०-कण्ठोरसोरित्यादि । वदनस्य कषायता वातात्, न तु कफान्माधुर्यम्, व्याधिप्रभावात् ॥ ५ ॥

भा० टी०—हिक्का का पूर्वरूप—गला और छाती भारी रहे, मुह कसैला रहे, पेट में गुड़गुड़ाहट हो ॥ ५ ॥

## अथान्नजाया लक्षणम् ।

अन्नजाया लक्षणमाह—

**पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः ।**
**हिक्कयत्यूर्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥ ६ ॥**

( सु० उ० अ० ५० श्लो० ६ )

पानान्नैरित्यादि । हिक्कयति=हिक्कां करोति ॥ ६ ॥

भा० टी०—अन्नजा के लक्षण-भोजन और पीने की चीजें एकाएकी जल्दी २ खाने से हृदय स्थित प्राण वायु एकाएकी दबकर झट ऊपर आता है और हिचकी आने लगती है । उसे वैद्य लोग अन्नजा हिक्का कहते हैं ॥ सुरती की पीक निगलने से भी हिचकी आने लगती है ॥ ६ ॥

## अथ यमलाया लक्षणम् ।

यमलामाह—

**चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्तते ।**
**कम्पयन्ती शिरोग्रीवं यमलां तां विनिर्दिशेत् ॥ ७ ॥**

( सु० उ० अ० ५० श्लो० ६ )

म०—चिरेणेत्यादि । कम्पयन्ती शिरोग्रीवमित्युपलक्षणम्, तेन चरकोक्त-प्रलाप-मूर्छा-वमि-तृष्णा-वैचित्य-जृम्भा-विप्लुताक्षत्व-मुखशोषा बोध्या इति मधुदासः ॥ ७ ॥

भा० टी०—देर देर में एक साथ दो बार हिचकी आती है, उस समय शिर और गर्दन कँप जाती है। मूर्च्छा, कम्प, तृष्णा, बेसुधी, जँभाई; आँखों में आंसू भरना, मुह सूखना, ये सब लक्षण भी होते हैं, उसका नाम यमला है ॥ ७ ॥

अथ क्षुद्राया लक्षणानि।

क्षुद्रामाह—

प्रकृष्टकालैर्या वेगैर्मन्दैः समभिवर्तते।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्प्रधाविता ॥ ८ ॥

(सु० उ० अ० ५० श्लो० ८)

म०—प्रकृष्टेत्यादि। प्रकृष्टकालैश्चिरेण ॥ जत्रु=कण्ठोरसोः सन्धिरिति जेज्जटः जत्रु=ग्रीवामूलं, तद्ग्रहणेनैव हृदय-क्लोम-कण्ठ-ग्रहणामीति गयदासः ॥८॥

भा०या०—क्षुद्रा हिक्का के लक्षण—देर में, मन्दवेग से हँसुली हड्डी के मूल से उठती है। उसे क्षुद्रिका कहते हैं ॥ ८ ॥

अथ गम्भीराया लक्षणम्।

गम्भीरामाह—

नाभिप्रवृत्ता या हिंक्का घोरा गम्भीरनादिनी।
अनेकोपद्रववती गम्भीरा नाम सा स्मृता ॥ ९ ॥

(सु० उ० अ० ५० श्लो० ९)

म०नाभीत्यादि। नाभिप्रवृत्तेति नाभितः प्रभृति संजाता, अत एवास्या गम्भीरत्वम्। अनेकोपद्रववती=तृष्णाज्वरादियुक्ता ॥ ९ ॥

भा०टी०—गम्भीरा के लक्षण—नाभि से बड़े जोर से हिचकी उठती है। उसमें आवाज तेज होती है, तृष्णा, ज्वर, मूर्च्छा आदि अनेक उपद्रव होते हैं। उसका नाम गम्भीरा है ॥ ९ ॥

अथ महत्या लक्षणम्।

महतीमाह—

मर्माण्युत्पीडयन्तीव सततं या प्रवर्तते।
महाहिक्केति सा ज्ञेया सर्वगात्रविकम्पिनी ॥ १० ॥

(सु० उ० अ० ५० श्लो० १०)

म०—मर्माणीत्यादि । मर्माणीति प्रधानानि वस्ति-हृदय-शिरांसि ॥१०॥

भा० टी०—महा हिक्का के लक्षण—हिचकी आते समय नाभि, वस्ति, हृदय, शिर-स्थानों में पीड़ा हो; सब शरीर काँप उठे, हर वक्त हिचकी आये तो उसे महती कहते हैं ॥ १० ॥

## अथ हिक्कानामसाध्यलक्षणानि ।

अवस्थायामसाध्यत्वमाह—

**आयम्यते हिक्कतो यस्य देहो दृष्टिश्चोर्ध्वं नाम्यते यस्य नित्यम् ।**
**क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ ११**

( सु० उ० अ० ५० श्लो० ११ )

म०—आयम्यत इत्यादि आयम्यते=विस्तार्यत इव । दृष्टिश्चोर्ध्वं भवतीति शेषः । नाम्यते=आञ्च्यते देह इति संबन्ध इति जेज्जट-गयदासौ । ताम्यतीति पाठान्तरे मुह्यति हिक्की । क्षौति=छिक्कति । तौ द्वाविति आयम्यत इत्यादिना नित्यमित्यन्तेनैकावस्थो हिक्की, क्षीणेत्यादिनाऽतिमात्रान्तेनापरः साध्यानामपि मध्ये एवंविधो वर्जयेदित्यर्थः । गम्भीरा-महत्योः स्वभावादेवासाध्यत्वमिति तद्युक्तौ हिक्कमानावन्त्यौ शेषपठितावसाध्यौ । पाठान्तराणि व्याख्याविशेषाश्च विस्तरभयान्न लिखिताः ॥ ११ ॥

भा० टी०—हिक्का के असाध्य लक्षण—हिचकी आते समय रोगी का शरीर फैल कर तन जाय, और आँख ऊपर टँग जाँय, तथा शरीर सकुड़ जाय, रोगी क्षीण हो, भोजन में अरुचि रहे, छींक अधिक आवे, ये दोनों अवस्थायें और गम्भीरा, महती हिक्का आसाध्य कही गई हैं। इनकी चिकित्सा न करनी चाहिये ॥ ११ ॥

## अथ प्रकारान्तरेण हिक्कानामसाध्यलक्षणानि ।

**अतिसंचितदोषस्य भक्तच्छेदकृशस्य च ।**
**व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः**
**आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम् ।**
**यमिका च प्रलापाऽऽर्ति-मोह-तृष्णा-समन्विता ॥१३॥**
**अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः ।**
**तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥ १४ ॥**

( च० चि० अ० २१ श्लो० ३९-४१ )

म०—आसां या सेति । आसां=साध्यहिक्कानां मध्ये या अतिसञ्चितदोषादेर्भवति सा हन्तीति योज्यम्, अथवा आसामिति पञ्चविधानामेव । तेन महतीप्रभृतीनां स्वरूपेण यदसाध्यत्वमुक्तं तत्प्रायिकम् । यदाह जतूकर्णः,—"आद्या दुःसाध्याः, यमिका मोहतृष्णावतः सद्यः प्राणहृत्"—इति । यमिकेत्यादि । यमिका चेतयनेन चकारात् क्षुद्रा अन्नजा वा या साध्यत्वेनोक्ता सा[1] यमलैर्वेगैर्जायमाना हन्तीति योज्यम् । सैवाक्षीणादेः साध्या भवतीत्याह—अक्षीण इत्यादि अक्षीणो=बलवान् । अदीनः=प्रसन्नमनाः । अन्ये तु अन्नजां यमलामित्यादि । सुश्रुतग्रन्थपठितां यमलां यमिकाशब्देन व्याचक्षते । तन्न, यमिका च प्रलापार्तीत्यादिश्लोकश्चरके पठितः, अत्र यमला यमिकानाम्ना न पठितैव हिक्केति । यमिकाशब्देनैवार्थगत्या व्यपेतोच्यतेति चेत्, न, तर्हि व्यपेता च प्रलापार्तीत्येवमभिदध्यात् ॥ १४ ॥

भा० टी०—जिस रोगी के दोष बहुत इकट्ठे हों, भोजन में अरुचि होने से बिना खाये शरीर कृश हो गया हो, या पहले कोई रोग हुआ हो और शरीर क्षीण हो गया हो, वृद्धावस्था हो, रोगी विषयासक्त हो इस हालतमें उत्पन्न हिक्का अच्छी नहीं होती, चाहे पाँचो हिक्का में कोई हो ॥ यमिका हिक्का प्रलाप, पीड़ा, मूर्च्छा तृष्णा संयुक्त हो तो नहीं अच्छी होती । यदि रोगी क्षीण न हो, मन प्रसन्न हो, धातु और इन्द्रियों में ताकत हो, तो यमिका अच्छी हो सकती है, नहीं तो, नहीं अच्छी होती ॥ १२-१४ ॥

## ( अथ श्वासरोगनिदानम् । )

यैरेव कारणैर्हिक्का बहुभिः सम्प्रवर्तते ।
तैरेव कारणैः श्वासो घोरो भवति देहिनाम् ॥

भा० टी०-श्वास रोगके निदान-जिन बहुत कारणों से हिक्का रोग होता है, उन्हीं कारणों से भयङ्कर श्वास रोग पैदा होता है ।

## अथ श्वासरोगस्य भेदाः ।

महोर्ध्व-च्छिन्न-तमक-क्षुद्र-भेदैस्तु पञ्चधा ।
भिद्यते स महाव्याधिः श्वास एको विशेषतः ॥ १५ ॥

( सु० उ० अ० ५१ श्लो० १ )

म०—श्वासानाह—महोर्ध्वेत्यादि । एको विशेषत इति श्वासत्वेन एक एव सन् विशेषं हेतुलिङ्गभेदं प्राप्य पञ्चधा भिद्यते, पञ्चसु श्वासत्वं वेगवदूर्ध्ववात-

---

१—मोहतृष्णा समन्विता सा यमिका यमलैर्वेगैरुत्पद्यमानाशु जीवितं हन्तीत्यर्थः ।

त्वम्, यदुक्तमन्यैः—"श्वासस्तु भस्त्रिकाध्मानसमवातोर्ध्वगामिता"—इति । संख्येयनिर्देशादेव पञ्चप्रकारत्व सिद्धे पञ्चवचनं तमकभेदस्य प्रतमकस्य पृथक्त्वसंख्यानिरासार्थम् ॥ १५ ॥

भा० टी०--श्वास रोग के भेद-जैसे भाथी से जोर से हवा निकलती है उसी प्रकार बड़े वेग से मुह या नाक से जो सांस आती है उसे श्वास कहते हैं। परन्तु भिन्न २ कारण और लक्षणों से वह एक श्वास ( जोर से सांस चलना ) महा व्याधि पाँच प्रकार का होता है—महा श्वास, ऊर्ध्व श्वास, छिन्न श्वास, तमक श्वास और क्षुद्र श्वास ॥ १५ ॥

अथैषु वातादीनां सम्बन्धः ।

( वाताधिको भवेत क्षुद्रस्तमकस्तु कफोद्भवः ।
कफ-वाताधिकश्चैव संसृष्टश्छिन्नसंज्ञकः ।
श्वासो मारुतसंसृष्टे महानूर्ध्वस्ततो मतः ॥ १ ॥ )

( सु० उ० अ० ५१ श्लो० ४ )

भा० टी०—क्षुद्र श्वास में वात अधिक रहता है. तमक में कफ, छिन्न में कफ वात और ऊर्ध्व तथा महाश्वास में वायु अधिक रहता है ॥ १ ॥

अथ श्वासरोगस्य पूर्वरूपम् ।

तस्य पूर्वरूपमाह—

प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च ।
आनाहो वक्त्रवैरस्यं शंखनिस्तोद एव च ॥ १६ ॥

भा० टी०—श्वास का पूर्वरूप-हृदय में पीड़ा हो, पेट में शूल हो, पेट फूले, आनाह—आम या पुरीष वायु से रुक कर ठीक तरह से न निकले, मुह फीका रहे, कन पुटी में पीड़ा हो ॥ १६ ॥

अथ श्वासरोगस्य सम्प्राप्तिः ।

संप्राप्तिमाह—

यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः ।
विष्वग्व्रजति संरुद्धस्तदा श्वासान् करोति सः ॥ १७ ॥

( सु० उ० अ० ५१ श्लो० ५ )

म०—यदेत्यादि । स्रोतांसीति हिक्कानिर्दिष्टप्राणो[1]दानवहानि कफःपूर्वं प्रधानं यस्य स तथा, तेनैव कफेन रुद्धो विमार्गगतिर्विमार्गगत्वेन, विष्वग्व्रजति विष्वगञ्चतीति, विष्वक्=सर्वत इत्यर्थः ॥ १७ ॥

भा० टी०—श्वास की संप्राप्ति-कफ उन स्रोतों में भर जाता है, जिससे प्राण वायु, जल और अन्नरस बहा करता है,बाद वायु को निकलने का रास्ता नहीं मिलता, तब वह वायु शरीर में चारो तरफ कुरस्ते फैलता है और सांस फूलने लगताहै ॥१७॥

## अथ महाश्वासस्य लक्षणानि ।

महाश्वासलक्षणमाह—

उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ।
उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम्[2] ॥ १८ ॥
प्रनष्ट-ज्ञान-विज्ञानस्तथा विभ्रान्तलोचनः ।
विकृताक्ष्याननो बद्ध-मूत्र-वर्चा विशीर्णवाक् ॥ १९ ॥
दीनः प्रश्वसितं चास्य दूराद्विज्ञायते भृशम् ।
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते[3] ॥ २० ॥

[ च० चि० अ० २१ श्लो० ४२०४३ ]

म०—उद्धूयमानेत्यादि । उद्धूयमानवात इति उत्=ऊर्ध्वं धूयमानो = नीयमानो वातो यस्य स तथा । शब्दवत्=सशब्दं यथा भवति, उच्चैर्दीर्घम् । संरुद्धो मत्तर्षभ इवेति स्वरविशेषज्ञापनार्थमयं दृष्टान्तः । ज्ञानं=शास्त्रं; विज्ञानं=तदर्थनिश्चयः । विभ्रान्तलोचनः=चञ्चलनेत्रः । विवृत्ते=स्तब्धे अक्ष्यानने यस्य स तथा; नेत्रस्य विभ्रान्त-स्तब्धत्वे कालभेदादिति जेज्जटः । विशीर्णवाक्=वक्तुमक्षमः, मन्दवचनो वा । दीनः=क्लान्तमनाः; हीनमिति पाठान्तरमयुक्तम्, दूराद्विज्ञायते भृशमित्यनुपपत्तेरित्याहुः ॥ १८–२० ॥

भा० टी०—महा श्वास के लक्षण—बड़े जोर से सांस ऊपर की तरफ़ चलती है सांस लेने में इतनी जोर से आवाज होती है जैसे मदमाता सांड़ डकरता है । ज्ञान (बुद्धि) खराब हो जाती है, पढ़ा लिखा भूल जाता है । आंखें चञ्चल रहती हैं, आँख और मुह स्तब्ध हो जाता है । पाखाना पेशाब कम होता है । बोल नहीं निकलती । मन गिरा रहता है । दूर तक सांस लेनेकी आवाज सुन पड़ती है । जिसे यह महा श्वास होता है वह जल्दी ही मर जाता है ॥ १८—२० ॥

---

१ 'प्राणान्नोदवहानि' इति पाठान्तरम् । २ अनिशं सर्वदा । ३ विपद्यते म्रियते ।

## अथोर्ध्वश्वासलक्षणम् ।

ऊर्ध्वश्वासलक्षणमाह—

ऊर्ध्वं श्वसिति यो दीर्घं न च प्रत्याहरत्यधः ।
श्लेष्मावृत-मुख-स्रोताः क्रुद्धगन्धवहार्दितः ॥ २१ ॥
ऊर्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः ।
प्रमुह्यन्वेदनार्तश्च शुष्कास्योऽरतिपीडितः ॥ २२ ॥

म०—ऊर्ध्वमित्यादिना । ऊर्ध्वमिति=विशेषपरं, सर्वश्वासानां तथाविधत्वात् । दीर्घमिति=दीर्घकालम् । न च प्रत्याहरत्यध इति न श्वासमधः करोति दीर्घकालमित्यर्थः श्लेष्मावृतमुखस्रोता इति श्लेष्मणा² आवृतानि मुखं स्रोतांसि च यस्य स तथा । क्रुद्धगन्धवहार्दितः=कुपितवातपीडितः, समस्तपाठे तु श्लेष्मावृतमुखस्रोतस्त्वेन क्रुद्धो यो गन्धवहस्तेनार्दितः । विपश्यंस्तु इतस्तत इति=इतस्ततो विकृतिं पश्यन् ॥ २१ ॥ २२ ॥

भा० टी०—ऊर्ध्व श्वास के लक्षण-बहुत देर तक ऊर्ध्व ( ऊपर की तरफ ) सांस आवे, नीचे न लौटे । मुंह नाक, शिर, गला, सब कफ से भरा रहे, वात के कोप अधिक रहने से देह भर में पीड़ा रहे, आँखें ऊपर टँग जांय, कभी २ इधर उधर टेढ़ी चाल से नजर फेर दे, बेहोशी सी रहे, तकलीफ बड़ी हो मुह सूख जाय या सफेद हो ज़ाय, अरति=किसी भी विषय में मन न लगे ( बेचैनी रहे ) ॥ २१–२२ ॥

## अथोर्ध्वश्वासरोगे निःश्वासानागमने हेतुः ।

"ऊर्ध्वं श्वसिति यो दीर्घं न च प्रत्याहरत्यधः" इति यदुक्तं तत्र हेतुमाह—

ऊर्ध्वश्वासे प्रकुपिते ह्यधः श्वासो निरुध्यते ।
मुह्यतस्ताम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥ २३ ॥
( च० चि० अ० २१ श्लो० ४८ )

म०—ऊर्ध्वश्वास इत्यादि । निरुध्यत इति=हृदय एवातिस्तम्भितः स्यात्, अथवा श्वासो वातः सोऽधो न वर्तत; ऊर्ध्वं श्वास=ऊर्ध्वं श्वासः । ताम्यतो=ग्लायतो मुह्यतश्चासून् प्राणान् हन्ति, नान्यथेति ॥ २३ ॥

भा० टी०–जब सांस ऊपर को चलती हो अर्थात् ऊर्ध्व श्वास होता है तो नीचे का सांस बंद हो जाता है । यदि ऊर्ध्व श्वास का रोगी ग्लानियुक्त और बेहोश रहता है,तो नहीं बचता । नहीं तो शायद बच जाता है ॥ २३ ॥

---

१ शुष्कास्य इति पाठान्तरम् । २ 'श्लेष्मावृतमुखानि स्रोतांसि' इति पाठान्तरम् ।

अथ छिन्नश्वासस्य लक्षणम् ।

छिन्नश्वासलक्षणमाह—

यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः ।
न वा श्वसिति दुःखार्तो मर्मच्छेदरुगर्दितः ॥ २४ ॥
आनाह-स्वेद-मूर्च्छा-ऽऽर्तो दह्यमानेन बस्तिना ।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥ २५ ॥
विचेताः परिशुष्काऽऽस्यो विवर्णः प्रलपन्नरः ।
छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून् ॥ २६ ॥

( च० चि० अ० २१ श्लो० ४९–५१ )

म०—यस्त्वित्यादि । विच्छिन्नं=सविच्छेदम् । सर्वप्राणेन=यावद्बलेन । न वा श्वसिति=श्वासं न लभते । मर्मच्छेदरुगर्दित इति हृदयच्छेदवेदनयेव पीडितः। दह्यमानेन बस्तिना उपलक्षितः, एतेन वातस्य पित्तानुबन्धो दर्शितः । विप्लुताक्षः=चञ्चलनेत्रोऽश्रुपूर्णचक्षुर्वा । न वा श्वसिति=न वा श्वासं लभते । रक्तैकलोचनत्वं व्याधिप्रभावात्, दोषात्तु द्वयोरपि स्यात् । विचेता=उद्विग्नचित्तः । विच्छिन्नो=विश्लिष्टसन्धिः, पीडित इत्यन्ये । विहतः' इति पाठान्तरम् ॥ २४–२६ ॥

भा० टी०—छिन्न श्वास के लक्षण-विच्छिन्न श्वास में दमा ठहर ठहर कर फूलता है। शरीर में जितनी ताकत होती है,सांस फूलनेमें सब ताकत लग जाती है। उस सांस फूलने में बड़ाही दुःख होता है। बाहर सांस न फूल कर भीतर ही सांस फूलती है। हृदय, पेड़ू और शिर में ऐसी पीड़ा होती है मानो कोई छेद रहा है। आनाह, पसीना निकलना, मूर्च्छा, ये रोग होते हैं। वस्ति ( पेड़ू ) प्रदेश में जलन होती हैं, आँखों में पानी भर आता है। शरीर क्षीण हो जाता है। एक आँख लाल हो जाती है, दोनों नहीं, रोगी बेसुध रहता है। मुंह सूखता है चेहरा और शरीर बदरंग हो जाता है। प्रलाप होता है। इस छिन्न श्वास से सब सन्धियां ढीली हो जाती हैं और फिर रोगी नहीं बचता। देर नहीं लगती ॥ २४—२६ ॥

## अथ तमकश्वासलक्षणम् । ( Asthma ) ऐस्थमा

तमकश्वासलक्षणमाह—

प्रतिलोमं यदा वायुः स्रोतांसि [1]प्रतिपद्यते ।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं [2]समुदीर्य च ॥ २७ ॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा ।
अतीव तीव्रवेगं च श्वासं प्राणप्रपीडकम् ॥ २८ ॥
प्रताम्यति स वेगेन तृष्यते सन्निरुध्यते ।
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥ २९ ॥
श्लेष्मण्यमुच्यमाने तु भृशं भवति दुःखितः ।
तस्यैव च विमोक्षान्ते मुहूर्तं लभते सुखम्[3] ॥ ३० ॥
तथाऽस्योध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम् ।
न चापि लभते निद्रां शयानः श्वासपीडितः ॥ ३१ ॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्यमुष्णं चैवाभिनन्दति ॥ ३२ ॥
उच्छ्रि[4]ताक्षो ललाटेन स्विद्यता[5] भृ[6]शमार्तिमान् ।
विशुष्काऽऽस्यो मुहुः श्वासो मुहुश्चैवावधम्यते ॥ ३३ ॥
मेघाम्बु-शीत-प्राग्वातैः श्लेष्मलैश्च विवर्धते ।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥ ३४ ॥

( च० चि० अ० २१ श्लो० ५२–६० )

**म०—प्रतिलोममित्यादि** । श्लेष्माणं समुदीर्य चेत्यनेन सामान्यसंप्राप्ति लब्धस्यापि श्लेष्मणः पुनरभिधानादिह विशेषेण कारणत्वं बोधयति । तेन रुद्धः=कफेनावृतः । घुर्घुरकं=कण्ठे घुर्घुरशब्दम् । प्राणप्रपीडकं=प्राणाधिष्ठानहृदयस्य

---

१—प्रतिपद्यते प्राप्नोति । २—समुदीर्य वर्धयित्वा ।
३—सुखमिव प्रतीयमानं न तु वस्तुतः सुखं, पीडावस्थायां तादृशसुखस्यासम्भवादित्यर्थः ।
४—उच्छ्रिताक्ष उन्नताक्षः । ५ स्विद्यता स्वेदयुक्तेन । ६ भृशमत्यर्थम् ।

पीडकम् । प्रताम्यति=तमसि प्रविशतीव । सन्निरुध्यते=निश्चेष्टो भवतीति चक्रः, जेज्जटस्तु सन्निरुध्यते श्वास इति शेषमाह । तस्यैवेति=श्लेष्मणः । सुखं=सुखमिव उद्ध्वंसते=कण्डूयते । पार्श्वे इति कर्मपदं,अवगृह्णाति=पीडयति । उष्णमभिनन्दति वात-कफारब्धत्वात् । उच्छ्रिताक्ष=उच्छूननेत्रः । ललाटेनेति उपलक्षणे तृतीया । अवधम्यते=गजारुढस्येव सर्वगात्रं चाल्यते ॥ २७–३४ ॥

भा० टी०-तमक श्वास के लक्षण—जब कि वायु शारीरिक स्रोतों में उल्टी तरह से जाता है-तब श्लेष्मा को उभाड़ कर शिर और गर्दन भली भांति घेर कर पीनस (प्रतिश्याय ) पैदा कर देता है। बाद उस कफ से घिर कर हृदय में पीडा करता हुआ श्वास पैदा कर देता है। गला घर घर करता है। उस श्वास के जोर से रोगी की आँख के सामने अँधेरा आ जाता है, और रोगी वेहोश सा हो जाता है। इतनी जोर खांसी उठती है,कि वार २ रोगी खांसते समय मूर्च्छित हो जाता है,कफ नहीं निकलता, वहुत जोर लगाने पर जब थोड़ा सा कफ गिर पड़ता है तो कुछ देर के लिए रोगी को आराम मिल जाता है। गला सहराता है। वोलने पर भी खांसी आती और सांस फूलता है, इस लिए वोला नहीं जाता। सोने पर सांस फूलने लगता और पँसुली में दर्द होता है, इस लिए नींद नहीं आती, वैठ जाने पर सांस कम फूलने से कुछ आराम मिलता है। आंखें फूल जाती हैं। माथे में पसीना आता है। वड़ी पीडा रहती है। मुह सूख जाता है। वार २ सांस फूलता है। हाथी पर चढने पर जैसा हचका लगता है वैसेहि रोगी सांस फूलते समय हचका खाता है। बर्सात में और ठण्डक तथा पुरवैया हवा और कफ कारक पदार्थों से वढ़ता है। यह तमक श्वास स्वरूपतः याप्य होता है। नवीन होने पर कदाचित् अच्छा भी हो जाता है ॥ २७—३४ ॥

## अथ प्रतमकश्वासलक्षणम् ।

तमकस्यैव पित्तानुबन्धत्वाज्ज्वरादियोगेन प्रतमकसंज्ञामाह—

**ज्वर-मूर्च्छा-परीतस्य विद्यात्प्रतमकं तु तम् ॥ ३५ ॥**

( च० चि० अ० २१ श्लो० ५६ )

**म०—ज्वरेत्यादि** । ज्वर-मूर्च्छाभ्यां परीतो ज्वरमूर्च्छापरीतः; ज्वरेण मूर्च्छा ज्वरमूर्च्छेति जेज्जटः ॥ ३५ ॥

भा० टी०—तमक श्वास में यदि ज्वर और मूर्च्छा हो तो उसे प्रतमक कहते हैं । इस में पित्त का भी सम्बन्ध रहता है ॥ ३५ ॥

अथ प्रतमकस्य हेतवो लक्षणानि च ।

एतस्यैवापरकारणं लक्षणं चाह—

उदावर्त-रजो-ऽजीर्ण-क्लिन्न-काय-निरोध-जः ।
तमसा वर्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति ।
मज्जतस्तमसीवास्य विद्यात्संतमकं तु तम् ॥ ३६ ॥

( च० चि० अ० २१ श्लो० ६०, ६१ )

म०—उदावर्तेत्यादि । उदावर्तो=रोगः, रजो=धूलिः अजीर्णमामादि, क्लिन्नं विदग्धं, काये वेगानां निरोधः कायनिरोधः' अथवा क्लिन्नकायो वृद्धनर इत्याहुः, निरोधो=वेगनिरोधः, अथवा कुयोगिनां कुम्भकादिरूपवातनिरोध इति जेज्जटः । तमसा=अन्धकारेण, मानसदोषेण वा; अत्यर्थमिति इतरकारणापेक्षया विशेषेण, वात-कफारब्धोऽपि पित्तसंबन्धाच्छीतैरुपशाम्यतीत्याहुः । संतमकः प्रतमक एवेति। अन्ये तु उदावर्तेत्यादिना प्रतमकस्य उपसर्गमाहुरिति जेज्जटः ॥ ३६ ॥

भा० टी०—उदावर्त-वायु की उल्टी गति हो जाने से, धूल से, अजीर्ण होने से, भोजन के विदग्ध ( अधपके ) होने से, अथवा बुढ़ापा से, मल मूत्र के वेग रोकने से. संतमक श्वास होता है। यह तमस-अन्धकार, तमोगुण या गरम चीजों से बढ़ता है और ठण्डक से शान्त होता है। रोगी को सामने अँधेरा देख पड़ता है। इस हालत में उसे संतमक=प्रतमक कहते हैं। किसीका मत है कि यह सब लक्षण प्रतमक का उपद्रव है ॥ ३६ ॥

अथ क्षुद्रश्वासस्य लक्षणानि ।

क्षुद्रश्वासमाह—

रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन् ॥
क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥ ३७ ॥
हिनस्ति न स गात्राणि न च दुःखो यथेतरे ।
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥ ३८ ॥
नेन्द्रियाणां व्यथा नापि कांचिदापादयेद्रुजम् ।
स साध्य उक्तो—

( च० चि० अ० २१ श्लो० ६२ ६३ )

अथ मद्यस्य स्वभाववर्णनम् ।

ननु विषस्य ये गुणास्ते चेन्मद्येऽपि सन्ति, तर्हि विषवन्मद्यमनुपयोज्यं प्रसज्येत ? अत आह—

किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम् ॥ २ ॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या हिनस्त्यसून् ।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ ३ ॥

( च० चि० अ० १२ श्लो० ५७, ५८ )

म०—किन्त्वित्यादि । यथैवान्नमिति देहधारकस्वभावम्, तदेवायुक्तियुक्तमविधियुक्तं रोगाय; तस्मादहितमपि विशिष्टविधिनोपयुक्तं हितम्; हितमप्यविधिनोपयुक्तमनर्थाय भवतीति । अत्रैव दृष्टान्तमाह—प्राणा इत्यादि । तदयुक्त्येति अतिमात्रत्वादिना विसूचयादिकं कृत्वा मारयतीत्यर्थः । युक्तियुक्तमिति यथा चरकरसायनप्रयोगे उक्तम्,—"द्वौ यवावत्र हेम्नस्तु तिलं दद्याद्विषस्य च ( च. चि. स्था. अ. १ )"–इति । अत्र तिलमिति तिलप्रमाणम् ॥ २–३ ॥

भा० टी०—किन्तु मद्यपान स्वभावतः अन्न के समान देह रक्षक है । अविधि से पीने से रोग पैदा करता है और विधि पूर्वक पीने से अमृत के समान गुणदायक होता है । जैसे अन्न प्राणियों का प्राणरक्षक है परन्तु वही अधिक खाने से हैजा आदि रोग उत्पन्न कर मार डालता है । विष से मौत होती है,मगर शुद्ध और विधि पूर्वक उसका सेवन हितकारी होता है, और लाभकारी भी वस्तु विना विधि के मनमानी सेवन से नुकसान पहुँचाता है ॥ २–३ ॥

अथ विधिनोपयुक्तस्य मद्यस्य गुणाः ।

विधिनोपयुक्तस्य फलमाह—

विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ॥ ४ ॥

( च० चि० अ० १२ श्लो० २५ )

स्निग्धैस्तैदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ।
भवेदायुःप्रकर्षाय बलायोपचयाय च ॥ ५ ॥

---

१—अन्नैरोदनसूपादिभिः । २ भक्ष्यैर्मोदकमण्डकादिभिः । यदुक्तं भावप्रकाशे—"भोज्यमोदनसूपादिर्भक्ष्यमोदकमण्डकम्"

काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च ।
विधिवत् सेव्यमाने तु मद्ये संन्निहिता गुणाः ॥ ६ ॥

( सु०.उ० अ० ४७ श्लो० ५-६ )

म०-विधिनेत्यादि । काल इति नित्यगे चावस्थिके च, तद्यथा—ग्रीष्मे शीत-मधुरं=माध्वीकादि, शीते उष्ण-तीक्ष्णम्=गौडिक-पैष्टिकादि, तथा वाते स्निग्धादि, एवं वयस्युदाहार्यम् । हितैरन्नैरिति वक्ष्यमाणास्निग्धादिभिर्मद्यविपरीतगुणैः । स्निग्धैरित्युपलक्षणम्, तेनान्यैरपि मद्यविपरीतगुणैरिति बोद्धव्यम् । यदुक्तं सुश्रुतेन-"मद्यमम्लं तथा तीक्ष्णं सूक्ष्मं विशदमेव च । रूक्षमाशुकरं चैव व्यवायि च विकाशि च-" ( सु. उ. त. अ. ४७ ) इति । अम्लरसत्वं चास्योद्भूतरसत्वे[2]-नोक्तम्, यदुक्तमन्यत्र-"सर्वेषामम्लजातीनां मद्यं मूर्ध्नि व्यवस्थितम्"-इति । मूर्ध्नि व्यवस्थितमुत्कृष्टम् । अन्येऽप्यत्र रसाः सन्ति।यदाह भोजः—"मैरेयं मादिरा सीधु चतुर्थं मधु चोच्यते । एकैकं षड्रसं तत्र रसतो मद्यमीरितम्"-इति । अन्न—भक्ष्य-शब्दयोरुपादानेन प्रायो लेह्यं द्रवान्तरपानं च मद्यपानोचितं न भवतीति दर्शयति । अन्न-भक्ष्याभ्यां लब्धेऽपि मांसे, मांसग्रहणं विशेषेण हितत्वोपदर्शनार्थम् । बलं=शक्तिः, उपचयः=स्थौल्यम् । अपरमपि विधिसेव्यगुणमाह—काम्यतेत्यादि । काम्यता=कमनीयमूर्तिता, मनसस्तुष्टिः=सन्तोषः । काम्यता मनस इति कमनीयवस्तुनि मनोवृत्तिः,तुष्टिश्च मनस एवेति योज्यम् । तेज=उत्साहः । विक्रमः= पराभिभवार्थं बलवती शरीरचेष्टा ॥ ४—६ ॥

भा० टी०-विधि पूर्वक मद्यपान के गुण-विधि पूर्वक, मात्रासे, समय पर, हितकर अन्न के साथ, बल के अनुसार, जितना सह सके, खुश तबियत में जो मनुष्य मद्य पीता है उसे अमृत के समान मद्य गुणकारी होता है । स्निग्धतर अन्न, मांस, भक्ष्य=लड्डू आदि के साथ मद्य पीने से आयु, बल, शरीर की वृद्धि होती है। काम्यता-शरीर सुन्दर होता है । तबियत खुश रहती है । तेज-उत्साह बढ़ता है, और विक्रम-बहादुरी होती है ॥ ४-६ ॥

## अथ प्रथममदस्य लक्षणम् ।

उक्तविधिविपर्ययेण सेव्यमानं मद्यं मदात्ययाय संपद्यते,स च त्रिविधो भवति-पूर्वो मध्यमोऽन्तिमश्चेति; तेषां क्रमेण लक्षणमाह—

---

१ सन्निहिता वर्तमानाः । २ उद्भूतरसत्वेन व्यक्तरसत्वेन ।

**बुद्धि-स्मृति-प्रीति-करः सुखश्च पानाऽन्न-निद्रा-रति-वर्धनश्च ।**
**संपाठ-गीत-स्वर-वर्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि ॥ ७ ॥**

म०—बुद्धीत्यादि । बुद्धिरनुभवः,स्मृतिरनुभूतार्थानुसन्धानम् । पानान्ननिद्रारतिवर्धनश्चेति पानादिषु रतिरनुरागस्तद्वर्धनः । संपाठः=सम्यक् पाठः । गयदासस्तु—'संपाठ्य'—इति पठित्वा गीत—नृत्य—वाद्यानि मिलितानि संपाठ्यमुच्यते, गीतं तु केवलमेवेति व्याचष्टे । स्वरो=ध्वनिः । प्रोक्तोऽतिरम्य इति मनोविकारकारित्वेऽपि तदात्वेन न दुःखावहत्वात्, अत एव सुश्रुतेन मानसविकारेषु हर्षः पठितः ॥ ७ ॥

भा०टी०—विधि पूर्वक मद्यपान न करने से मदात्यय ( नशा ) होता है । उनमें पहले मदात्ययका वर्णन किया जाता है-जितने मद्य पीने से बुद्धि, स्मरण शक्ति, (याद दाश्त) दोस्ती सुख (आनन्द) खाना, पीना, सोना बोलना, पढ़ना, गाना वजाना आदि काम जल्दी और आनन्द के साथ होते रहे, और मौज़ रहे, तो यह मदात्यय ( नशा ) अच्छा है । यह पहला मदात्यय है ॥ ७ ॥

### अथ द्वितीयमदस्य लक्षणम् ।

द्वितीयमदमाह—

**अव्यक्तबुद्धि—स्मृति-वाग्—विचेष्टःसोन्मत्त—लीलाऽऽकृतिरप्रशान्तः।**
**आलस्य—निद्राऽभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन ॥ ८॥**

म०—अव्यक्तत्यादि । विचेष्टो=विरुद्धचेष्टः । उन्मत्तस्य लीलाकृतिभ्यां सह वर्तते इति सोन्मत्तलीलाकृति=उन्मत्तप्राय इत्यर्थः । अप्रशान्तः=प्रचण्डः ॥ ८ ॥

भा०टी०—बुद्धि ठिकाने न रहे, याददाश्त न रहे, ठीक बातचीत न करे, पागल की तरहसूरत हो जाय और पागल की तरह काम करे, शान्त न रहे, उपद्रव मचावे, वार २ आलस्य और निद्रा से पीड़ित हो, यह मध्य मदात्यय है ॥ ८ ॥

### अथ तृतीयमदस्य लक्षणम् ।

तृतीयमदमाह—

**गच्छेदगम्यान्न गुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसंज्ञः ।**
**ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः ॥ ९ ॥**

म०—गच्छेदित्यादि । ननु चरके द्वितीय-तृतीययोर्मध्ये मदान्तरं पठितम्, यदाह—"मध्यमं मदमुत्क्रम्य [1]मदमप्राप्य [2]चोत्तमम् । न किंचिदशुभं कुर्युनर्रा राजस-तामसाः ॥ को मदं तादृशं गच्छेदुन्मादमिव चापरम् ( च. चि. स्था. अ. २४ )"—इतिः तत् कुतोऽत्र न पठितम् ? उच्यते,-द्वितीयमदान्ते तृतीयमदस्य पूर्वावस्थैवातिनिन्दनीया, सुतरां तृतीयो मद इति प्रतिपादनार्थं तत्पठितम्, न तु तयोः परमार्थतोऽन्तराले पृथङ् मदान्तरमस्ति, यथा—"कुम्भ-मीन-द्वयोर्मध्ये यदा चरति चन्द्रमाः । नाहरेत्तृण-काष्ठानि न गच्छेद्दक्षिणां दिशम् ॥" इति । अत्र हि कुम्भस्य शेषांशो मीनस्य प्रथमांश एतद्द्वयं मध्यशब्देनोच्यत इत्याहुर्जेज्जटादयः । हरिचन्द्रव्याख्यानं तु विस्तरत्वान्न लिखितम् । अगम्यान् गुरुदारादीन् दुष्टयानादींश्च । नष्टसंज्ञ इति संज्ञानामोल्लेखेन ज्ञानम्, तन्नष्टं यस्य स तथा । गुह्यानि=गोप्यानि । अस्वतन्त्रो=मदपरवशः ॥ ९ ॥

भा० टी०—तृतीय मद के लक्षण—अगम्य—गुरुपत्नी आदि गमन करे, या जहां न जाना चाहिए वहां जाये, आगे, बड़ों को न माने, जो चीज या जहां न खाना चाहिए वह चीज और वहां खाये, होश न रहे, मन की सब गुप्त बातें कह दे. यह तीसरा मद है । इसमें आदमी अपने होश में नहीं रहता, नशा के अधीन रहता है ॥९॥

### अथ चतुर्थमदस्य लक्षणम् ।

चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः ।
कार्याकार्यविभागज्ञो मृतादप्यपरो मृतः ॥ १० ॥
को मदं तादृशं गच्छेदुन्मादमिव चापरम् ।
बहुदोषमिवामूढः कान्तारं स्ववशः कृती ॥ ११ ॥

म०—चतुर्थेत्वित्यादि । कार्याकार्यविभागज्ञः कार्यमकार्यमिति बुद्ध्या जानाति । 'कार्याकार्याविभागज्ञः' इति पाठे कार्याकार्यविभागयोरज्ञ इत्यर्थः । मृतादप्यपरो मृत इति मृतमपेक्ष्यापरोऽयं मृत इव, अत्यन्ताज्ञानसाधर्म्यात् । 'अवर' इति पाठान्तरे मृतादप्यधम इत्यर्थः, तथाविधावस्थायाः स्वयं कृतत्वात् । क इत्यादि । कः कृती=कुशलः, [3]सुकृती वा, कृतकृत्यो वा; स्ववशोऽपराधीनः, तादृशमुक्तप्रकारेण निन्दितं मदं, गच्छेत्=प्राप्नुयात्, न कश्चिदेवंविधं प्राप्नुयादित्यर्थः ।

---

१—उत्क्रम्य अतिक्रम्य, उत्तमं तृतीयमदोत्तरार्धं । अशुभं न कुर्युरपि तु कुर्युरेवेत्यर्थः ।

२ चोत्तरमिति पाठान्तरम् । ३—सुकृती पुण्यशीलः । कृतकृत्यः कृतार्थः ।

कमिवेत्याह—बहुदोषमिवामूढः कान्तारामिति बहुदोषं=हिंस्रादियुक्तं, कान्तारं =दूरशून्यमध्वानम् । यदुक्तं चरके-"गच्छेदध्वानमस्वन्तं बहुदोषमिवाऽध्वगः" ( च. चि. स्था. अ. २४ ) इति, एवं विदेहेऽपि पठितामिति । अत्रास्वन्तमशोभमानमनिष्टफलत्वेन । ननु,चरक-विदेह-वाग्भ-टादिभिश्चतुर्थो मदो न पठितस्तत्कथं सुश्रुतेन पठितः ? उच्यते चरके या द्वितीयतृतीययोरन्तरालावस्था पठिता, सैव सुश्रुतेन तृतीयो मद इति कृत्वा पठितः, यस्तु चरके तृतीयः स च सुश्रुते चतुर्थः पठित इत्यविरोधः । वस्तुगत्या तु त्रय एव मदा इत्युपपादितम् । ननु, किंकारणमेतत्त्रैविध्यमिति चेत्?उच्यते,मद्यं हि वह्नितुल्यम् यथा ह्यग्निः सुवर्णानामुत्तम-मध्यमा-ऽधमानामभिव्यञ्जकस्तथा मद्यमपि प्राणिनां सत्त्व-रजस्-तमो-भूयिष्ठानां क्रमेणाभिव्यञ्जकमिति । तथाहि चरकः—"प्रधाना-धम-मध्यानां [1]रुक्माणां व्यक्तिदर्शकः । यथाऽग्निरेव सत्त्वाद्यैर्मद्यं प्रकृतिदर्शकम्"—इति ( च. च. स्था. अ. २४ ) । तस्मात् प्रथम-द्वितीय-तृतीय-मदाः सत्त्व-रजस्-तमो-भूयिष्ठानां क्रमेण भवन्तीत्यर्थः ॥ १० ॥ ११ ॥

भा० टी०—चौथे मद में आदमी एक दम बेसुध हो जाता है, बेवकूफ बन जाता है। कटे हुए पेड़ की तरह जमीन में पड़ा रहता है। जो काम नहीं करना चाहिए उसे ही करना अच्छा समझता है। दूसरा मुर्दा ही उसे समझना चाहिए। कोई होशियार तो इतना मद्य न पीयेगा जिससे कि पागल सी दशा हो जाय। 'जैसे चतुर स्वतन्त्र मनुष्य जंगल में, जहां सूनसान हो, रास्ता न जान पड़े, बाघ भेड़िया वगैरह शिकारी जानवर रहते हों, नहीं जाता ॥ १०–११ ॥

## अथावैधमद्यपानस्य विकारान्तरकर्तृत्वम् ।

अविधिमद्यपानस्य विकारान्तरहेतुत्वमाह—

**निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम् ।**
**आपादयेत्कष्टतमान्विकारानापादयेच्चापि शरीरभेदम् ॥ १२ ॥**

( सु॰ उ० अ० ४७ श्लो०-१० )

म०–निर्भक्तमित्यादि । ननु, अयमर्थः स्निग्धैस्तदन्नैरित्यादिना यदुक्तं तद्विपर्ययेणैव लब्धः, तत्कथं पुनरुच्यते ? नैवम्, पूर्वं मद्यपानगुणाभिधानार्थमुक्तम्, इदं तु कृच्छ्रतमव्याधिकर्तृत्वाभिधानार्थमिति भेदः । [2]यत्परः शब्दः स शब्दार्थ

---

१–रुक्माणां सुवर्णानाम् ।

२–यत्पर इति–यदभिप्रायेण कथितः शब्दः स शब्दार्थः । स्निग्धैरित्यादिना यदुक्तं तद्विपर्ययेण न कृच्छ्रतमव्याधिकर्तृत्वमायाति इति पुनरुक्तमियर्थः ।

इत्यभिप्रायः । कष्टतमान्विकारानिति वक्ष्यमाणपानात्ययादीन् । भेदं=विनाशं शरीरस्य ॥ १२ ॥

भा० टी०—जो लोग विना भोजन के अकेल ही मद्यपान नित्य किया करते हैं उनके अनेक कष्टसाध्य व्याधियाँ पैदा हो जाती हैं, और शरीर नष्ट हो जाता है ॥१२॥

अथ कीदृशानां जनानां मद्यपानं रोगोत्पादकम् ?

अन्नसहितस्यापि मद्यस्य क्रुद्धत्वादिकारणसहितस्य विकारकारित्वप्रदर्शनार्थमाह—

क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ।
व्यायाम-भाराध्व-परिक्षतेन वेगावरोधाभिहतेन चापि ॥ १३ ॥
अत्यम्बुभक्षावततोदरेण साजीर्णभुक्तेन तथाऽबलेन ।
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान् ॥१४॥

( सु० उ० अ० ४७ श्लो० ११, १३ )

म०-क्रुद्धेनेत्यादि । परिक्षतेन=क्षीणेन । अवततं=व्याप्तम् । विविधान् विकारान् पानात्ययादीनिति ॥ १३-१४ ॥

भा० टी०—क्रोध भय, प्यास, शोक, भूख, व्यायाम,-भार और रास्ता चलने से क्षीणता हो, पाखाना पेशाब लगा हो, खूब खाने पीने से पेट फूला हो, अजीर्ण निर्बलता; गरमी से व्याकुलता हो ऐसी हालत में मद्य पीने से चाहे भोजन के साथ ही क्यों न पीया गया हो, आगे कहे जाने वाले पानात्यय आदि अनेक रोग पैदा हो जाते हैं ॥ १३-१४ ॥

अथ तेषां नामतो विवरणम् ।

तानेव विवृणोति—

पानात्ययं परमदं पानाजीर्णमथापि वा ।
पानविभ्रममुग्रं च तेषां वक्ष्यामि लक्षणम् ॥ १५ ॥

म०-पानात्ययमित्यादि । ननु, अयमर्थः 'आपादयेत्कष्टतमान्विकारान्'-इत्यनेनैवोक्तत्वात् कथं पुनरुक्तः ? उच्यते, पूर्वेण कष्टतमविकारकारित्वमुक्तम्, अनेन तु नानाविधविकारकारित्वमिति भेदः ॥ १५ ॥

भा० टी०—वे राग हैं–पानात्यय, परमद, पानाजीर्ण, पानविभ्रम, इनका लक्षण आगे कहा जायगा ॥ १५ ॥

अथ वातिकमदात्ययस्य लक्षणम् ।

तेषामुद्दिष्टानां लक्षणानि, तत्रादौ वातमदात्ययमाह—

हिक्का–श्वास–शिरःकम्प–पार्श्वशूल–प्रजागरैः ।
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥ १६ ॥

( च० चि० अ० १२ श्लो० ८६ )

म०–हिक्केत्यादि । प्रजागरो=निद्राविच्छेदः । वातप्रायमित्यनेन सर्वे मदात्ययास्त्रिदोषजा उद्भूतत्वेन व्यपदेश इति चरके दर्शितम् । यदाह–"ये विषस्य गुणाः प्रोक्ताः सर्वदोषप्रकोपणाः"—इत्यारभ्य, यावत् "सर्वं मदात्ययं विद्यात् त्रिदोषम्" ( च. चि. स्था. अ. २४ )-इति एवं चरकसंवादात्सुश्रुतेऽपि बोध्यम् ॥ १६ ॥

भा०टी०-सभी मदात्ययों में त्रिदोष रहता है, परन्तु उनमें जो दोष अधिक रहते हैं उनका अलग २ लक्षण बतलाया जायगा। वातिक मदात्यय का लक्षण— हिचकी, श्वास शिरकाँपना, पँसुली में पीड़ा होना, नींद न आना, प्रलाप होना। यह वातप्रधान मदात्यय का लक्षण है ॥ १६ ॥

अथ पैत्तिकमदात्ययस्य लक्षणम् ।

पैत्तिकमाह—

तृष्णा–दाह–ज्वर–स्वेद–मोहा-ऽतीसार–विभ्रमैः ।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥ १७ ॥

( च० चि० अ० १२ श्लो० ६२ )

म०–विभ्रमो=भ्रमः । हरितवर्णस्येत्यनेन हरितवर्णताऽपि लक्षणम् ॥ १७ ॥

भा० टी०—पैत्तिक मदात्यय का लक्षण-तृष्णा, दाह, ज्वर, पसीना, मूर्च्छा, पतले दस्त, विभ्रम, सब चीजों का उल्टा ज्ञान होना; शरीर और चेहरा हरा रंग का हो जाय, यह पित्तप्रधान मदात्यय का लक्षण है ॥ १७ ॥

अथ श्लैष्मिकमदात्ययस्य लक्षणम् ।

छर्द्यरोचक-हृल्लास-तन्द्रा-स्तैमित्य-गौरवैः ।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥ १८ ॥

( च० चि० अ० १२ श्लो० ६५ )

म०-छर्द्यरोचकेत्यादि ॥ १८ ॥

भा० टी०—क्षय, अरुचि, तन्द्रा, निश्चलता, गौरव, जाड़ा लगना । इन लक्षणों से कफप्राय मदात्यय समझना चाहिये ॥ १८ ॥

अथ सान्निपातिकमदात्ययस्य लक्षणम् ।

ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्ययः ॥

भा० टी०—तीनों दोषों के लक्षण मिलने से त्रिदोषज मदात्यय समझना चाहिए ॥

अथ परमदस्य लक्षणानि ।

परमदमाह—

श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसाऽऽस्यता च
विण्-मूत्र-सक्तिरथ तन्द्रिररोचकश्च ।
लिङ्गं परस्य च मदस्य वदन्ति तज्ज्ञा-
स्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः ॥ १९ ॥

( सु० उ० अ० ४७ श्लो० १४, )

म०-श्लेष्मोच्छ्रय इत्यादि । श्लेष्मोच्छ्रयश्चात्र नासास्रावादिना ज्ञेयः । सक्तिः=संगः, अप्रवृत्तिरिति यावत् । तन्द्रिस्तन्द्रा । परस्य मदस्येति=परमदस्य; छन्दोऽनुरोधादसमासनिर्देशः ॥ १९ ॥

भा० टी०—परमद के लक्षण-कफ अधिक हो जाय (मुह और नाकसे कफ अधिक निकले ) शरीर भारी रहे, मुह फीका रहे, पाखाना पेशाव न हो, तन्द्रा और अरोचक हो, प्यास लगे, शिर में पीड़ा हो, जोड़ों में दर्द ( फूटन ) हो ये सब परमद मदात्यय के लक्षण कहे गये हैं ॥ १९ ॥

## अथ पानाजीर्णस्य लक्षणानि ।

पानाजीर्णमाह—

आध्मानमुग्रमथ चोद्गिरणं विदाहः
पानेऽजरां समुपगच्छति लक्षणानि ।

( सु० उ० अ० ४७ श्लो० १४ )

म०—आध्मानमित्यादि । उद्गिरणं=वान्तिः, उद्गारो वा । पाने मद्ये, अजरामजीर्णमुपगच्छति=अपक्वत्वमुपगच्छतीति पानाजीर्णविकार इत्यर्थः ॥—

भा० टी० पानाजीर्ण में पेट बहुत फूला रहता है, डकारें आती हैं। कय होती है। जलन होती है॥

## अथ पानविभ्रमस्य लक्षणानि ।

पानविभ्रममाह—

हृद्-गात्र-तोद-कफसंस्रव-कण्ठधूमा,
मूर्च्छा-वमि-ज्वर-शिरोरुजन-प्रदाहाः ॥ २० ॥
द्वेषः सुरा-न्न-विकृतेष्वपि तेषु तेषु
तं पानविभ्रममुशन्त्यखिलेन[1] धीराः ।

( सु० उ० अ० ४७ श्लो० १५— )

म०—हृदित्यादि । कण्ठधूमः=कण्ठाद्धूमनिर्गमवत्पीडा । शिरोरुजनं=शिरः शूलम् । सुरान्नविकृतेष्विति सुराविकृतेषु, अन्नविकृतेषु च भावे क्तः । तेषु तेष्विति नानाविकारेषु सुरा-मैरेय-पिष्टक-लड्डुकादिषु । उशन्ति=इच्छन्ति । एते च परमदादयस्त्रयो न चरके पठिताः, सन्निपातजेऽन्तर्भूतत्वात्; सुश्रुतेन तूक्तत्रिदोषजमदात्ययात्पृथगेते पठिताः, विकृतया पूर्वलक्षणवैलक्षण्याभिधानार्थमित्याहुः ॥ २० ॥

भा० टी०—पानविभ्रम के लक्षण—सब शरीर में, विशेष कर हृदय में सुई चुभोने ऐसी पीड़ा हो, कफ निकले, गला में ऐसी पीड़ा जैसे धूँवा निकलता हो, मूर्च्छा,कय, ज्वर, शिर में पीड़ा,जलन, किसी प्रकार के मद्य और भोजन में रुचि न हो,ऐसे लक्षणों को देख कर वैद्य लोग हर तरह से पानविभ्रम मदात्यय बतलाते हैं॥ २०॥

---

1 अखिलेन सर्वतोभावेन, धीरा विद्वांसो वैद्याः ।

## अथ मदात्ययस्यासाध्यलक्षणानि ।

असाध्यलक्षणमाह—

हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमपि पानहतं त्यजेत्तु ॥ २१ ॥
जिह्वौष्ठदन्तमसितं त्वथवाऽपि नीलं
पीते च यस्य नयने रुधिरप्रभे वा ।

( सु० उ० अ० ४७ श्लो० १६ )

म०—हीनेत्यादि । हीनोत्तरौष्ठं=प्रलम्बमानोपरितनौष्ठम् । अतिशीतं बहिः, अमन्ददाहमभ्यन्तरे, तैलप्रभास्यं=तैलाक्तमुखमिव ॥ २१ ॥

भा० टी०—मदात्यय के असाध्य लक्षण-पानात्यय रोग में यदि ऊपर का ओठ लटक जाय, बाहर जाड़ा मालूम हो और शरीर के अन्दर बहुत गर्मी जान पड़े, विना तेल लगाये मुह चिकना मालूम हो, जीभ दाँत और ओठ काले या नीले हो गये हों, आँखें पीली या लाल हो गई हों तो वह असाध्य होता है । ऐसी हालत में चिकित्सा न करे ॥ २१ ॥

## अथ मदात्ययरोगस्योपद्रवाः ।

उपद्रवानाह—

हिक्का—ज्वरौ वमथु—वेपथु-पार्श्वशूलाः ।
कास-भ्रमावपि च पानहतं भजन्ते ॥ २२ ॥

( सु० उ० अ० ४७ श्लो० १७ )

इति श्रीमाधवकरविरचिते माधवनिदाने पानात्यय-परमद-पानाजीर्ण-पान-विभ्रम-निदानं समाप्तम् ।

म०—हिक्केत्यादि । एतैः कृच्छ्रसाध्यं भवति नत्वसाध्यम्, असाध्यलक्षणेभ्यः पृथक्पाठादिति जेज्जटः । ध्वंसक—विक्षेपकाख्यौ मद्यविकारौ चरके पृथक् पठितौ; तद्यथा—"विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते । ध्वंसो विक्षेपकश्चैव रोगस्तस्योपजायते ॥ श्लेष्मप्रसेकः कण्ठा-ऽऽस्य-शोषः शब्दासहिष्णुता । तन्द्रा-निद्राऽभियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥ हृत्—कण्ठ—रोधः सम्मोहश्छर्दिरङ्गरुजा ज्वरः । तृष्णा कासः शिरः शूलमेतद्विक्षेपलक्षणम् ॥ (च. चि. स्था. अ. २४)"—

इति । तौ च सुश्रुतेन "विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते । तस्य पानात्ययोद्दिष्टा विकाराः सम्भवन्ति हि" ( सु. उ. त. अ. ४७ )–इत्यनेन संगृहीतौ बोद्धव्यौ । न वा चिकित्साभेदस्तयोरुक्तः, यतश्चरक एवोक्तवान्–"तयोः कर्म चिकित्सा च वातिके यन्मदात्यये" ( च. चि. स्था. अ. २४ )–इति ॥ २२ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां पानात्यय-परमद-पानाजीर्ण-पानविभ्रम-निदानं समाप्तम् ।

भा० टी०—पानात्यय के उपद्रव–हिक्का, ज्वर, कय, कम्प, पँसुली में पीड़ा' खाँसी' चक्कर, ये रोग पानात्यय में उपद्रव रूप से पैदा हो जाते हैं ॥ २२ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां पानात्ययादिनिदानम् ।

## दाहनिदानम् ।

### अथ मद्यजदाहस्य लक्षणम् ।

मदात्ययेऽपि दाहो भवत्यतः सप्तप्रकारं दाहमाह, तत्र मद्यजमाह–

त्वचं प्राप्तः स पानोष्मा पित्त-रक्ता-ऽभिमूर्च्छितः ।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥१॥ ( सु॰ उ॰ अ॰ ४७ श्लो॰ २५)

म०—त्वचमित्यादि । पानोष्मा=मद्यपानकुपितपित्तस्यौष्ण्यम्, समानोष्मेति पाठान्तरमयुक्तम्, सुश्रुते पानात्यये श्लोकस्यास्य पाठात् । पित्तजोऽप्ययं हेतुभेदात्पृथक् पठितः ॥ १ ॥

भा० टी०—मद्यपान से उत्पन्न दाह का लक्षण–अधिक मद्यपान करने से कुपित पित्त की गरमी खून भर में व्याप्त होकर ऊपर त्वचा तक आ जाती है, फिर बड़ी तेज जलन मालुम होती है । इसमें पित्तकी चिकित्सा करनी चाहिए ॥ १ ॥

### अथ रक्तजदाहस्य लक्षणम् ।

रक्तजमाह––

कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम् ।
स उष्यते तृष्यते च ताम्राभस्ताम्रलोचनः ॥ २ ॥
लोहगन्धाङ्गवदनो वह्निनेवावकीर्यते[1] । ( सु० उ० अ० ४७ श्लो० २७ )

---
1 "शरीरोपरि वह्निः प्रक्षिप्यत इव" इति भावमिश्रः ।

म०—कृत्स्नेत्यादि । स उष्यते=समीपस्थेनेव वह्निना तप्यते, 'संचूष्यत' इति पाठान्तरे आचूषणवद्वेदनामनुभवति। ताम्राभ इति गात्रे । लोहगन्धाङ्गवदन इति लोहस्येव गन्धोऽङ्गे वदने च यस्य स तथा ॥ २ ॥—

भा० टी०—रक्तजदाह के लक्षण-खून बिगाड़ने वाली चीजों के अधिक सेवन से खून खराब होकर सब शरीर में फैलकर दाह करता है। ऐसा दाह होता है कि रोगी को मालुम होता है कि मेरे चारो तरफ आग जल रही है, शरीर को कोई चूस रहा है। शरीर और आँख का रंग तामा के समान लाल हो जाता है। शरीर और मुह में लोहाइन बदबू आती है ॥ २ ॥

## अथ पित्तजदाहस्य लक्षणम् ।

पित्तजमाह—

पित्तज्वरसमः पित्तात्स चाप्यस्य विधिः स्मृतः ॥ ३ ॥

( सु० उ० अ० ४७ श्लो० २८ )

म०—पित्तेत्यादि । पित्तज्वरसमः=पित्तज्वरलिङ्गयुक्तः, पित्तज्वरे त्वामाशयदुष्ट्यादयोऽधिका इति भेदः । स चाप्यस्य विधिरिति पित्तज्वरचिकित्सा ॥ ३ ॥

भा० टी०—पित्त के अधिक बढ़ जाने से पित्तजदाह होता है। उसमें पित्तज्वर के प्रायः सब लक्षण होते हैं ॥ केवल भेद इतना ही है कि पित्तज्वर में आमाशय बिगड़ जाता है। इसमें नहीं। इसकी और पित्तज्वर की चिकित्सा एक ही है ॥ ३ ॥

## अथ तृषानिरोधजदाहस्य लक्षणम् ।

तृष्णानिरोधजमाह—

तृष्णा निरोधादब्धातौ क्षीणे तेजः समुद्धतम् ।
स बाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः ॥ ४ ॥
संशुष्क-गल-ताल्वोष्ठो जिह्वां निष्कृष्य वेपते ।

( सु० उ० अ० ४७ श्लो० २९ )

म०—तृष्णेत्यादि । तेजः समुद्धतं=पित्तोष्मा वृद्ध इत्यर्थः निष्कृष्य=निःसार्य ॥ ४ ॥—

भा० टी०—प्यास के रोकने से जलीयधातु=रस के कम हो जाने पर पित्त की गरमी बढ़ जाती है, फिर शरीर के बाहर और भीतर, दोनों तरफ बड़े जोर से जलन होती है। होशकम रहता है। गला, तालु और ओठ, ये सब सूखते रहते हैं। रोगी गर्मी के मारे जीभ निकाल कर हाँफता रहता है॥ ४॥

## अथ शस्त्राघातजदाहस्य लक्षणम् ।

अवगाढशस्त्रप्रहारजनितरक्तपूर्णकोष्ठजमाह—

**असृजः पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः ॥ ५ ॥**

( सु० उ० अ० ४७ श्लो० ३० )

म०—असृज इत्यादि । न चोक्तरक्तजेनास्य पौनरुक्त्यम्, कृत्स्नदेहानुगमिति वचनात् कारणभेदाच्च । असृजः पूर्णकोष्ठस्येति "पूरणगुणसुहितार्थ—" इत्यादिना ज्ञापकेन कर्तरि षष्ठी, रक्तेन पूरितकोष्ठस्येत्यर्थः । कोष्ठशब्देन हृदयादयो गृह्यन्ते । यदाह सुश्रुतः—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" ( सु० चि० स्था० अ० २ )—इति ॥ ५ ॥

भा० टी०—किसी तेज हथियार के लगने से कोष्ठ ( हृदयादि ) में खून भर जाने से बहुत जोर का दाह होता है। यह दुस्तर होता है॥ ५॥

## अथ धातुक्षयजदाहस्य लक्षणम् ।

धातुक्षयजमाह—

**धातुक्षयोक्तो यो दाहस्तेन मूर्च्छातृडर्दितः ।**
**क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः ॥ ६ ॥**

( सु० उ० अ० ४७ श्लो० ३१ )

म०—धात्वित्यादि । धातवो=रसादयः । क्रियाहीनो=निश्चेष्टः; किंवा भृशपीडितो दाहेन क्रियाहीनश्चिकित्साहीनो यदि भवेत् तदा सीदेत्=म्रियत इत्यर्थः ॥ ६ ॥

भा० टी०—रस आदि धातुओं के कम हो जाने से भी दाह होता है। इसमें मूर्च्छा, और प्यास होती है। आवाज मन्द हो जाती है, शरीर से कोई काम नहीं हो सकता। बड़ी तकलीफ होती है॥ ६॥

## अथ मर्माभिघातजदाहस्य लक्षणम्।

मर्माभिघातजमाह—

**मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः।**
**सर्व एव च वर्ज्याः स्युः शीतगात्रस्य देहिनः ॥ ७॥**

( सु० उ० अ० ४७ श्लो० ३३ )

इति श्रीमाधवकरविरचिते माधवनिदाने दाहनिदानं समाप्तम्।

म०—मर्मेत्यादि। मर्माणि=शिरो-हृदय-बस्त्यादीनि। जेज्जटस्तु सप्तत्वमन्यथा गणयति—"त्वचं प्राप्त" इत्यादिना प्रथमः, "कृत्स्नदेहानुगं रक्तम्"— इत्यत्र रक्तस्थाने पित्तं पठित्वा एतदादिना "स चाप्यस्य विधिः स्मृतः" इत्यन्तेन पैत्तिको द्वितीयः, तृष्णानिरोधजस्तृतीयः, "असृजः पूर्णकोष्ठस्य" इति चतुर्थः, धातुक्षयजः पञ्चमः, षष्ठस्य तु क्षतजस्य लक्षणं पठति—"क्षतजोऽनश्नतश्चान्नं शोचतश्चाप्यनेकधा। तेनान्तर्दह्यतेऽत्यर्थं तृष्णादाह-प्रलापवान्"—इति, मर्माभिघातजस्तु सप्तम इति ॥ ७॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां दाहनिदानं समाप्तम्।

भा० टी०—शिर, हृदय, वस्ति, आदि मर्म स्थानों पर किसी कारण से चोट पहुँचने से भी दाह होता है। यह साँतवा दाह असाध्य कहा गया है। यदि भीतर दाह हो और ऊपर शरीर ठण्डा हो तो सातों दाह असाध्य माना गया है ॥ ७॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चयभाषाटीकायां दाहनिदानम्।



## अथोन्मादनिदानम् ।

( Insanity, Mania. ) इन्सैनिटी, मैनिआ,

### अथोन्मादरोगस्य निर्वचनम् ।

मदात्यये 'उन्मादमिव चापरम्'—इत्यनेन उन्मादसंकीर्तनमुन्मादसादृश्यं चोक्तम् तथा मदात्ययेऽपि दाहो भवतीति स्वल्पवक्तव्यतया दाहमभिधायोन्मादारम्भः, तस्य निरुक्तिमाह—

मदयन्त्युद्गता दोषा यस्मादुन्मार्गमागताः[1] ।
मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः ॥ १ ॥

( सु० उ० अ० ६२ श्लो० १ )

म०—मदयन्तीत्यादि । मदयन्ति=मनोविभ्रमं कुर्वन्ति, उन्मार्गमागता विमार्गगताः मनोवहधमनीरनुप्राप्ताः । उद्गता=वृद्धाः, अथवा ऊर्ध्वं हृदयं गताः । एतेन उत्पूर्वेणैव दोषाणां वृद्धत्वं च दर्शितम् ॥ १ ॥

भा० टी०—कुपित दोष ऊपर हृदय में आकर मनोवह धमनियों में फैल कर आदमी को पागल कर देते हैं । इस रोग में मन ही विगड़ता है, इस लिए यह मानस रोग कहलाता है ॥ १ ॥

### अथोन्मादस्य प्रकारभेदाः ।

प्रकारभेदमाह—

एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
मानसेन च दुःखेन स च पञ्चविधो मतः ॥ २ ॥
विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम् ।
स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्ति च ॥ ३ ॥

( सु० उ० अ० ६२ श्लो० २ ३ )

म०—एकैकश इत्यादि । मानसेन च दुःखेनेति शोकादिना । स चेति षड्विधोऽपि । अत्राप्रवृद्धपदमुपादायापि तरुणपदप्रयोगं कुर्वता सुश्रुतेन

---

१ 'उन्मार्गमाश्रिताः' इति पाठान्तरम् ।

स्वतन्त्रोऽपि दोषजनितो मदो भवतीति दर्शितम् । अत एव चरके विधिशोणितीयाध्याये उन्मादात्पृथगेव पठितः सनिदानचिकित्स्य इति ॥ २ ॥ ३ ॥

भा० टी०—उन्माद रोग छः प्रकार का होता है, १ वात से, २ पित्त से ३, कफ से, ४ सन्निपात से, ५ मानसिक दुःख–शोक आदि से और ६ विष से । इसमें चिकित्सा निदान के विपरीत करनी चाहिए । जब तक यह पूरा नहीं बढ़ता–नया ही रहता है—थोड़े ही लक्षण होते हैं तब तक इसे मद कहते हैं । मद रोग स्वतन्त्र भी होता है॥२–३॥

अथोन्मादस्य सामान्यहेतवः ।

सामान्यहेतुमाह—

**विरुद्ध-दुष्टा-ऽशुचि-भोजनानि प्रधर्षणं देव-गुरु-द्विजानाम् ।**
**उन्मादहेतुर्भय-हर्ष-पूर्वो मनोऽभिघातो विषमाश्च चेष्टाः ॥ ४ ॥**

म०—विरुद्धेत्यादि । दुष्टं=गरसहितमन्नादि । प्रधर्षणे 'धृष' प्रधर्षणे इत्यस्मात् प्रधर्षणमभिभवः । भयहर्षपूर्वो मनोऽभिघात इति भय–हर्षाभ्यां मनसोऽभिभवः । भय–हर्ष–पूर्व इति भयं हर्षो वा पूर्वं यस्य स तथा,पूर्वशब्दोऽत्र कारणवाची चकारोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः, तेन काम–क्रोध–लोभादयोऽपि कारणमिति जेज्जटः । अन्ये त्वाहुः–क्रोधादिभिरपि भय–हर्ष–पूर्वक एव भवतीति, तेन तौ निर्दिष्टौ । विषमाश्च चेष्टा इति विषमाङ्गन्यासबलवद्विग्रहादयः, उन्मादहेतव इत्यपि योज्यम् ॥ ४ ॥

भा० टी०—उन्माद के सामान्य कारण–विरुद्ध, विषैला, गन्दा भोजन, देवता, गुरु और ब्राह्मणों को दपटना, भय, खुशी, काम, क्रोध,लोभ से मन का बिगड जाना, उल्टा काम–जैसे ऊँचे खाले सोना बैठना, जबर्दस्त आदमी से लड़ना, अर्थात् जिस काम करने की शक्ति न हो उसे जबर्दस्ती हिम्मत करके करना ॥ ४ ॥

अथोन्मादस्य सम्प्राप्तिः ।

सम्प्राप्तिमाह—

**तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य ।**
**स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ॥ ५ ॥**

( च० चि० अ० १४ श्लो ३ )

म०–तैरित्यादि । तैरुक्तहेतुभिः । अल्पसत्त्वस्य=अल्पसत्त्वगुणस्येति चक्रः । जेज्जटस्त्वाह–सत्त्वं=मनः, तस्य चाल्पत्वं रजस्तमोभ्यामावृतत्वेनाल्पज्ञानजनकत्वात् । मला=वातादयः । बुद्धेर्निवासं हृदयमित्यनेन हृदयस्याश्रयस्य दुष्ट्या तदा[1]श्रितज्ञानस्यापि दुष्टिर्भवतीति दर्शयति । स्रोतांसि मनोवहानीति हृदयाश्रिता दश धमन्यः; एतच्च विशेषेण बोध्यम्. निखिलदेहस्रोतसामेव मनोऽधिष्ठानत्वेन चरके दर्शितत्वात् । अधिष्ठाय=व्याप्येत्यर्थः ॥ ५ ॥

भा० टी०—उन्माद की सम्प्राप्ति–ऊपर लिखे हुए कारणों से मनोबल कम होजाने पर दोष बुद्धि और उसके स्थान हृदय को बिगड़ कर मनोवाहिनी धमनियों में जाकर मनुष्य के चित्त को जल्दी ही बेखबर अर्थात् पागल कर देते हैं ॥ ५ ॥

अथोन्मादस्य सामान्यरूपाणि ।

सामान्यरूपमाह—

**धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च ।**
**अबद्धवाक्त्वं हृदयं च शून्यं सामान्यमुन्मादगदस्य लिङ्गम् ॥६॥**

( च० चि० अ० १४ श्लो० १४ )

म०–धीविभ्रम इत्यादि । एतत् सामान्यं पूर्वरूपमिति जेज्जटः, सामान्यरूपमिति चक्रः । धीविभ्रमो=भ्रान्तज्ञानत्वम् । सत्त्वपरिप्लवो=मनसश्चञ्चलत्वम् अधीरता=कातरत्वम् । अबद्धवाक्त्वमसंबद्धवचनत्वम् । लिंगयतेऽनेनेति लिंगं, तेन पूर्वरूपं चेति व्याख्यातम् । विरेकशब्देनात्र वान्तिरप्यभिधीयते, विरेचयति देहान्मलं पृथक्करोतीति व्युत्पत्त्या ॥ ६ ॥

भा०टी०—उन्माद का सामान्य लक्षण-समझ उलटी हो, मन चञ्चल रहे, व्याकुल होकर देखना, धीरज न होना, बातचीत बे ठिकाने—अप्रासंगिक ( जिसका कोई खास मतलब न निकले ) हो, हृदय शून्य खाली हो अर्थात् किसीका कहना कुछभी न समझे, यह उन्माद का सामान्य लक्षण है । कोई २ इसे उन्माद का पूर्वरूप मानते हैं ॥ ६ ॥

अथ वातिकोन्मादस्य विशेषलक्षणानि ।

वातजमाह–

**रूक्षाल्प-शीतान्न-विरेक-धातुक्षयोपवासैरनिलोऽतिवृद्धः ।**
**चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ॥७॥**

---

१—तदाश्रितबुद्धेरपि इति पाठान्तरम् ।

अस्थानहास्य-स्मितनृत्य-गीत-वागङ्गविक्षेपण-रोदनानि ।
पारुष्य-कार्श्यारुणवर्णताश्च जीर्णे बलं चानिलजस्य रूपम् ॥८॥

( च० चि० अ० १४ श्लो० ७,८ )

म०-रूक्षेत्यादि । अस्थानहास्येत्यादि । अस्थानेऽविषये हास्योऽस्थानहास्यः । एवमस्थानशब्दः स्मितादिषु प्रयोज्यः । स्मितमीषद्धासः । अङ्गविक्षेपो=विरुद्धचेष्टा । जीर्णे बलमिति जीर्णे आहारे व्याधेर्बलं भवति ॥ ७ ॥ ८ ॥

आ०टी०-वातिक उन्माद के लक्षण—रूक्ष,शीत भोजनसे, वमन विरेचन के अधिक होनेसे, धातुक्षय तथा उपवास से वायु अत्यन्त कुपित होकर चिन्ता आदि से बिगड़े हुए मनको शीघ्रही बुद्धि (ज्ञान) और स्मरण शक्ति को नष्ट कर देताहै। इसमें रोगी बे मौके—बिना प्रयोजन हँसता है, मुस्कुराता है, नाचता है, गाता है, बोलता है, दौड़ता है, कूदता है, पढ़ता है, रोता है। शरीर रूखा दुबला और गुलाबी रंगका हो जाता है। यों तो हर समय रोग रहता है मगर विशेष कर भोजन पकने बाद बीमारी का अधिक जोर होता है ॥ ७—८ ॥

अथ पैत्तिकोन्मादस्य हेतवो लक्षणानि च

पित्तजमाह—

अजीर्ण-कट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात् ॥ ९ ॥
अमर्ष-संरम्भ-विनग्नभावाः सन्तर्जनातिद्रवणौष्ण्यरोषाः ।
प्रच्छाय-शीतान्न-जलाभिलाषः पीता च भाःपित्तकृतस्य लिङ्गम् ॥१०॥

म०-अजीर्णेत्यादि । अशीतैरिति उष्णैः । उन्मादमत्युग्रमिति । अत्युग्रं=तीव्रवेगम् । उन्मादयत्युग्रमिति पाठान्तरे उग्रं यथा भवति तथा उन्मादं जनयति । अनात्मकस्य=अनात्मवतः । पूर्ववदिति चिन्तादिदुष्टहृदयस्य बुद्ध्यादिकमुपहत्येत्यादिसंप्राप्त्या । कुर्यादिति वक्ष्यमाणं लिङ्गमिति शेषः । अत्र पक्षे किं तल्लिङ्गमित्याह—अमर्षेत्यादि । अमर्षोऽसहिष्णुत्वम्, न तु रोषः, तस्य वक्ष्यमाणत्वात् । संरम्भ=आरभटी, विनग्नभावो=नग्नत्वम्, संतर्जनं=परत्रासनम्, अतिद्रवणं=पलायनम्, औष्ण्यं गात्रस्य, औष्ठ्यमिति पाठान्तरे विकृतौष्ठत्वम् । प्रच्छायशीतान्नजलाभिलाष इति छायायां शीतयोरन्नजलयोरभिलाषः ॥ ९—१० ॥

१—संरम्भ आडम्बर इति यावत्" इति मात्रमिश्रः ।

भा०टी०—पित्तज उन्माद के लक्षण—अजीर्ण, चरपरा, खट्टा, जलन पैदा करने वाला, गरम—भोजन से पहले का इकट्ठा पित्त बढ़कर उस आदमी के, जिसका मन, आत्मा और इन्द्रिय काबूमें नहीं हैं, हृदय में स्थित होकर वातिक उन्माद की तरह—चिन्ता युक्त पुरुष की बुद्धि बिगाड़ कर शीघ्रही उन्माद पैदा कर देता है। इसमें ये लक्षण होते हैं—अमर्ष=किसी की कोई बात न सहना, संरम्भ=हाथ पांव पटकना, उछलना, उपद्रव मचाना। नंगा रहना, दूसरे को डराना, भागना, शरीर गरम रहना, गुस्सा होना, छाया और ठण्डा पानी ठण्डा भोजन की इच्छा होना शरीर पीला होजाना॥ ९—१० ॥

अथ श्लैष्मिकोन्मादस्य हेतवो लक्षणानि च ।

कफजमाह—

सम्पूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्माणि सम्प्रदुष्टः ।
बुद्धिं स्मृतिं चाप्युपहत्य चित्तं प्रमोहयन्सञ्जनयेद्विकारम् ॥११॥
वाक्चेष्टितं मन्दमरोचकश्च नारी-विविक्त-प्रियता-ऽतिनिद्रा ।
छर्दिश्च लाला च बलं च भुङ्क्ते नखादिशौक्ल्यं च कफात्मकेस्यात्१२

( च० चि० अ० १४ श्लो० ११-१२ )

म०—सम्पूरणैरित्यादि। मन्दविचेष्टितस्य=आयासशून्यस्य। संपूरणैर्भोजनादिभिः कफो दुष्ट इति सम्बन्धः।सोष्मा=सपित्तः कफेनापि क्रियमाण उन्मादोऽवश्यं सपित्ते क्रियते व्याधिमहिम्ना,यथा मूर्च्छा। अन्ये त्वाहुः—केवलकफेनापि क्रियते, सोष्मपदेन तु द्वन्द्वजोऽपि भवतीति सूच्यते। अन्ये त्वाहुः—ऊष्मशब्देन शक्तिरुच्यते, तेनोत्कृष्टशक्तिकः कफ इत्यर्थः। मर्मणीति=हृदये। विकारमुन्मादम्। नारी-विविक्त-प्रियतेति नारीप्रियता, विजनप्रियता च। बलं च भुङ्क्ते इति व्याधेरिति शेषः। आदिशब्देन त्वङ्-मूत्र-नेत्रादीनां ग्रहणम् ॥ ११ ॥ १२ ॥

भा०टी०—अधिक भोजन से, परिश्रम कुछ भी न करने से, कफ कुपित होकर पित्त के साथ, हृदय में स्थान कर ज्ञान और स्मरण शक्ति नष्ट करके मनको बिगाड़ता हुआ उन्माद रोग पैदा कर देता है।—इसमें—कमबोलना, अरुचि, स्त्री और एकान्त प्रिय लगना, अधिक निद्रा आना, कयहोना, मुह से लार बहना, नाखून मूत्र पुरीष, आँख, त्वचा—सफेद हो जाना, और भोजन करने पर रोगका प्रबल होना; ये लक्षण कफज उन्माद में होते हैं॥ ११—१२ ॥

## अथ सान्निपातिकोन्मादस्य लक्षणानि ।

सान्निपातिकमाह—

यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स च हेतुभिः स्यात् ।
सर्वाणि रूपाणि बिभर्ति तादृग् विरुद्धभैषज्यविधिर्विवर्ज्यः ॥१३॥

( च० चि० अ० २१ श्लो० ४८ )

म०—य इत्यादि । सर्वैः समस्तैरिति=सर्वैरिति कृत्वा यत् समस्तैरिति करोति तेनैवं बोधयति—वातादयोऽनेकैः स्वनिदानैः कुपिता उन्मादं जनयन्ति, न तु प्रत्येकमेकनिदानकुपिताः । विरुद्धभैषज्यविधिर्विवर्ज्य इति अयमभिसन्धिः त्रिदोषजे प्रत्येकं वातादिप्रत्यनीका क्रिया कार्या, सा च परस्परविरोधिनी, त्रिदोषहरं च किञ्चिदेव द्रव्यमामलक्यादि, तत्तु नात्र यौगिकम्, "न हि सर्वाणि सर्वत्र यौगिकानि भवन्ति" इति वचनात् । ननु, यद्येवं तदा सर्व एव हि त्रिदोषजाविकारा असाध्या भवेयुरित्यत उक्तम्—तादृगिति । कोऽप्ययं सम्प्राप्तिविशेषो रोगविशेषो वा येनायं विरुद्धभैषज्यविधिर्न सर्व इत्यर्थः । अन्ये त्वाहुः—सर्वैः समस्तैर्हेतुभिर्यः कृतः स एवासाध्यः, न त्वल्पहेतुकृत इति ॥ १३ ॥

भा०टी०—सन्निपात उन्माद बड़ाही भयङ्कर होताहै और वह समस्त कारणों से पैदा होता तथा तीनों दोषों से उत्पन्न उन्माद के सब लक्षण उसमें होते हैं; इसकी दवा परस्पर मेल नहीं खाती क्योंकि त्रिदोषजमें प्रत्येक दोषों की दवा करनी चाहिए, यदि वातकी दवा दीजाय तो पित्तबढ़े और यदि कफकी दवा दीजाय तोवात। इसलिए इसकी चिकित्सा करना ठीक नहीं । तथापि कुछ न कुछ दवा करनीही चाहिए ॥ १३ ॥

## अथ शोकजोन्मादस्य सम्प्राप्तिः ।

शोकादिजमाह—

चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै-
र्वित्रासितस्य धन-बान्धव-संक्षयाद्वा ।
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतमो मनसो विकारः ॥ १४ ॥

( सु० उ० अ० ६२ श्लो०६ )

म०—चौरैरित्यादि । हृते चोपहते, तथा रिरंसोः=कामुकस्य अप्राप्तया प्रियया क्षते मनसीति सम्बन्धः ॥ १४ ॥

भा०टी०-शोकादि से उत्पन्न उन्माद की सम्प्राप्ति—मन और हृदय ( दिल ) पर चोट पहुँचने पर शोकाकुल हो जाने पर बड़ा प्रबल उन्माद होता है। शोकका कारण-चोर, पुलिस आदि राजकर्मचारी, दुश्मन, घोड़ा, सिंह,हाथी, सांप आदि जं ओं द्वारा डरजाना धननाश पुत्र स्त्री आदि बन्धुओं का नाश, किसी औरतपर आशिक होजाने पर उसका न मिलना आदि ॥ १४ ॥

## अथ शोकजोन्मादस्य लक्षणानि ।

तस्य लक्षणमाह—

चित्रं ब्रवीति च मनोऽनुगतं विसंज्ञो
गायत्यथो हसति रोदिति चापि मूढः ॥

( सु० उ० अ० ६२ श्लो० ९ )

म०—चित्रमित्यादि । चित्रं=विविधम् । मनोऽनुगतं=गोप्यमपि । विसंज्ञो=विपरीतज्ञानः, अत एव मूढः ॥

भा० टी०—इस शोकज उन्माद में आदमी अनेक तरहकी बातें करता है । मनकी बात खोल देता है । कभी गाताहै, कभी हँसता है और कभी रोताहै । बिल्कुल बेवकूफ की तरह जान पड़ताहै । सुध कुछ नहीं रहती ।

## अथ विषजोन्मादस्य लक्षणम् ।

विषजमाह—

रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः ।
श्यावाननो विषकृतेऽथ भवेद्विसंज्ञः ॥ १५ ॥

( सु० उ० अ० ६२ श्लो० १० )

म०—रक्तेक्षण इत्यादि । हतबलेन्द्रियभा इति हतं बलमिन्द्रियाणि भाश्च यस्य स तथा । भाः=दीप्तिः ॥ १५ ॥

भा० टी०—विषय उन्माद के लक्षण—विषज उन्माद में आँखे लाल हो जाती हैं, शरीर में ताकत नहीं रहती । इन्द्रियों मे शक्ति नहीं रहती, और शरीर की कान्ति खराब हो जाती है । अनाथ जैसा मालूम होता है । चेहरा स्याह हो जाता है, गशी रहती है ॥१५॥

## अथोन्मादस्यासाध्यलक्षणानि ।

असाध्यलक्षणमाह—

**अवाञ्ची वाप्युदञ्ची वा क्षीण-मांस-बलो नरः ।**
**जागरूको ह्यसन्देहमुन्मादेन विनश्यति ॥ १६ ॥**

( सु० सू० अ० ३४ श्लो० १६ )

म०—अवाञ्चीत्यादि । अवाञ्ची=अधोमुखः,उदञ्ची=ऊर्द्ध्वमुखः,अत एवान्ये 'अवाङ्मुखस्तून्मुखो वा' इति पठन्ति । जागरूकोऽनिद्रः ॥ १६ ॥

भा० टी०—असाध्य लक्षण—यदि उन्माद वा रोगी एकदम मुह ऊपर किये रहे अथवा एकदम नीचे किये रहे, देह सूखकर पतली हो गई हो, ताकत बिल्कुल न रहे, रातमें बिल्कुल नींद न आवे तो नहीं बचता। इसमें सन्देह नहीं ॥ १६ ॥

## अथ भौतिकोन्मादस्य सामान्यलक्षणानि ।

भौतिकोन्मादस्य सामान्यलक्षणमाह—

**अमर्त्य-वाग्-विक्रम-वीर्य-चेष्टो ज्ञानादि-विज्ञान-बलादिभिर्यः ।**
**उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम् ॥ १७ ॥**

( च० चि० अ० १४ श्लो० १५ )

म० अमर्त्यवागित्यादि । अमर्त्या=अमनुष्या अनुचिता वा वागादयो यस्य स तथा । विक्रमः=पराक्रमः, वीर्यं=शक्तिः, चेष्टा=शारीरिकी क्रिया । ज्ञानादिविज्ञानबलादिभिरिति उपलक्षणे तृतीया। ज्ञानं=तत्त्वज्ञानम्, विज्ञानं=शिल्पादिज्ञानम्, किं वा ज्ञानं=शास्त्रम्, विज्ञानं=तदर्थनिश्चयः, आदिशब्देन स्मृत्यादीनां ग्रहणम्, तेषां बलम्। अनियत इति न वातादिवदाहारजीर्णादिकालवत् कालनिश्चयः। 'नियत' इति पाठे तु वक्ष्यमाणनियततिथ्यादीनां ग्रहणम् । देवग्रहाः पौर्णमास्यामित्यादि । भूतशब्देनात्र सर्व एव वक्ष्यमाणा देवादयोऽभिधीयन्ते ॥ १७ ॥

भा०टी०—भौतिक उन्माद के सामान्य लक्षण—जिसमें—बोलचाल, पराक्रम शक्ति, उठना बैठना, चलना, दौड़ना, पकड़ना, कूदना, लांघना, ज्ञान, विज्ञान, कारीगरी, बल आदि सब काम ऐसे विचित्र हों जिसे मनुष्य न करसके, पागलपन एकाएक जाहिर हो जाय, वातादि जनित उन्माद की तरह भोजन के पकने पर नहो, उसे भूतोन्माद समझना चाहिए ॥ १७ ॥

अथ देवग्रहगृहीतस्य लक्षणानि ।

देवजुष्टमाह—

संतुष्टः शुचिरतिदिव्य-माल्य-गन्धो
निस्तन्द्रीरवितथ-संस्कृत-प्रभाषी ।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति नरः स देवजुष्टः ॥ १८ ॥

( सु० उ० अ० ६० श्लो० ७ )

म०—संतुष्ट इत्यादि । अतिदिव्यमाल्यगन्ध इति अतिमात्रो दिव्यमाल्यस्येव गन्धो यस्य स तथा । निस्तन्द्री=अनिद्रः । अवितथं=सत्यम् । विदेहेऽपि-'निःस्वप्न सत्य-संस्कृत-भाषिणम्" इति पठितम् । ब्रह्मण्यो=ब्राह्मणानुरक्तः । देवजुष्टो=देवग्रहपीडितः । देवग्रहणेन गणमातृकादयोऽपि ग्राह्याः । विदेहेऽपि पठ्यते-"क्रोधनः स्रस्तसर्वाङ्गो लाला-फेना-ऽऽविलाऽऽननः । निद्रालुःकम्पनो मूको गणमातृभिरर्दितः" इति ॥ १८ ॥

भा० टी०—देवजुष्ट उन्माद के लक्षण-हर समय सन्तुष्ट रहे, हर तरह से सफ़ाई रक्खे, दिव्य मालाओं के समान शरीर में खुशबू आवे, ज़रा भी तन्द्रा न रहे, सत्य और संस्कृत भाषण करे, चेहरे पर तेज झलके, सबको वर दे ब्राह्मणों का भक्त हो ॥ १८ ॥

अथ असुरग्रहगृहीतस्य लक्षणम् ।

देवशत्रुजुष्टमाह—

संस्वेदी द्विज-गुरु-देव-दोष-वक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः ।
सन्तुष्टो न भवति चान्न-पान-जातै-
र्दुष्टात्मा भवति स देवशत्रुजुष्टः ॥ १९ ॥

( सु० उ० अ० ६० श्लो० ८ )

म०—संस्वेदीत्यादि ॥ १९ ॥

भा०टी०—असुर गृहीत के लक्षण-पसीना बहुत निकले, ब्राह्मण, गुरु, और देवताओं की निन्दा किया करे, नज़र टेढ़ी रहे, निडर रहे, कुमार्ग में दृष्टि रहे, अनेक प्रकार की खाने पीने की चीज़ों के खाने से उसे सन्तोष न हो, सदा पाप में बुद्धि रहे ॥ १९ ॥

अथ गन्धर्वग्रहगृहीतस्य लक्षणम् ।

गन्धर्वाविष्टमाह—

हृष्टात्मा पुलिन-वनान्तरोपसेवी
स्वाचारः प्रिय-परि-गीत-गन्ध-माल्यः ।
नृत्यन्वै प्रहसति चारु चाल्पशब्दं
गन्धर्वग्रहपरिपीडितो मनुष्यः ॥ २० ॥

( सु० उ० अ० ६० श्लो० ६ )

म०-हृष्टेत्यादि । पुलिनं=तोयोत्थिततटम्, अन्तरं=मध्यं, विशेषो वा स्वाचारोऽनिन्दिताचारः । प्रियेत्यादि,=प्रियाणि परि=सर्वतः गीत-गन्ध-माल्यानि यस्य स तथा । नृत्यन्नित्यादि,=चारु नृत्यन्, अल्पशब्दं यथा भवति तथा प्रहसतीति योज्यम् ॥ २० ॥

भा० टी०—गन्धर्व जुष्ट के लक्षण—सदा प्रसन्न रहे, नदी के तट और जंगलमें अधिक रहे; आचार-चाल चलन अच्छा हो, गाना बजाना, माला इत्र फुलेल वगैरह का शौकीन हो, नाचे अच्छा जाने, हँसा करे, मगर जोर से न हँसे ॥ २० ॥

अथ यक्षग्रहगृहीतस्य लक्षणम् ।

यक्षाविष्टमाह—

ताम्राक्षः प्रिय-तनु-रक्त-वस्त्रधारी
गम्भीरो द्रुतगतिरल्पवाक् सहिष्णुः ।
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्यः ॥ २१ ॥

( सु० उ० अ० ६० श्लो०-१० )

म०-ताम्राक्ष इत्यादि । प्रियेत्यादि, प्रियं=शोभनं, तनु=सूक्ष्मं, रक्तं वस्त्रं धर्तुं शीलं यस्य स तथा ॥ २१ ॥

भा०टी०—यक्षजुष्ट के लक्षण—आँखें तामेकी तरह लाल हों, अच्छा, महीन और लाल कपड़ा पहने, स्वभाव गम्भीर, घबड़ाये नहीं, जल्दी २ चले, बोले कम, सहन शीलहो, तेजस्वी हो, किसे क्या दूँ, यह कहा करे ॥ १२ ॥

अथ पितृग्रहगृहीतस्य लक्षणानि ।

पितृजुष्टमाह—

प्रेतानां स दिशति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ।
मांसेप्सुस्तिल-गुड-पायसाभिकाम-
स्तद्भक्तो भवति पितृग्रहाभिजुष्टः ॥ २२ ॥

( सु० उ० अ० ६० श्लो० ११ )

म०-प्रेतानामित्यादि । प्रेतानां=पितॄणां, संबन्धविवक्षितत्वात् न चतुर्थी । दिशति=ददाति । संस्तरषु=कुशपत्ररचितास्तरणेषु । अपसव्यवस्त्रः=वामो [२]त्तरीयः। मांसेप्सुरित्यादि; एतदभिधानप्रयोजनं यस्मिन् यस्येच्छा भवति तस्य तेनैव बलिर्दातव्यः, एवमन्यत्रापि द्रष्टव्यम् । तद्भक्तः=पितृभक्तः ॥ २२ ॥

भा०टी०—पितृजुष्ट के लक्षण—कुशा बिछाकर पितरों को पिण्डादे और अपसव्य वस्त्र होकर=दहिने कन्धा पर वस्त्र या यज्ञोपवीत रखकर तर्पण करे, मास, तिल, गुड, खीर खाने की विशेष इच्छा हो, पितरों का भक्त हो ॥ २१ ॥

अथ सर्पग्रहगृहीतस्य लक्षणम् ।

नागाविष्टमाह—

यस्तूर्व्या प्रसरति सर्पवत्कदाचित्
सृक्किण्यौ विलिहति[३] जिह्वया तथैव ।
क्रोधालुर्गुड-मधु-दुग्ध-पायसेप्सु-
र्ज्ञातव्यो भवति भुजङ्गमेन जुष्टः ॥ २३ ॥

( सु० उ० अ० ६० श्लो० १२ )

म०-यस्त्वित्यादि । प्रसरति=सर्पवदिति उरसा गच्छति । सृक्किण्यौ=ओष्ठ-प्रान्तौ । सृक्किणीशब्द ईकारान्तोऽप्यस्तीत्युन्नेयम् ॥ २३ ॥

---

१—"दक्षिणस्कन्धकृतोत्तरीयः" इति भावमिश्रः ।

२-अपसव्यशब्दस्य दक्षिणवाचकत्वादत्र वामोत्तरीय इति व्याख्यानं त्वसंगतम्—; अपसव्यन्तु दक्षिणमिति अमरोक्तेः पितॄनुद्दिश्य तथैव शास्त्रे तर्पणपिण्डदानविधानाच्च । ३-विलिहतीति आर्षप्रयोगः । अन्यथा विलेढीति स्यात् । अथवा ॥णकार्य स्यानित्यत्वात्साधः ।

भा०टी०-सर्पजुष्ट के लक्षण—जो कभी२ जमीन पर साँपकी तरह छातीके बल रेंगे सृक्किणी=ओठके अगल बगलके सिरेको जीभसे चाटै, गुस्सा में रहे, गुड़ शहद, दूध खीर, खानेकी इच्छा हो, तो सर्पग्रह लगा है, ऐसा समझना चाहिए ॥ २३ ॥

अथ राक्षसग्रहगृहीतस्य लक्षणम् ।

राक्षसाविष्टमाह—

मांसा-ऽसृग्-विविध-सुराविकार-लिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ।
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड् भवति स राक्षसैर्गृहीतः ॥ २४ ॥

( सु० उ० अ० ६० श्लो० १३ )

म०-मांसेत्यादि । निशाविहारी निशायामेव भ्रमणशीलः । राक्षसशब्देन ब्रह्मराक्षसादयोऽपि ग्राह्याः । तथा राक्षसानन्तरं विदेहोऽपि पठति-"देव-विप्र-गुरु-द्वेषी वेदवेदाङ्गनिन्दकः । आत्मपीडाकरो हासी ब्रह्मराक्षससेवितः ॥" इति ॥ २४ ॥

भा०टी०—राक्षस के लगने पर लक्षण—मांस, रक्त, और अनेक प्रकारके मद्य की इच्छा हो, निर्लज्ज हो, दयाहीन हो, शूर हो, खाये चाहे न खाये शरीर में ताकत ज्यादा हो, रातमें घूमे, अपवित्र=गन्दारहे, ॥ २४ ॥

अथ पिशाचग्रहगृहीतस्य लक्षणम् ।

पिशाचाविष्टमाह—

उद्धस्तः कृश-परुषो विरुद्धलापी
दुर्गन्धो भृशमशुचिस्तथाऽतिलोलः ।
बह्वाशी विजन-वनाम्बु-रात्रि-सेवी[1]
व्याचेष्टन्भ्रमति रुदन् पिशाचजुष्टः ॥ २५ ॥

( सु० उ० अ० ६० श्लो० १४ )

म०-उद्धस्त इत्यादि । उद्धस्त=उद्बाहुः । 'उद्वस्त्र' इति पाठान्तरं न्याय्यम्, विदेहेऽपि दिगम्बरपाठात् । परुषो=रूक्षः । लोलः=सर्वस्मिन्नन्ने पाने च सलोभः । लोलुरिति पाठान्तरे स एवार्थः । व्याचेष्टन्निति=विरुद्धमाचेष्टन् ॥ २५ ॥

१—"वनान्तरोपसेवी" इति पाठान्तरम् ।

पिशाच जुष्ट के लक्षण—ऊपर हाथ उठाये रहे, या नंगा रहे, कृश और रूखा हो, उल्टी बात बोले, शरीर गन्धाय, गन्दा रहे, भोजन बहुत करे, एकान्त, जल के समीप तथा जंगलों में रहे, रात में घूमे, सब काम उल्टा करे, घूमा करे, कभी २ रोये ॥२५॥

## अथ ग्रहगृहीतस्यासाध्यलक्षणानि ।

त्रिविधं हिंसा-क्रीडा-पूजार्थं ग्रहा गृह्णन्ति । यदुक्तम्—"अशुचिं भिन्नमर्यादं क्षतं वा यदि वाऽक्षतम् । हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि च ॥" इति । तत्र हिंसार्थं गृहीतोऽसाध्यो भवति, तस्य श्लोकार्धद्वयेन लक्षणमाह—

स्थूलाक्षो द्रुतमटनः स फेनलेही
निद्रालुः पतति च कम्पते च यो हि ।
यश्चाद्रि-द्विरद-नगादिविच्युतः स्यात्
सोऽसाध्यो भवति तथा त्रयोदशाब्दे ॥ २६ ॥

( सु० उ० ६० श्लो० १५ )

म०—स्थूलाक्ष इत्यादि । स्थूलाक्षो=विवृतनेत्र इति जेज्जटः, द्रुतमटनो=द्रुतगतिः, अत एव त्वरितगतिरिति जेज्जटेन पठितम् । यश्चेत्यादि । पर्वतादिपातितः, सन् यो गृह्यते सोऽप्यसाध्यः । नगो=वृक्षः । सर्व एवोन्मादी त्रयोदशेऽब्दे देवतादिगृहीतोऽप्यसाध्यः । विदेहेऽधिकमप्यसाध्यलक्षणं पठ्यते—"मेढ्रप्रवृत्तः क्षतजः सास्राक्षः स्रुतनासिकः । रूक्षजिह्वः पूतिगर्भो हतवाग्गतिदुर्बलः ॥" इत्यादि॥२६॥

भा० टी०—ग्रह तीन प्रयोजन से लगते हैं-१ खेलने के लिए, २ पुजाने के लिए और ३ मारने के लिए । इनमें मारने के लिए जो लगते हैं वे असाध्य होते हैं, अर्थात् विना मारे नहीं छोड़ते । इस लिए मारने वाले ग्रहों के लक्षण बतलाते हैं-आँख फाँड २ कर देखे, जल्दी चले, मुह से फेन निकले, उसे चाट जाय, अधिक सोये, गिर २ पड़े, काँपे, पर्वत, हाथी, पेड़, मकान आदि से गिरने पर जिसे ग्रह लग जाँय, यह सब असाध्य होता है । यदि तेरह वर्ष तक आदमी पागल रहे चाहे दोषों से हो या भूतों के लगने से, तो फिर नहीं बचता ॥ २६ ॥

## अथ देवादीनां ग्रहणकालाः ।

देवादीनां ग्रहणकालमाह—

देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि ।
गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ ॥२७॥

पित्र्याः कृष्णक्षये हिंस्युः पञ्चम्यामपि चोरगाः।
रक्षांसि रात्रौ पैशाचाश्चतुर्दश्यां विशन्ति हि ॥२८॥

( सु० उ० अ० ६० श्लो१६,१७ )

म०-देवग्रहा इत्यादि। पौर्णमास्यां=पूर्णिमायाम्। कृष्णक्षयेऽमावास्यायाम्। प्रायोग्रहणादन्यत्रापि। तिथ्यभिधानप्रयोजनं लक्षणार्थं, तत्तिथौ बलिदानार्थं च ॥ २७ ॥ २८ ॥

भा० टी०—ग्रहों के लगने का समय-देव ग्रह पूर्णिमा को, असुर दोनों सन्ध्या समय, कभी गन्धर्व अष्टमी के दिन कभी २ सन्ध्या समय भी, यक्ष पड़िवा को, पितर अमावास्या को, सर्प ग्रह पञ्चमी को, राक्षस रात में, और पिशाच चतुर्दशी को लगते हैं, यह दिन इसलिए बतलाया गया है कि उन दिनों में उन २ ग्रहों को बलि दे ॥ २७-२८ ॥

### अथ ग्रहावेशानुपलब्धावुदाहरणानि।

ननु, यदि ग्रहाविष्टानां पुंसामुन्मादः स्यात्, तदा विशन्तो ग्रहाः कुतो नोपलभ्यन्ते? अत आह—

दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा।
स्वमणिं भास्करार्चिश्च यथा देहं च देहधृक् ॥ २९ ॥
विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणः।
प्रविश्याशु शरीरं हि पीडां कुर्वन्ति दुःसहाम् ॥३०॥

( सु० उ० अ० ६० श्लो० १८ )

म०—दर्पणादीनित्यादि। अस्मदादिदर्शनायोग्यत्वान्न दृश्यन्त इत्यर्थः। आदिशब्देन प्रकारवाचिना जलतैलादीनां ग्रहणम्। छाया=प्रतिकृतिः, शीतोष्णमिति कर्तृपदम्, प्राणिन इति कर्मपदम्। स्वमणिमिति=सूर्यकान्तम्। देहधृक्=आत्मा; मन इति जेज्जटः। अनेकदृष्टान्तप्रयोजनं, जेज्जटलिखितं तच्चात्रानुपयुक्तत्वेन विस्तरभयान्न लिखितम्। देवशब्देन देवाद्यनुचरा देवसधर्माणो गृह्यन्ते, देवानां मनुष्यशरीरेणाशुचिना संबन्धाभावात्। यदाह सुश्रुतः—"न ते मनुष्यैः सह संविशन्ति न ते मनुष्यान् क्वचिदाविशन्ति। ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपेताः" इति ॥ २९ ॥ ३० ॥

भा०टी०-प्रश्न उठता है कि यदि देवादिकों के लगने से उन्माद होता है तो फिर लगते समय वे क्यों नहीं देख पड़ते,? उत्तर यह है कि जैसे—सीसामें आदमी का

प्रतिबिम्ब,शरीर में गरमी सरदी का प्रवेश,सूर्य कान्तमणि में सूर्य किरण का प्रवेश और शरीर में आत्मा का प्रवेश होते समय नहीं जान पड़ता, उसी प्रकार देवादि ग्रह भी मनुष्य के शरीर में प्रवेश करते समय नहीं देख पड़ते, किन्तु शरीर में घुसकर तुरन्त बड़ी तकलीफ देते हैं। उन्हीं तकलीफों से देवादिकों का लगना माना जाता है॥२९-३०॥

अथ ग्रहाणां प्रभावः ।

तपांसि तीव्राणि तथैव दानं व्रतानि धर्मो नियमश्च सत्यम् ।
गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च यथाप्रभावम्॥३१॥

( सु० उ० अ० ६० श्लो० १९ )

भा०टी०—इन ग्रहों में जो जैसे श्रेष्ठ हैं उसी के अनुसार किसी में दो चार और किसी में सब, तप आदि गुण होते हैं। तप, दान, व्रत, धर्म, नियम, सत्य,तथा अणिमा, महिमा, गरिमा, लघिमा, प्राप्ति, प्राकाम्य, ईशित्व, वशित्व ॥ ३१ ॥

अथ ग्रहाणां पुम्भिस्सहवयनसम्बन्धः ।

न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति ।
ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः ॥३२॥

( सु० उ० अ० ६० श्लो० २० )

भा०टी०—भूत लगने का रहस्य—देवादि ग्रह न तो मनुष्यों के बीच रहते हैं और न लगतेही हैं। जो वैद्य अज्ञानवश उनका लगना सही मानते हैं, वे भूत विद्या को समझेही नहीं ॥ ३२ ॥

अथ ग्रहभृत्यानां पुंस्वावेशः ।

तेषां ग्रहाणां परिचारका ये कोटी-सहस्रा-युत-पद्म-संख्याः ।
असृग्-वसा-मांस-भुजः सुभीमा निशाविहाराश्च तथा विशन्ति॥३३॥

( सु० उ० अ० ६० श्लो० २१ )

वस्तुतः उन ग्रहों के जो खून, चर्बी, मांस खाने वाले, भयङ्कर, रात में घूमने वाले लाखों करोड़ों नोकर हैं वेही अपने २ मालिक के नाम से लगते हैं और कबूल करते हैं ॥ ३३ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां
रुग्विनिश्चयभाषाटीकायामुन्मादनिदानम् ।



## अथापस्मारनिदानम् ।

Epilepsy ( एपिलेप्सी )

### अथापस्मारस्य निरुक्ति–सम्प्राप्ती ।

( चिन्ताशोकादिभिर्दोषाः क्रुद्धा हृत्स्रोतसि स्थिताः ।
कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्वते ॥ १ ॥ )

मनोदुष्टिसाधर्म्यात् समानचिकित्स्यत्वादुन्मादानन्तरमपस्मारमाह । तस्य निरुक्तिः सुश्रुतेन कृता–"स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्जने । अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥" इति । स्मृतिश्च ज्ञानोपलक्षणं, तेनानुभवागमोऽपि बोध्यः । तस्य सामान्यलक्षणमाह—

### अथापस्मारस्य सामान्यलक्षणम् ।

तमःप्रवेशः संरम्भो दोषोद्रेकहतस्मृतेः ।
अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥ १ ॥

म०–तमःप्रवेश इत्यादि । तमःप्रवेशोऽन्धकारप्रवेश इव ज्ञानाभाव इत्यर्थः । संरम्भो=नेत्रविकृतिः हस्तपदादिविक्षेपणं च ॥ १ ॥

अपस्मार की सम्प्राप्ति—

भा०टी०—चिन्ता शोक आदि से दोष क्रुद्ध होकर हृदय में स्थितिकर स्मरण शक्ति गायब कर देते हैं, उसे अपस्मार कहते हैं। अपस्मार-मृगी, अपस्मार का सामान्य लक्षण—दोषों के कुपित होने से, अपस्मार होता है। इसमें आँख के सामने अँधेरा आजाता है, बेहोश होकर जहां कहीं रहे वहीं गिर पड़ता है। संरम्भ दाँत कट कटाता है, आँखे टेढ़ी हो जाती हैं, मुहसे फेन निकलता है, हाथपैर पटकता है। यह रोग चार प्रकार का होता है ॥ १ ॥

### अथापस्मारस्य पूर्वरूपाणि ।

पूर्वरूपमाह–

हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ।
निद्रानाशश्च तस्मिंश्च भविष्यति भवत्यथ ॥ २ ॥

( सु० उ० अ० ६१ श्लो० ६ )

---

१ स्मरणं स्मारः, अपगतो नष्टः स्मारो यत्रासावपस्मारः ।

  

म०—हृत्कम्प इत्यादि । शून्यता हृदयस्यैव । ध्यानं=जिह्मायनम् । अत्र मूर्च्छा=मनोमोहः । प्रमूढता=इन्द्रियमोहः ॥ २ ॥

भा०टी०—अपस्मार का पूर्व रूप—दिल धड़कता है, हृदय खाली मालुम होता है। ध्यान सा लगा रहता है । बेहोशी रहती है, इन्द्रियाँ बेकाम रहती हैं। नींद नहीं आती ॥ २ ॥

## अथ वातिकापस्मारस्य लक्षणम् ।

वातिकलक्षणमाह—

**कम्पते प्रदशेद्दन्तान् फेनोद्वामी श्वसित्यपि ।**
**परुषा-ऽरुण-ऽकृष्णानि पश्येद्रूपाणि चानिलात् ॥ ३ ॥**

( सु० उ० अ० ६१ श्लो० ७ )

म०-कम्पत इत्यादि । श्वसिति खरश्वासो भवति रूपाणीति प्राणिनः, 'नीलो मामनुधावति' इति सुश्रुतवचनात्, एवं पैत्तिके 'पीतो मामनुधावति' इति, एवं श्लैष्मिके 'श्वेतो मामनुधावति' इति ॥ ३ ॥

वातिक अपस्मार का लक्षण—

भा०टी०—रोगी कांपता है। दाँत काटता है। मुहसे फेन निकलता है। हांफता है। रोगी को ऐसा मालुम होता है कि मेरी तरफ कोई लाल नीला रूक्ष शरीर वाला प्राणी दौड़ता आता है ॥ ३ ॥

## अथ पैत्तिकापस्मारस्य लक्षणम् ।

पैत्तिकलक्षणमाह—

**पीत-फेना-ऽङ्ग-वक्त्राक्षः पीता-ऽसृग्-रूपदर्शकः ।**
**सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः ॥ ४ ॥**

( सु० उ० अ० ६१ श्लो० ८ )

म०—पीतेत्यादि । पीतासृग्रूपदर्शक इति पीत-लोहित-वर्णसमस्तवस्तुदर्शी सतृष्णेत्यादि सतृष्णश्चासावुष्णश्चेति सतृष्णोष्णः, सतृष्णोष्णश्चासावनलव्याप्त-लोकदर्शी चेति समासः ॥ ४ ॥

भा०टी०—पैत्तिक अपस्मार में फेन, मुह, आँखे पीली हो जाती हैं। सब चीजों को पीला लाल समझता है । प्यास लगती है, गर्मी मालुम होती है दुनिया उसे आग घिरी मालुम होती है ॥ ४ ॥

### अथ श्लैष्मिकापस्मारस्य लक्षणम् ।

श्लैष्मिकलक्षणमाह—

शुक्ल-फेनाङ्गवक्त्राक्षः शीत-हृष्टाङ्गजो गुरुः ।
पश्येच्छुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥५॥

( च० चि० अ० १५ श्लो० ६ )

म०—शुक्लेत्यादि । हृष्टाङ्गजो=हृष्टरोमा । चिरादित्यनेनैव वातपित्तयोरचिरेण वेगमोक्ष इति सूचयति ॥ ५ ॥

भा०टी०—श्लैष्मिक अपस्मार के लक्षण—फेन, शरीर, मुह, आँखे, सफेद हों, ठण्डक मालूम हो, रोयें खड़े हो जाँय, शरीर में भारीपन मालूम हो, सफेद सूरतों को देखे, होश देर में हो ॥ ५ ॥

### अथ सान्निपातिकापस्मारस्य लक्षणम् ।

सान्निपातिकलक्षणमाह—

सर्वैरेतैः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः ।
अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः ॥६॥
प्रस्फुरन्तं सुबहुशः क्षीणं प्रचलितभ्रुवम् ।
नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत् ॥ ७ ॥

( च० चि० अ० १५ श्लो० १०१ )

म०—सर्वैरित्यादि । स चेति स सान्निपातिकः । क्षीणस्यैकदोषजोऽप्यसाध्यः । एवमनवश्च बोध्यः । प्रस्फुरन्तं=प्रकम्पन्तम् । नेत्राभ्यां च विकुर्वाणमिति=नेत्राभ्यां विकृतिमासादयन्तम् ॥ ६ ॥ ७ ॥

भा०टी०—सान्निपातिक अपस्मार के लक्षण—तीनों दोषों के सम्बन्ध होने तथा तीनों दोषों से उत्पन्न अपस्मार के पूरे लक्षण होने से त्रिदोषज अपस्मार समझना चाहिए। यह त्रिदोषज अपस्मरा, तथा क्षीणता की अवस्था में और पुराना अपस्मार असाध्य होता है। चाहे वह एकही दोष से उत्पन्न हो ॥ ६ ॥

भा०टी०—जो अपस्मारी बहुत काँपता है, बलहीन होता है, भंव स्थिर नहीं रहतीं, आँखे टेढ़ी होजाँय तो अपस्मार अच्छा नहीं होता ॥ ७ ॥

### अथापस्मारस्य वेगकालाः ।

अपस्मारप्रकोपकालमाह—

पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः ।
अपस्माराय कुर्वन्ति वेगं किंचिदथान्तरम् ॥ ८ ॥

( सु० उ० अ० ६१ श्लो० १२ )

म०—पक्षादित्यादि । पक्षात् पैत्तिकः द्वादशाहाद्वातिकः, मासात् श्लैष्मिकः । द्वादशाहानन्तरं पक्षे वक्तव्ये तत्पूर्वं पक्षाभिधानं, तेनातोऽधिककालेनापि वेगं करोतीत्याहुः । किंचिदथान्तरमिति उक्तकालेभ्योऽर्वागपि दोषतारतम्यादिति ॥८॥

अपस्मार के आने का समय—वातिक अपस्मार बारह दिनों में, पैत्तिक पन्द्रह दिनों में और श्लैष्मिक एक महीने में आता है । कभी २ इन दिनों के अलावा बीच में भी अपस्मार हो जाता है ॥ ८ ॥

## अथापस्मारस्य सर्वदा वेगाकरणे सोदाहरणः प्रभावः ।

ननु वेगं कृत्वा अपस्मारारम्भको दोषोऽस्त्येव, तत् कुतः सर्वदा वेगं न कुरुते द्वादशाहादिष्वेव कुरुत इत्याह—

**देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित् ।**
**शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रयाः ॥ ९ ॥**

म०—देवे वर्षतीत्यादि । अयमभिसन्धिः—तेजोऽवनी-पवन—पयः-सनाथं विद्यमानमपि बीजं कालविशेष एवाङ्कुरं जनयति, कालविशेषस्यापि सहकारित्वात् । शरदीति तत्कालोचितबीजाभिप्रायेण, तेन कानिचिद्वर्षास्वपि जनयन्तीति । अयं न्यायः चातुर्थिकज्वरादिष्वपि बोध्यः ॥ ९ ॥

भा०टी०—अपस्मार का वेग करके दोष शरीर में रहतेही हैं, अतः रोजही उन्हें अपस्मार प्रकट करना चाहिए, लेकिन जिस प्रकार मेघके वरसते रहने पर भी बहुत से बीज जमीन में पडे रहते हैं, ऊगते नहीं, किन्तु समय आनेपर शरद ऋतु में ऊग जाते हैं, उसी प्रकार अपस्मार कारक दोष के रहने पर भी समय पा करही दोष अपस्मार प्रकट करते हैं ॥ ९ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां
रुग्विनिश्चयभाषाटीकायामपस्मारनिदानम् ।



## अथ वातव्याधिनिदानम् ।

### अथ वातव्याधेः सम्प्राप्तिपूर्वकं निदानम् ।

अपस्मारवद्वातविकाराणामप्याक्षेपकादीनां वेगकर्तृत्वादपस्मारानन्तरं वातव्याध्यारम्भः । ननु, वातव्याधिरिति कोऽर्थः ? किं वात एव व्याधिर्वातव्याधिः, उत वातेन जनितो व्याधिर्वातव्याधिः ? आद्ये स्वस्थेष्वपि प्रसङ्गः, द्वितीये ज्वरादिषु । उच्यते, व्याधिपदसामानाधिकरण्याद्विकृतो दुःखकारी वातो वातव्याधिः । उक्तं हि सुश्रुते—"पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च" (सु.नि.स्था.अ.१) इति । वातजनितोऽसाधारणव्याधिरिति विशेषणीयम्, तेनोभयत्राप्रसंगः । यच्चोक्तम्—"कफपित्तान्वितो वायुर्वायुरेव च केवलः । कुर्यादाक्षेपकम्" इत्यादि । तत्रारम्भको वायुरेव, पित्त—कफौ त्वनुबन्धाविति न विरोधः स्यात् । चरके हि द्विविधा व्याधय उक्ताः, सामान्यजा नानात्मजाश्चेति, तत्र सामान्यजा ये वातादिभिः समस्तैर्व्यस्तैर्वा जन्यन्ते, यथा—ज्वरादयः । नानात्मजा ये नियतैकदोषजन्याः, यथा—आक्षेपकादयो ये वातेनैव जन्यन्ते । न स्वतन्त्रेण पित्तेन कफेन वा; तथा ओष—चोषादयः पित्तेनैव, न वातेन कफेन च, तथा तृप्त्यादयः कफेनैव, न वातेन, न पित्तेन; एवं व्यवस्थिते वातव्याधिवत् पित्तकफव्याधी कस्मान्नोक्तौ ? उच्यते, वायोरतिबलत्वेन आशुकारित्वेन च गरीयस्त्वात्तद्विकाराणां दुःसाध्यत्वादाश्वेवात्ययकरत्वाद्विशिष्टचिकित्सात्वाद्वातव्याध्यभिधानं न तु कफपित्तव्याध्यभिधानम् । अत एव चरकसुश्रुतादिष्वपि वातरोगाध्याय एव निर्दिष्टो, न तु पित्त—कफ—रोगाध्यायः । चन्द्रिकाकारस्त्वाह—पित्तयोरूपरसादियोगाद् दूष्यविशेषयोगाद्वा हरिद्राचूर्णसंयोगवदत्यन्तविसदृशा रसादिमन्तो विकाराः पृथङ्नामानो जायन्ते, वायोस्तु रूपरसाद्यभावात् दूष्यनिरपेक्षा आक्षेपकादयो वातादनतिभिन्नरूपा नानात्मजाः, तेन वातविकाराः पृथगुच्यन्ते, न तु पित्त-कफविकारा इति । एतत्तु बकुलकरप्रभृतयो नानुमन्यते, चरकविरोधात् । चरके हि पित्त-कफयोरपि नानात्मजा उक्ताः, यथा—"अशीतिर्वातविकाराः, चत्वारिंशत् पित्तविकाराः, विंशतिः श्लेष्मविकाराः" ( च. सू. स्था. अ. २० )—इति । सुश्रुतेन तु शल्याध्यायिना पित्त-कफ-नानात्मजा न दर्शिताः, पराधिकारेषु न विस्तरोक्तिरित्यभिप्रायेणेति, अतो वातव्याध्यभिधानं, तस्य सम्प्राप्तिपूर्वकं निदानमाह—

**रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः ।**
**विषमादुपचाराच्च दोषासृक्स्रवणादपि ॥ १ ॥**

लङ्घनप्लवनात्यध्वव्यायामादिविचेष्टितैः ।
धातूनां संक्षयाच्चिन्ताशोकरोगातिकर्षणात् ॥ २ ॥
वेगसंधारणादामादभिघातादभोजनात् ।
मर्माबाधाद्गजोष्ट्राश्वशीघ्रयानापतंसनात् ॥ ३ ॥
देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ।
करोति विविधान् व्याधीन् सर्वाङ्गैकाङ्गसंश्रयान् ॥ ४ ॥

( च० चि० अ० २८ )

म०—रुक्षेत्यादि । लङ्घनमुत्पतनम्, उपवासस्यानशनशब्देन वमनादेश्च दोषस्रवणशब्देन वक्ष्यमाणत्वात् । प्लवनं=बाहुभ्यां जलप्रतरणम् । आमादिति= आमरसात्, तस्य कारणत्वं मार्गावरणद्वारेण न तु स्वरूपेण । आयासादिति पाठान्तरमयुक्तम्, तस्य व्यायामशब्देनोक्तत्वात् । मर्माबाधात्=मर्माभिघातात्, अपतंसनं=गजादिभ्यः शीघ्रयानेन पतनम्, उच्छ्वासावरोधो वा; धातुकर्षणमिति खरनादः ॥ १–४ ॥

भा०टी०—वातव्याधिका निदान—रूखा, ठण्डा, अल्प ( कम ) लघु-हल्का अन्न खाने से, अति मैथुन, रात में अधिक जागने से, बे समय चिकित्सा-संशोधन आदि करने से या वमन विरेचन निरूहण आदि करने पर ठीक तरह से उपचार न करने से, ज्यादा दस्त कय कराने और शोणितस्राव करने से, ( फस्त खोलन से ) लङ्घन=डाकने या कूदने से, अधिक परिश्रम से, और भी दूसरे बेजा काम करने से, धातुओं के क्षीण होने से, चिन्ता, शोक और रोग से, शरीर के क्षीण हो जाने से, मलमूत्र आदि के वेग रोकने से, शरीर में आम( आँव ) रहने से, चोट लगने से, उपवास करने से, मर्मस्थान वस्ति, शिर, हृदय आदि में चोट लगने से, हाथी, घोड़ा,ऊँट से गिर जाने पर, सवारी पर चढ़ने से, वायु कुपित होकर शरीर के खाली-शून्य स्रोतों में भर कर सब शरीर में अथवा किसी एक अंग में अनेक रोग पैदा कर देता है ॥ १–४ ॥

### अथ वातव्याधेः पूर्वरूपाणि ।

पूर्वरूपादिकमाह—

अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ।
आत्मरूपं तु यद्व्यक्तमपायो लघुता पुनः ॥ ५ ॥

( च० चि० अ० २८ )

**म०—अव्यक्तमित्यादि** । अव्यक्तमिति वक्ष्यमाणानां वातविकाराणां रूपमेवाव्यक्तं पूर्वरूपम्, न तु ज्वरादिवद्विशिष्टमन्यत् । **आत्मरूपमित्यादि** । तदेवं व्यक्तमात्मरूपं दोषादिभेदेन सम्यक् प्रकाशितं स्वलक्षणमित्यर्थः । अपाय इति वायोश्चलत्वेन स्तम्भ-संकोच-कम्पादीनां कदाचिदभावात्, यदुक्तम्—"गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकादिषु"—इति । लघुतेति शरीरस्य, वायुना सर्वधातुशोषणात् । अथवा अपायो लघुता इति सर्ववातविकाराणामपायोऽभावः, किं तदित्याह—लघुतेति । वातलिङ्गानां लघुता=अत्यल्पत्वेनावस्थानम्, न तु निःशेषनिवृत्तिः; यथा—बहिरायामनिवृत्तावपि न रूक्षत्वादिनिवृत्तिरित्याहुः ॥ ५ ॥

**भा०टी०**—वातव्याधिका अलग कोई खास पूर्व रूप नहीं होता, किन्तु पूरा २ लक्षण प्रकट न होनाही वात व्याधिका पूर्व रूप माना जाता है, और पूरा लक्षण प्रकट हो जाने पर रूप वात रोग के अच्छे हो जाने पर शरीर हल्का हो जाता है। क्यों कि रोग की हालत में वायु शरीर के सब धातुओं को सुखा देता है। वात रोगों का थोड़ा कम हो जाना रोग का अच्छा हो जाना समझा जाता है ॥ ५ ॥

### अथ वातप्रकोपेण संभवन्तो रोगाः ।

'करोति विविधान् व्याधीन्' इति यदुक्तं तव्याकरोति—

संकोचः पर्वणां स्तम्भो भङ्गोऽस्थ्नां पर्वणामपि ।
रोमहर्षः प्रलापश्च पाणि-पृष्ठ-शिरोग्रहः ॥ ६ ॥
खाञ्ज्य-पाङ्गुल्य-कुब्जत्वं शोथोऽङ्गानामनिद्रता ।
गर्भ-शुक्र-रजो-नाशः स्पन्दनं गात्रसुप्तता ॥ ७ ॥
शिरो-नासा-ऽक्षि-जत्रूणां ग्रीवायाश्चापि हुण्डनम् ।
भेदस्तोदोऽर्तिराक्षेपो मुहुश्चायास एव च ॥ ८ ॥

( च० चि० अ० २८ )

**म०—संकोच इत्यादि** । स्तम्भः पर्वणामेव । पाङ्गुल्यं=पङ्गुता । शोथोऽङ्गानामिति बाहु-मुखादीनाम् । अनिद्रतेत्यनेन अल्पनिद्रतेत्याहुः । गर्भशुक्ररजोनाश इति गर्भशय्याया वाताधिष्ठितत्वेन गर्भाग्रहणमिति **जेज्जटः**, गर्भादिविकृतिरप्यत्र द्रष्टव्या । स्पन्दनं=कम्पनम् । हुण्डनं=शिरःप्रभृतीनामन्तः प्रवेशो वक्रत्वं वा, धातूनामनेकार्थत्वात् । अन्ये त्वाहुः—शिरोहुण्डनं=केशभूमिस्फुटनं शङ्खललाटभेदश्च, नासाहुण्डनं=घ्राणनाशः, अक्षिहुण्डनमक्षिव्युदासः, जत्रुहुण्डनं=वक्षउपरोधः, ग्रीवाहुण्डनं=ग्रीवास्तम्भः । भेद इति ओष्ठ-दन्त श्रोण्यादीनाम् । तोदः=शूलम् । अर्तिः

पीडा, सा च पाद-पार्श्वश्रोत्रा-ऽक्षि-वक्षसामिति जेज्जटः। आक्षेपश्च आक्षेपकादिषु वक्ष्यमाणः। आयासः=श्रमः ॥ ६-८ ॥

भा०टी०—वात रोग—पोरों-जोड़ों का भीतर से सिकुड़ जाना और जकड़ जाना, हड़ फूटन, और पोरों में फूटन, रोमाञ्च, प्रलाप अंड-बंड बे मतलब बकना, हाथ, पीठ, शिर में पीड़ा, लँगड़ापन, पंगुता, कुबड़ापन, शरीर में सूजन होजाना, नींद कम आना, गर्भ धारण न होना या गर्भ का गिरजाना सूखना; वीर्य का कम होना, मासिक धर्म न होना, शरीर का फड़कना, शरीर का सुन्न होना, शिर, नाक, गर्दन, आँख, जत्रु ( हंसुली हड्डी ) का भीतर घुस जाना या ढेढ़ा हो जाना, अथवा शिरोहुण्डन=शिर की खाल का फट जाना, कनपुटी माथा में फूटन होना, नासाहुण्डन=गन्ध न मालूम होना, अक्षिहुण्डन=वक्षः आँख उठना,या रोशनी कम होना,जत्रुहुण्डन=वक्षःस्थल जकड़ जाना, ग्रीवाहुण्डन=गर्दन का जकड़ जाना ( गर्दन इधर उधर न घूम सके ) भेद, ओठ, दाँत= कमर आदि में फूटन ऐसी पीड़ा होना, तोद=सूई चुभोने के समान पीड़ा होना, अर्ति= मामूली पीड़ा होना,आक्षेप होना, ( इसका लक्षण आगे कहा जायगा ) विना परिश्रम किये थकाहट मालूम होना, ॥ ६ ८ ॥

**एवंविधानि रूपाणि करोति कुपितोऽनिलः ।**
**हेतु-स्थान-विशेषाच्च भवेद्रोगविशेषकृत् ॥ ९ ॥**

हेत्वित्यादि । हेतुविशेषः=आवरणादिः, यथा—श्लेष्मावृतो मन्यास्तम्भकारी; स्थानविशेषः=कोष्ठादिः,—यथा—पक्वाशयस्थोऽन्त्रकूजमित्यादि ॥ ९ ॥

भा०टी०—वायु कुपित होकर इन रोगों को पैदा करता है, किन्तु विशेष हेतु=पित्त या कफ से घेरे जानेपर और विशेष स्थान में वातके रहने से विशेष रोग होते हैं ॥ ९ ॥

### अथ स्थानविशेषगतवातस्य लक्षणानि ।

### तत्र कोष्ठाश्रित-कुपित-वातलक्षणम् ।

अथ स्थानविशेषाण्याह—

**तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्र-वर्चसोः ।**
**ब्रध्न-हृद्रोग-गुल्मार्शः पार्श्वशूलं च मारुते ॥ १० ॥**

( च० चि० अ० २८ श्लो० २२ )

म०-तत्रेत्यादि । कोष्ठशब्देनाविशेषात् सर्वे आमाशयादयो गृह्यन्ते, आमाशयादिगं तु पृथगपि वक्ष्यति । निग्रहोऽप्रवृत्तिः। ब्रध्नः=कोशरवङ्क्षणसन्धिः ॥१०॥

भा०टी०—यदि कोष्ठ=उदर मात्र में कहीं भी वात कुपित होता है तो पाखाना पेशाब नहीं होता, गुद्दिया, हृद्रोग, गुल्म, अर्श और पार्श्व शूल होता है ॥ १० ॥

अथ सर्वाङ्गकुपितवातलक्षणम् ।

सर्वाङ्गकुपिते वाते गात्र-स्फुरण- भञ्जनम् ।
वेदनाभिः परीताश्च स्फुटन्तीवास्य सन्धयः ॥ ११ ॥

( च० चि० अ० २८ श्लो० २१ )

भा०टी०—सब शरीर में वात कुपित होने से शरीर में फड़कन होती है, फूटन होती है, और सब जोड़ो में ऐसी जोरसे पीड़ा होती है कि मालूम होता है जोड़ की हड्डियाँ फूट रही हैं ॥ ११ ॥

अथ गुदस्थितवातस्य लक्षणम् ।

गुदास्थितवातलक्षणम्—

ग्रहो विण्-मूत्र-वातानां शूला-ऽध्माना-ऽश्म-शर्कराः ।
जङ्घोरु-त्रिक-पात्-पृष्ठ-रोग-शोषौ गुदे स्थिते ॥ १२ ॥

( च० चि० अ० २८ श्लो० २४ )

म०-ग्रह इत्यादि । अश्मा=अश्मरी । रोगो=रुजा । गुद इत्युत्तरगुदे पक्वाशय इत्यर्थः, न तु गुदमात्रे; तथा सति अश्मरीकर्तृत्वानुपपत्तेः ॥१२॥

भा०टी०—गुदस्थित वात का लक्षण—गुदस्थित वात में हवा नहीं खुलती, पाखाना पेशाब रुक जाता है, शूल और आध्मान( वायु से पेट फूल जाना ) होता है। अश्मरी ( पथरी ) तथा शर्करा रोग पैदा हो जाता है, जङ्घा=पेंडुरी, ऊरु=जाँघ, त्रिक=कमर, पात्=पैर और पीठ में पीड़ा जकड़ना और शोथ ( सूजन ) हो जाता है ॥१२॥

अथामाशयगतकुपितवातलक्षणम् ।

आमाशयकुपितवातमाह—

रुक्-पार्श्वोदर-हृन्-नाभेस्तृष्णोद्गार-विसूचिकाः ।
कासः कण्ठा-ऽऽस्य-शोषश्च श्वासश्चामाशयस्थिते ॥१३॥

( च० चि० अ० २८ श्लो० २५ )

भा०टी०—आमाशय में कुपित वायु के लक्षण—पँसुली, पेट, हृदय और नाभि में पीड़ा, तृष्णा, डकार, विसूचिका, कास, गला मुंहका सूखना, और श्वास होताहै ॥१३॥

अथ पक्वाशयस्थवातस्य लक्षणम् ।

पक्वाशयस्थवातलक्षणमाह—

पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च ।
कृच्छ्र-मूत्र-पुरीषत्वमानाहं त्रिकवेदनाम् ॥ १४ ॥

**म०—पक्वाशयस्थ इत्यादि** । ननु, पक्वाशयस्थ इति पुनरुक्तिः, गुदे स्थित इत्यनेनैवोक्तत्वात् । उच्यते, गुदे स्थित इति दृढबलस्य लक्षणम्, पक्वाशयस्थ इति सुश्रुतस्य; उभयलिङ्गोपन्यासस्तु सकललिङ्गप्रदर्शनार्थमित्यविरोधः ॥ १४ ॥

**भा०टी०—पक्वाशयस्थ वायु के लक्षण—अँतड़ियों में आवाज होना, शूल, गुड़ गुड़ाहट, पाखाना पेशाब कष्ट से होना आनाह–(पाखाना साफ न होना), त्रिक में पीड़ा।**

## अथ श्रोत्रादिगतवातलक्षणम् ।

श्रोत्रादिगतमाह—

**श्रोत्रादिष्विन्द्रियवधं कुर्याद्दुष्टसमीरणः ।**

( च० चि० अ० २८ श्लो० २६ )

**कान, आँख, जीभ, नाक, त्वचा, हाथ, पैर, स्वर यन्त्र, लिङ्ग, योनि, और गुदा, इन इन्द्रियों में वायु कुपित होनेसे इनमें अपने२ काम करने की शक्ति नहीं रहती॥१४॥**

## अथ त्वग्गतवातस्य लक्षणानि ।

त्वग्गतवातलक्षणमाह—

**त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते ।**
**आतन्यते सरागा च पर्वरुक् त्वग्गतेऽनिले ॥ १५ ॥**

( च० चि० अ० २८ )

**म०—त्वगित्यादि** आतन्यते=विस्तार्यत एव । त्वग्गते इति उपधातुरूपां त्वचं प्राप्ते । चन्द्रिकाकारस्तु त्वक्शब्देन रसमाह, तेन रसगत इत्यर्थः । हृदयस्थस्य च रसस्यामाशयसामीप्यादामाशयगतवातलक्षणेनैव तदधिगतेः । रसगतस्यानभिधानमिति कार्तिकः ॥ १५ ॥

**भा०टी०—त्वक् ( रस ) गत वात के लक्षण—त्वचा रूखी हो जाय, फट जाय, सुन्न हो जाय, पतरी हो जाय, काली हो जाय, सुई चुभाने ऐसी पीड़ा हो, तन जाय, लाल रहे, और पोरों में पीड़ा होय ॥ १५ ॥**

## अथ रक्तगतवातस्य लक्षणानि ।

असृग्गतवातलक्षणमाह—

**रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः ।**
**गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥१६॥**

( च० चि० अ० २८ )

म०—रुजा इत्यादि । अरूंषि=व्रणाः । भुक्तस्य स्तम्भः=भुक्तवतो गात्रस्तम्भः, सन्तर्पणेन रक्तस्य वृद्धेः । अन्ये त्वसृग्गतवातलक्षणं न पठन्ति, वातरक्तेन सहाभेदात्; तन्न, अत्र दुष्टो वायुः रक्तेनावृतः कुप्यति, वातरक्ते तु स्वकारणादुभावपि हस्त्यादिगमनकुपितौ विशिष्टसंप्राप्त्या हस्तपादगतावेव वातरक्ताख्यं विकारं जनयत इति ॥ १६ ॥

भा०टी०—रक्तगत वात के लक्षण—शरीर में तीव्र पीड़ा हो, जलन मालूम हो, रंग खराब हो जाय, कृशता और अरुचि हो, शरीर में फुन्सियां निकल आयें, और भोजन करने पर शरीर जकड़ जाय, क्योंकि भोजन-सन्तर्पण से रक्त की वृद्धि होती है ॥ १६ ॥

अथ मांस-मेदो गतवातस्य लक्षणानि ।

मांसमेदोगतवातलक्षणमाह—

गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा ।
सरुक् श्रमितमत्यर्थं मांस-मेदो-गतेऽनिले ॥१७॥
भेदोऽस्थिपर्वणां सन्धिशूलं मांस-बल-क्षयः ।
अस्वप्नः संतता रुक् च मज्जा-स्थि-कुपितेऽनिले ॥ १८ ॥

( च० चि० अ० २८ )

म०—गुर्वित्यादि । श्रमितं=श्रान्तं निःसहमित्यर्थः । मांसमेदोगतवायोरेकलिङ्गत्वम्, अदूरान्तरेण[1] प्रत्यासत्तेराश्रयाभेदात् । एवं मज्जास्थिकुपितेऽपि वाच्यम् ॥ १७-१८ ॥

भा०टी०—मांस मेदो गत वायु के लक्षण—शरीर में भारीपन होना, ऐसी पीड़ा होना जैसे दण्डा वा मुक्का से मारा हो, विना परिश्रम किये बहुत थकाहट मालूम हो और शरीर में पीड़ा हो, । मज्जा और हड्डी में वात कुपित होने से हड्फूटन, पोरों में दर्द, जोड़ों में दर्द, नाताकती, दुबलापन, नींद न आना, हर वखत पीडा होना, ये लक्षण होते हैं । फर्क यह है कि मांसगत वायु में शरीर में गांठें पड़ जाती हैं और उनमें बहुत पीडा होती है । मेदोगत वायु में भी गांठें निकल आती हैं परन्तु पीड़ा कम होती है, गांठे फोड़ा की सूरत में नहीं होतीं । अस्थिगत वायु में पीडा कभी शान्त भी हो जाती है लेकिन मज्जागत वायु में पीडा कभी भी कम नहीं होती ॥ १७—१८ ॥

1—अदूरान्तरेण अल्पदूरव्यवधानेन,प्रत्यासत्तेः सांनिध्यात्, अथवा सांनिध्यसंयोगस्य य आश्रयस्तस्याभेदात् । मांसमेदस्थवातस्याश्रयो मांसं मेदश्च तयोरल्पदूरवर्तित्वात् तद्गतवायोरप्येकलक्षणत्वमिति भावः ।

## अथ शुक्रधातुगतवातस्य लक्षणम् ।

शुक्रस्थवातलक्षणमाह—

क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा ।
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥१९॥

( च० चि० अ० २८ )

म०-क्षिप्रमित्यादि । गर्भमिति दुष्टशुक्रारब्धत्वाद्गर्भस्य । विकृतिमिति गर्भस्य शुक्रस्य च ॥१९ ॥

भा०टी०—शुक्र गत वायु के लक्षण—यदि शुक्र वायु से दूषित होता है तो उस शुक्र द्वारा गर्भ रहने पर वह जल्दी गिर पड़ता है, या जल्दी पैदा नहीं होता । और वीर्य मैथुन के समय, गिरताही नहीं, या जल्दी ही गिरजाता है । शुक्र रोग और गर्भ रोग पैदा हो जाते हैं ॥ १९ ॥

## अथ सिरागतवातस्य लक्षणम् ।

सिरागतवातलक्षणमाह—

कुर्यात्सिरागतः शूलं सिरा-ऽऽकुञ्चन-पूरणम् ।

( सु० नि० अ० १ )

म०-कुर्यादित्यादि । आकुञ्चनं=संकोचः पूरणं=स्थूलत्वम् यदुक्तमन्यत्र-"सुप्तास्तन्व्यो बृहत्यो वा सिरा वाते सिरागते"-इति ।—

भा०टी०—सिरागत वात के लक्षण--शिरा में वायु के कुपित होने से, सिरा यें सिकुड़ जाती और वायु से भर जाती है ।

## अथ स्नायुगतवातस्य लक्षणम् ।

स बाह्याभ्यन्तरायामं खल्लीं कौब्ज्यमथापि वा ॥२०॥
सर्वाङ्गैकाङ्गरोगांश्च कुर्यात्स्नायुगतोऽनिलः ।

( च० चि० अ० २८ )

म०-खल्लीं वक्ष्यमाणाम् ॥ २० ॥

भा० टी०—स्नायुगत वायु से बाहर और भीतर की तरफ आयाम, खल्ली और कुब्जता होती है सब शरीर में अथवा किसी एक अङ्गमें पीडा होती है ॥ २० ॥

### अथ सन्धिगतवातस्य लक्षणम् ।

सन्धिगतवातलक्षणमाह—

हन्ति सन्धिगतः सन्धीन् शूलाटोपौ करोति च ॥२१॥

म०—हन्तीत्यादि । हन्ति सन्धीगतः सन्धिनिति सन्धिविश्लेषं स्तम्भादिकं वा करोति ॥ २१ ॥

भा० टी०—सन्धियों में व कुपित होने से सन्धियां ढीली हो जाती हैं, फैलाने और सिकोड़ने से आवाज और शूल होता है ॥ २१ ॥

### अथ पित्त-कफावृतानां प्राणादिवायूनां लक्षणानि ।

पित्त-कफावृतानां प्राणादीनामर्धार्धश्लोकेन लिङ्गान्याह—

प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ।
दौर्बल्यं सदनं तन्द्रा वैरस्यं च कफावृते ॥२२॥
उदाने पित्तयुक्ते तु दाहो मूर्च्छा भ्रमः क्लमः ।
अस्वेद-हर्षौ मन्दोऽग्निः शीतता च कफावृते ॥२३॥
स्वेद-दाहौष्ण्य-मूर्च्छाः स्युः समाने पित्तसंवृते ।
कफेन सक्ते विण्मूत्रे गात्रहर्षश्च जायते ॥२४॥
अपाने पित्तयुक्ते तु दाहौष्ण्यं रक्तमूत्रता ।
अधःकाये गुरुत्वं च शीतता च कफावृते ॥२५॥
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ।
स्तम्भनो दण्डकश्चापि शूलशोथौ कफावृते ॥२६॥

( सु० चि० अ० १ )

म०—प्राण इत्यादि गात्रहर्षो—रोमाञ्चः । दण्डको=दण्डवत् स्तम्भः । परस्परं च प्राणादीनामावरणानि विंशतिर्भवन्ति । यदुक्तं चरके—"मारुतानां हि पञ्चानामन्योन्यावरणं शृणु" ( च. चि. स्था. अ. २८ )-इत्यादि । एषां च लक्षणं चरक एव द्रष्टव्यम् । विदेहे चैक एव वायुः स्थान-कर्म-भेदात् पंचेत्याहुः, संसर्गिद्रव्यत्वंनैकाश्रये जलवत्पृथगवस्थानानुपपत्तेः । ईशानोप्याह—यथैको देवदत्तः स्थानभेदात् गृहस्थो वानप्रस्थः, कर्मभेदात् कुम्भकारो मालाकार इत्युच्यते, तथा वायुरपीति ॥ २२-२६ ॥

भा०टी०--प्राण वायु के पित्तावृत होनेसे, छर्दि, दाह, होता है। कफावृत प्राण वायु से दुर्बलता, सुस्ती, तन्द्रा, मुह फीका हो जाता है। उदान वायु के पित्तावृत होने से दाह, मूर्च्छा, भ्रम, ( चक्कर ) क्लम-और कफावृत होने से पसीना नहीं आता, रोमाञ्च मन्दाग्नि तथा ठण्ड,मालूम होती है। समान वायु के पित्तावृत होने पर पसीना, दाह, गरमी; मूर्च्छा, होती है, कफावृत होने पर पाखाना पेशाब नहीं होता और रोमाञ्च हो जाता है। अपान वायु के पित्तावृत होने पर दाह, गर्मी, लालपेशाब होता है, कफावृत होने पर नाभि से नीचे भारीपन और ठण्डक मालूम होती है। व्यान वायु के पित्तावृत होने से दाह; हाथ पैर पटकना, क्लम, और कफावृत होने से शरीर दण्डा की तरह जकड़ जाताहै पीड़ा होती है और शोथ हो जाता है ॥२२—२६॥

## अथ आक्षेपकस्य वायोर् लक्षणम् ।

( Convalsions ) कनूरहल्शन्स

आक्षेपकस्य सामान्यलक्षणमाह—

यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः ।
तदाऽऽक्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ॥ २७ ॥
मुहुर्मुहुश्चाक्षेपणादाक्षेपक इति स्मृतः ।

( सु० नि० अ० १ )

म०–यदा त्वित्यादि । सर्वा इति ऊर्ध्वाधस्तिर्यग्गाः । आक्षिपति=देहं हस्त्यारूढपुरुषस्येव गात्रं चालयति । मुहुश्चर इति हेतुगर्भविशेषणम् । 'बहिश्चर' इति पाठान्तरे कोष्ठाद्बहिः शाखागतश्चरन्नाक्षेपकं करोतीत्यर्थः।चन्द्रिकाकारस्तु एतन्नानुमन्यते,स्थानगाम्भीर्यादाक्षेपकस्य तदारम्भकवायोर्बहिश्चरत्वायुक्तत्वात्॥२७॥

भा०टी०—आक्षेपक के सामान्य लक्षण--जब वायु नीचे ऊपर और तिरछे जाने वाली धमनियों में कुपित होता है और बार २ घूमता है तो रोगी को अपने शरीर में ऐसा हचका मालूम होता है जैसे हाथी पर चढ़ने से हचका लगता है। यह हचका बार २ होता है, इसी लिए इसे आक्षेपक कहते हैं ॥ २७ ॥

## अथापतन्त्रकापतानकयोर्लक्षणानि ।

अस्यैवावस्थाविशेषावपतन्त्रकापतानकावाह[1]—

[ Hysteria Minar ] हिस्टीरिया माइनर

क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते ॥ २८ ॥
पीडयन् हृदयं गत्वा शिरः शङ्खौ च पीडयन् ।

१ अस्यैवाक्षेपकस्यैवावस्थाविशेषौ न ततो भिन्नावित्यर्थः ।

धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तदा ॥ २९ ॥
स कृच्छ्रादुच्छ्वसेच्चापि स्तब्धाक्षोऽथ निमीलकः ।
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ॥ ३० ॥
दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति ।
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ॥ ३१ ॥
वायुना दारुणं प्राहुरेके तदपतानकम् ।

( वा० नि० अ० १५ )

म०—क्रुद्ध इत्यारभ्य एके तदपतानकमित्यन्तेन । स्वैः कोपनैरित्यनेन रूक्षादिकुपितः स्वतन्त्रो नत्वावरणकुपित इतीशानः । निमीलिताक्षः स्तब्धाक्षो वा भवतीत्यर्थः । आक्षेपकश्चतुर्विधो भवति; दण्डापतानकोऽभ्यन्तरायामो बहिरायामोऽभिघातजश्चेति । दृढबलेन यद्यपि आक्षेपकात् पूर्वमन्तरायाम-बहिरायामौ पठितौ, तथाऽप्याक्षेपकविशेषावेतौ मन्तव्यौ, सुश्रुतदर्शनात् ॥२८–३१॥

भा०टी०—अपतन्त्रक अपतानक के लक्षण—अपने कारणों से वायु कुपित होकर अपने स्थान-पक्वाशय से ऊपर जाकर हृदय, शिर, और कनपटी में पीड़ा करता हुआ शरीर को धनुष की तरह नमाय देता है, हचका देता है और वेहोशी पैदा कर देता है। उस समय सांस बड़े कष्ट से आती है। आँखें बन्द रहती हैं या एकदम खुली रहती हैं, बन्द नहीं होतीं, कबूतर की तरह गले से आवाज आती है। वेहोशी रहती है। इसे अपतन्त्रक कहते हैं। आँख से देखने की शक्ति नहो, होश एकदम नहो और गला घरघराता हो। कुछ देर के लिए हृदय से वायु के अलग हो जाने पर आराम हो। और फिर हृदय वायुसे घिर जाने पर रोगी मूर्च्छित हो तो इसे कोई २ अपतानक कहते हैं। यह रोग केवल वायु से होता है ॥ २८—३१ ॥

### अथ दण्डापतानकस्य लक्षणम् ।

( Plenostonos ) प्लेनोस्थोटोनस

एषां लक्षणमाह—

कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति ॥३२॥
दण्डवत्स्तम्भयेद्देहं स तु दण्डापतानकः ।

( सु० नि० अ० १ )

म०-कफान्वित इत्यादि । भृशं कफान्वित इत्यनेन पित्तमपि न वार्यत इत्याहुः । चरके त्वस्यासाध्यत्वं केवलवातजत्वेन द्रष्टव्यम् । यदाह "पाणि-पाद शिरः-पृष्ठ-श्रोणीः स्तभ्नाति मारुतः। दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः" ( च. चि. स्था. अ. २८ )-इति । तास्विति सर्वधमनीषु ॥ ३२ ॥

भा०टी०—यदि वायु कफ के साथ सब धमनियों में कुपित होकर भर जाती है तो शरीर दण्डा की तरह जकड़ ( कड़ा ) जाता है, किसी तरफ नमता नहीं। इसे दण्डापतानक कहते हैं ॥ ३२ ॥

अथ धनुर्वातस्य लक्षणम् ।

( Tetanus ) टिटे नस—

अन्तरायामबहिरायामयोः साधारणं रूपमाह—

धनुस्तुल्यं नमेद्यस्तु स धनुस्तम्भसंज्ञकः ॥ ३३॥

( सु० नि० अ० १ )

म०—धनुस्तुल्यमित्यादि ।

जिस रोग में वायु से शरीर धनुष की तरह पेटकी तरफ से झुक जाय, उसे धनुस्तम्भ कहते हैं ॥ ३१ ॥

अथाभ्यन्तरबाह्यायामयोर्लक्षणम् ।

( Emprosthotonos ) एम्प्रोस्थोटोनस

विशेषलक्षणमाह—

अङ्गुली गुल्फ-जठर-हृद्-वक्षो-गल-संश्रितः ।
स्नायुप्रतानमनिलो यदाऽऽक्षिपति वेगवान् ॥३४॥
विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ।
अभ्यन्तरं धनुरिव यदा नमति मानवम् ॥३५॥
तदाऽस्याभ्यन्तरायामं कुरुते मारुतो बली ।
बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च ॥३६॥
तमसाध्यं बुधाः प्राहुर्वक्षः—कट्यूरु—भञ्जनम् ।

( सु० नि० अ० १ )

म०—अङ्गुलीत्यादि । वक्षो=बाहुद्वयान्तरम् । हृदयं=तदभ्यन्तरं द्व्यङ्गुलम् । स्नायुप्रतानं=लतावदनेकप्ररोहं स्नायुजालम्, स्नायुरित्युपलक्षणम्, तेन सिरा-कण्डरयोरपि ग्रहणम् । यदुक्तं तन्त्रान्तरे—"महाहेतुर्बली वायुः सिराः

सस्नायु–कण्डराः । मन्या–पृष्ठाऽऽश्रिता बाह्याः संशोष्यायामयेद्बहिः"–इत्यादि । अभ्यन्तरायामं=क्रोडे नतं, बाह्यायामं=पृष्ठे नतम् । अन्तरायाम–बहिरायामाभ्यां तन्त्रान्तरोक्तकुब्जस्यावरोधः । यदुक्तम्–'हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत्"–इति ॥ ३४–३६ ॥

भा०टी०—अँगुली,गुल्फ ( पैरके इधर उधर दो गांठ ) जठर(पेट) हृदय,वक्षः स्थल ( छाती ) और गला में वायु जाकर जब बड़े वेगसे स्नायु समूहों को बटोरकर तानता है, तब आंखें स्तब्ध हो जाती हैं, जबड़ा बैठ जाता है, पसवाड़ा ढीला हो जाता है, मुह से कफ निकलता है और पेट को अ र आदमी का शरीर आगे की तरफ झुक जाता है। इसे अभ्यन्तरायाम कहते हैं। इसी प्रकार जब शरीर पीठ की ओरसे पीछे को तरफ झुक जाता है तो बाह्यायाम कहते हैं। इसमें छाती; कमर, और जाँघ टूटसी जाती हैं, यह बाह्यायाम असाध्य होता है ॥ ३४—३६ ॥

अथाक्षेपकस्य लक्षणान्तरम् ।

उक्तानामाक्षेपकप्रकाराणां कफपित्तानुबन्धमाह—

**कफपित्तान्वितो वायुर्वायुरेव च केवलः ॥ ३७ ॥**
**कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ।**

( सु० नि० अ० १ )

म०–कफपित्तान्वित इत्यादि । एतच्च दण्डापतानकलक्षणमेव जेज्झटेन व्याख्यातम् । पित्तकफानुबन्धश्चात्र शैत्य–शोथ–गुरुत्वानीत्यादिनोक्तलक्षण एव बोध्यः । चतुर्थमभिघातजमिति दण्डापतानकादि त्रितयापेक्षया चतुर्थत्वम्, अभिघातजं=दण्डाद्यभिघातकुपितवातजम्, अस्य च लक्षणम्–"यदा तु धमनीः सर्वाः" इत्यादिनोक्तसामान्यलक्षणं द्रष्टव्यम् ॥ ३७ ॥

भा०टी०-वायु कफ और पित्तसे मिलकर या अकेलेही चौथा अभिघातज आयाम पैदा करता है। किसी कारण से चोट पहुँचने पर यह अभिघातज आयाम होता है। इसमें 'यदातुधमनीः' इस पद्य द्वारा जो आक्षेपक का सामान्य लक्षण लिखा है वही लक्षण होता है ॥ ३७॥

अथासाध्यापतानकस्य लक्षणम् ।

असाध्यत्वमाह—

**गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः ॥ ३८ ॥**
**अभिघातनिमित्तश्च न सिद्ध्यत्यपतानकः ।**

( सु० नि० अ० १ )

म०-गर्भपातेत्यादि । गदाधरस्त्वाह—कफपित्तान्वित इत्यादिना निमित्त भेदेनाक्षेपकश्चतुर्धा इति, तद्यथा—एकः कफान्वितेन वातेन, द्वितीयः पित्तान्विते-तृतीयः केवलेन, चतुर्थोऽभिघातेनेति। अत्र पक्षे गर्भपातशोणितातिस्रावजौ केवलवातेन ग्राह्यौ, एतेषां च मुहुर्मुहुराक्षेपणं बोध्यम्, आक्षेपकविशेषत्वात् ॥ ३८ ॥

भा०टी०—गर्भपात होने से, खूनके अधिक बहने से, और अभिघात से उत्पन्न अपतानक अच्छा नहीं होता ॥ ३८ ॥

## अथ पक्षावधस्य लक्षणानि ।

पक्षवध Hemiplegia हेमिप्लेजिआ
सर्वांगरोग=General Paralysis जनरलपरालिसिस

पक्षवधमाह—

गृहीत्वाऽर्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च ॥३६॥
पक्षमन्यतरं हन्ति सन्धिबन्धान्विमोक्षयन् ।
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः॥ ४० ॥
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः
सर्वाङ्गरोगस्तद्वच्च सर्वकायाश्रितेऽनिले ॥४१॥

( वा० नि० अ० १५ )

म०-गृहीत्वेत्यादि अर्धमिति अर्धमर्यादया अर्धनारीश्वरवत् । पक्षं=बाहु कक्षपार्श्वादिभागम्, अन्यतरामिति वामं दक्षिणं वा । सन्धिबन्धान् कफसहित-स्नायुभिर्वृतान् मोक्षयन्निति गदाधरः । अत एव सिराः स्नायूर्विशोष्येत्युक्तम् । अर्धकाय इत्युक्तेऽपि कृत्स्नग्रहणं युगपत् सर्वार्धाङ्गव्याप्त्यर्थम् । अकर्मण्य=ईषच्चेष्टाक्षमः । विचेतनः, ईषत्स्पर्शादिज्ञानवानित्यर्थः । तद्वच्चेत्यनेन सिराः स्नायूर्विशोष्य चेत्यादिसंप्राप्तिं लक्षणं चातिदिशति ॥ ३९–४१ ॥

भा०टी०—कुपित वायु शरीर में एक तरफ की शिरा और स्नायु को सुखाकर एक अलंग-बाँया या दहिना हिस्सा मार देता है। जिस हिस्से में ऐसा होता है उस हिस्से में सब जोड़ ढीले हो जाते हैं, पूरा आधा शरीर बेकाम हो जाता है। स्पर्शज्ञान कम हो जाता है। कोई इसे एकाङ्ग रोग और कोई पक्षवध कहते हैं। इसी प्रकार यदि सारे शरीर में वायु कुपित होकर उसे बेकाम कर देता है तो वह सर्वाङ्ग रोग कहलाता है॥ ३९—४१ ॥

---

१—अयं रोगो लोके "फालिज" इति नाम्ना कथ्यते ।

## अथ पक्षाघातस्य साध्यासाध्यत्वम् ।

तस्यैव साध्यासाध्यज्ञानार्थमाह—

दाह-सन्ताप-मूर्च्छाः स्युर्वायौ पित्तसमन्विते ।
शैत्य-शोथ-गुरुत्वानि तस्मिन्नेव कफान्विते ॥ ४२ ॥
शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ।
साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम् ॥ ४३ ॥

म०—दाहेत्यादि । एतच्च लक्षणमन्यत्रापि वातरोगे द्रष्टव्यम्, अत एव सामान्येन वायाविति कृतवान् । शुद्धः=केवलः । अन्येनेति कफेन पित्तेन वा । क्षयहेतुकमिति धातुक्षयकुपितशुद्धवातमिति ॥ ४२-४३ ॥

भा० टी०—यदि वायु पित्त के साथ होता है तो शरीर के बाहर और भीतर जलन होती है और बेहोशी रहती है । कफ के साथ होने पर शीत, शोथ, गौरव, होता है । शुद्ध ( केवल ) वायु से उत्पन्न पक्षाघात कृच्छ्र साध्य होता है । कफ या पित्त के साथ होने पर साध्य और धातुक्षय से कुपित वायु द्वारा उत्पन्न पक्षाघात असाध्य होता है ॥ ४२-४३ ॥

## अथार्दितरोगस्य लक्षणम् ।

( Facial Paralysis ) फेसियलपरलिसिस्

अर्दितमाह—

उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि वा ।
हसतो जृम्भतो वापि भाराद्विषमशायिनः ॥ ४४ ॥
शिरो-नासौष्ठ-चिबुक-ललाटेक्षण-सन्धि-गः ।
अर्दयत्यनिलो वक्त्रमर्दितं जनयत्यतः ।
वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्तते ॥ ४५ ॥
शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् ।
ग्रीवा-चिबुक-दन्तानां तस्मिन्पार्श्वे च वेदना ॥ ४६ ॥

---

१-दाहो बाह्यः, सन्ताप आभ्यन्तरः ।

[ यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ।
वायुरूर्ध्वं त्वचि स्वापस्तोदो मन्या-हनु-ग्रहः ॥]
तमर्दितमिति प्राहुर्व्याधिं व्याधिविचक्षणाः ।

( सु० नि० अ० १ )

**म०**—उच्चैरित्यादि। अर्दयति=पीडयति। अपवर्तते=वक्रीभवति । चलति=कम्पते । वाक्सङ्गोऽनिर्गमो वचनस्य । आदिशब्देन भ्रू-गण्डादीनां ग्रहणम् । वैकृतं वेदनास्फुरणवक्रत्वादिकम् । ग्रीवेत्यादि, यस्मिन् पार्श्वेऽर्दितं तस्मिन् ग्रीवादीनां वेदनेति योज्यम् । तन्त्रान्तरे तु मुखार्धवच्छरीरार्धव्यापकोऽप्यर्दितः पठितः । यदाह दृढबलः-"अर्धे तस्मिन् मुखार्धे वा केवले स्यात्तदर्दितम्" (च.चि.स्था.अ.२८)-इति । ननु,यद्येवं तदा अर्दितार्धाङ्गवातयोःको भेदः? उच्यते, वेगित्वेनार्दिते कदाचिद्वेदना भवति, अर्धाङ्गवाते तु सर्वदैवेति भेदः, अथवा यथोक्तः सर्वलिङ्गोऽर्दितस्तद्विपरीतस्त्वर्धाङ्गवात इत्याहुः सुश्रुतेन तु मुखमात्र एवार्दितःपठितः, अर्धशरीरस्यार्धाङ्गवातेन लब्धत्वात् । स एवात्र माधवेन लिखितः ॥४४—४६॥

**भा० टी०**-अर्दित के लक्षण-ज्यादा जोर से बोलना, कड़ी चीज-सोपारी वगैरह खाना, जोर से हँसना, और जँभाई लेना, शिर से बोझ ढोना,ऊँची खाली जगह सोना, या गर्दन टेढी करके सोना, इनकारणों से वायु कुपित होकर शिर, नाक, ओठ चिबुक-(ठुड्डी) ललाट-माथा और नेत्रों की सन्धि में जाकर मुख को पीड़ित करके अर्दित रोग पदा कर देता है । इसमें आधा मुह ( बाँया या दहिना ) टेढ़ा हो जाता है, गर्दन मुड़ जाती है । शिर काँपता है, बोल साफ़ नहीं निकलती । आँख, गण्डस्थल, नाक, भौं टेढ़ी हो जाती है, फरकती है और इनमें पीड़ा होती है । जिस तरफ दाँयें या बाँये यह अर्दित रोग होता है उस तरफ गर्दन टेढ़ी, और दाँतों में पीड़ा होती है। रोग के जानकार लोग इसे अर्दित (लकवा) कहते हैं। कोई २ इसमें ये लक्षण होना भी मानते हैं-जैसे-शुरू में रोयें खड़े हो जाना, मुह काँपना, नेत्र का रंग मैला हो जाना, डकार आना, त्वचा सुन्न हो जाना,तोद होना,मन्या और जबड़ा जकड़ जाना । सुश्रुत में खाली मुंह में ही अर्दित का होना माना गया है । परन्तु चरक आधे शरीर में भी मानते हैं। तब प्रश्न यह होता है कि फिर एकांग—अर्धाङ्ग वात और आधे शरीर में होनेवाले अर्दित में फर्क क्या रह जायगा ? उत्तर यह मिलता है कि अर्धांग वात में सदा पीड़ा होती है और अर्दित में वेग के समय होती है । अथवा पूरा लक्षण होने पर अर्दित और कम लक्षण होने पर अर्धांग वात समझना चाहिए ॥ ४४—४६ ॥

---

१-लोके "लकवा" इति प्रसिद्धः ।

## अथार्दितस्यासाध्यलक्षणम् ।

तस्यासाध्यलक्षणमाह—

क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ॥ ४७ ॥
न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च ।

( सु० नि० अ १ )

म०—क्षीणस्येत्यादि । अनिमिषाक्षस्य=निमेषासमर्थचक्षुषः । प्रसक्ताव्यक्तभाषिणं इति प्रसक्तं=प्रकर्षेण सक्तम्=अप्रवृत्तम्, अव्यक्तं=प्रपीडितवर्णपदं भाषितुं शीलं यस्य स तथा । अन्ये तु प्रसक्तं=निरन्तरमाहुः; तन्न, चरके—दीना जिह्वा समुत्क्षिप्ता काले सज्जति चास्य वाक्" ( च. चि. स्था. अ. २८ ) इति वचनात् । त्रिवर्षमिति अतीतवर्षत्रयम्, अथ वा त्रयाणां=मुख-नासा-चक्षुषां वर्षः=स्रवणं यत्र तत्तथेत्याहुः ॥ ४७ ॥

भा० टी०—अर्दित के असाध्य लक्षण—जो रोगी अधिक कमजोर होता है, जिसकी पलकें नहीं पड़तीं, जिसकी आवाज साफ़ नहीं निकलती ऐसा अर्दित रोग, तथा तीन वर्ष का पुराना, अथवा मुख नाक और आँख से जिसके कफ पानी बहा करता है और जो सदा काँपता है, इस प्रकार का अर्दित अच्छा नहीं होता ॥ ४७ ॥

## अथाक्षेपकादिवातरोगाणां वेगित्वम् ।

आक्षेपकादीनामर्दितान्तानां वेगित्वमाह—

गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकादिषु ॥ ४८ ॥

( वा० नि० अ० १५ )

म०—गत इत्यादि । स्वास्थ्यं=पीडालाघवं, भारापगमे सुखित्वव्यपदेशवत्

भा० टी०—आक्षेपक अर्दित रोग में वायु का वेग ( जोर ) कम हो जाने पर रोगी को आराम मिलता है—मालूम होता है कि रोग नहीं है ॥ ४८ ॥

## अथ हनुग्रहस्य लक्षणम् ।

( Dislocation of the lower jaw. ) डिसलोकेशन आफदि लोअर जा

हनुग्रहमाह—

जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः ।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनुम् ॥ ४९ ॥

करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुग्रहः स तेन स्यात् कृच्छ्राच्चर्वण-भाषणम् ॥ ५० ॥

( वा० नि० अ० १५ )

म०-जिह्वेत्यादि । हनुमूलस्थः=कपोलमूलस्थः । हनुं स्रंसयित्वाऽधः कृत्वा विवृत्तास्यत्वम्=आस्यविवृतिम्, संवृतास्यताम्=आस्यसंवृतिं, च, वायोरनियतकारित्वात् ॥ ४९ ॥ ५० ॥

भा०टी०–हनुग्रह का लक्षण–अधिक जीभ छीलने से, सूखी चीज–चना वगैर खाने से, ज्यादा जोरसे जँभाई लेने से, हनुमूलस्थित वायु कुपित होकर हनु=जबड़ाको ढीला और नीचेकी तरफ खसका देता है उससे मुह खुला रहताहै मुह को रोगी बाये रहताहै । अथवा मुहबंद होताहै–दाँत बैठ जाता है । दोनों हालत में आदमी न तो बोल सकताहै और न कोई चीज चबा सकताहै । इसे हनुग्रह कहते हैं ॥ ४९—५० ॥

## अथ मन्यास्तम्भस्य लक्षणम् ।

( Stiffness of the neck, Torticolis or Wry neck. )

स्टिफनेस आफ दि नेक, टार्टिकोलिस, राइ नेक

मन्यास्तम्भमाह—

दिवास्वप्नाऽऽसनस्थानविवृत्तोर्ध्वनिरीक्षणैः ।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाऽऽवृतः ॥ ५१ ॥

( सु० नि० अ० १ )

म०-दिवास्वप्नेत्यादि । स एवेति वातः ॥ ५१ ॥

भा०टी०—मन्यास्तम्भके लक्षण-दिनमें सोनेसे, गर्दन नीची या ऊँची कर अधिक बैठने तथा खड़े रहने से, आँख फाड़कर ऊपर की तरफ अधिक समय तक देखने से, वायु विगड़ कर कफके साथ होकर मन्या=गर्दन की पीछे रहने वाली शिराको स्तब्ध ( जकड़ ) देता है, इसको मन्यास्तम्भ कहते हैं । इसमें गर्दन इधर उधर घूमती नहीं ॥ ५१ ॥

---

( १ ) विकृतोर्ध्वनिरीक्षणैरिति पाठान्तरम् ।

## अथ जिह्वास्तम्भस्य लक्षणम् ।

( Paralysis of the Tounge Glosal Palsy ) परलिसिसआफदि टंग, ग्लोसल पैल्सी

जिह्वास्तम्भमाह—

वाग्वाहिनी-सिरा-संस्थो जिह्वां स्तम्भयतेऽनिलः ।
जिह्वास्तम्भः स तेनान्न—पान—वाक्येष्वनीशता ॥ ५२ ॥

( वा० नि० अ० १५ )

म०-वागित्यादि । वाग्वाहिनीसिरासंस्थ इति वाग्वाहिनी या सिरा तत्र संस्थ इति योज्यम्, समस्तपक्षे "पुंवत् कर्मधारयजातीयदेशीयेषु=" इत्यनेन पुंवद्भावप्राप्तेः । अन्नपानवाक्येष्वनीशतेति अन्नपानाभ्यवहारवचनेषु असामर्थ्यम् ॥ ५२ ॥

भा०टी०—वाग्वाहिनी सिरामें वायु कुपित होकर जीभको जकड़ देता है–बेकाम कर देता है, जिससे आदमी खा पी नहीं सकता, और न बोल सकता है ॥ ५२ ॥

## अथ सिराग्रहस्य लक्षणम् ।

सिराग्रहमाह—

रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः ।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात्सिराग्रहः ॥ ५३ ॥

( वा० नि० अ० १५ )

म०-रक्तमित्यादि । मूर्धधरा इति ग्रीवागताः, तासां रूक्षत्वं वेदनावत्त्वं कृष्णत्वं च कुर्यात् । सोऽसाध्य इति स्वरूपेणैव, काकणकुष्ठवत् । 'शिरोग्रह' इति पाठान्तरे शिरोधारकसिरादुष्ट्या शिरोवेदनाकारित्वात् शिरोग्रह इति व्यपदेशः, लक्षणं तु तदेव ॥ ५३ ॥

भा०टी०—सिराग्रह के लक्षण—कुपित वायु रक्तमें प्राप्त होकर गर्दन की शिराओं को रूखी, काली और पीडायुक्त कर देता है । यह सिराग्रह रोग असाध्य होता है ॥ ५३ ॥

## अथ गृध्रसीरोगस्य लक्षणम् । ( Sciatica ) सायटिका

गृध्रसीमाह—

स्फिक्पूर्वा कटि-पृष्ठोरु-जानु-जङ्घा-पदं क्रमात् ।
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ ५४ ॥
वाताद्, वातकफात्तन्द्रागौरवारोचकान्विता ।

( च० चि० )

म०-स्फिक्पूर्वेत्यादि । स्फिक् पूर्वा प्रथमतो ग्राह्या स्तम्भरुक्तोदैर्यस्याः सा स्फिक्पूर्वा । ईशानस्तु पूर्वा=प्रथमा गृध्रसी वातादिति योजयति, एषा च व्याख्या स्फिक्शब्दस्य नपुंसकत्वेन 'पूर्वा स्फिक् कटीपृष्ठ'—इत्यादि पाठेन वा उपपद्यते नान्यथा । 'स्फिक्पूर्व, इति पाठान्तरं जानु-जङ्घा-पदमित्यनेन योज्यम् । क्रमादिति न युगपत् । वातादिति छेदः । वातकफारब्धा गृध्रसी, सा उक्तवातलक्षणयुक्ताऽपि गौरवादियुक्ता भवतीति गृध्रसीद्वयमुक्तम् ॥ ५४ ॥

भा० टी०—गृध्रसी के लक्षण-पहले कूल्हों में स्तम्भ, पीड़ा, तोद-सूई चुभोने की तरह कोंच, हो बाद ज्यों २ बढ़े त्यों २ पीठ, जांघ, जानु=घुटना और पैर में पीड़ा वगैरह हो और ये अङ्ग वार २ फड़के यह रोग केवल वात से और वात कफ दोनों से होता है, ऊपर कहे गये लक्षणों से वात से और तन्द्रा, अरुचि, गौरव के होने से वात कफ से जानना चाहिए ॥ ५४ ॥

## अथ गृध्रस्या विशेषलक्षणानि ।

गृध्रस्याः पुनरपि विशेषलक्षणमाह—

वातजायां भवेत्तोदो देहस्यापि प्रवक्रता ( ? ) ।
जानु-कट्यूरु-सन्धीनां स्फुरणं स्तब्धता भृशम् ॥ ५५ ॥
वातश्लेष्मोद्भवायां तु निमित्तं वह्निमार्दवम् ।
तन्द्रामुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥ ५६ ॥

भा० टी०-वातज गृध्रसी में तोद, देह का टेढ़ा होना, घुटना, कटि, ऊरु और जोड़ों में फरकन तथा स्तब्धता ( जकड़ना ) होती है । और वात कफजमें तन्द्रा, मुह से कफ लार का गिरना, अरुचि होती है । वात कफज गृध्रसी का कारण मन्दाग्नि होता है ॥ ५५-५६ ॥

### अथ विश्वाचीरोगस्य लक्षणम् ।

( Arm Paisy ) आर्म पैसी

विश्वाचीमाह—

तलं प्रत्यङ्गुलीनां याः कण्डरा बाहुपृष्ठतः ॥५७॥
बाह्वोः कर्मक्षयकरी विश्वाची चेति सोच्यते ।

( सु० नि० अ० १ )

म०—तलमित्यादि । तलं=हस्तस्योपरिभागः, तलशब्दोऽत्र उपरिवचनः, यथा—भूतलमिति गयदासः । तेनायमर्थः-बाह्वोः पृष्ठं बाहुपृष्ठं तत आरभ्य हस्ततलं लक्षीकृत्याङ्गुलीनां याः कण्डरास्ताः संदूष्य बाह्वोः कर्मक्षयकरी सा विश्वाची बाह्वोः कर्म ग्रहणाकुञ्चनादिं, द्वित्वं चात्र संभवपरं तेनैकबाहावपि भवति वातरक्तवत् । विश्वाची चेति चकारेण गृध्रसी-विश्वाच्योः खल्लीसंज्ञां दर्शयति, तयोरपि करमूलावमोटनकारित्वात् यदुक्तं हारीते-"विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता"—इति गयदासः चक्रस्त्वाह—चरके 'खल्ली तु पादजङ्घोरुकरमूलावमोटनी' ( च. चि. स्था. अ. २८ ) इत्यनेन विश्वाच्याः पृथगेव खल्ली पठिता, सुश्रुतेन तु खल्ली न पठितैव; नहि तेन तन्त्रान्तरोक्तसर्वविकाराः पठ्यन्ते, चरकोक्तपरस्परवातावरणलक्षणमेव पठितम्, हारीतेन तु तीव्ररुजायोगात् गृध्रसीविश्वाच्योः खल्लीत्वं पठितम्, भवति हि धर्मान्तरयोगात् कस्यचिद्विकारस्य रोगान्तरत्वम्, यथा—अष्ठीलैव प्रत्यष्ठीला, अश्मर्येव शर्करा, पाण्डुरोग एव कामलेत्यादि ॥ ५७ ॥—

भा० टी०—विश्वाची के लक्षण-बाहु पृष्ठ से हाथ तक हर एक अँगुलियों की जो कण्डरायें(मोटी नसें) होती हैं,उन में वायु घुस कर पीड़ा पैदा करता है, और बाहु को बेकाम कर देता है-बाहु के उठाने में, फैलाने में सिकोड़ने में किसी चीज को थामने में तकलीफ होती है, इसे विश्वाची रोग कहते हैं ॥ ५७ ॥

### अथ क्रोष्टुकशीर्षस्य लक्षणम् ।

( Synovitis of the Knee joints ) सिनाविटीज आफ दि नी ज्वाइन्ट्स्

क्रोष्टुकशीर्षमाह—

वातशोणितजः शोथो जानुमध्ये महारुजः ॥ ५८ ॥
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ।

( सु० नि० अ० १ )

**म०-**वातेत्यादि । वातशोणितज इति वातरक्ताख्यविकारजः, चिकित्साभेदार्थं पृथक् पठित इति **गयदासः** । वातशोणिताभ्यां जात इति **जेज्जटः** । दृश्यते ह्ययं वातरक्तव्यतिरेकेणापि, जानुदेशनियतत्वेन विशिष्टलक्षणत्वेन चतरवातरक्तशोथाद्भेद इति क्रोष्टुकशीर्षवत्=शृगालमस्तकवत् स्थूलः ॥ ५८ ॥—

**भा० टी०-**क्रोष्टुक शीर्ष के लक्षण—जानु=घुटने में वात रक्त के कोपसे एक स्यारके मस्तककी तरह मोटा शोथ हो जाता है, और जिसमें बहुत पीड़ा होती है, उसे क्रोष्टुकशीर्ष कहते हैं। कोई २ इसे हिन्दी में गठिया कहते हैं ॥ ५८ ॥

**अथ खाञ्ज्य-पाङ्गुल्योर्लक्षणम् ।** ( paraplgia ) परप्लेज़िआ

खञ्जमाह—

वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥५९॥
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ।

( सु० नि० अ० १ )

**म०-**वायुरित्यादि । सक्थ्नः=ऊर्ध्वजङ्घायाः, कण्डरां=महास्नायुम्, आक्षिपेत्=ईषत् क्षिपेत्, किंचिद्गतिमत्त्वादिति **गयदासः** । सक्थ्नोरिति द्विवचनेनैव द्वित्वे लब्धे द्वयोरिति पदेन नियमयति,-सक्थिद्वयस्यैव वधात् पङ्गुः एकसक्थिवधात् खञ्ज इति । वधश्चात्र गमनादिक्रियानाशः ॥ ५९ ॥

**भा०टी०-**खञ्ज और पङ्गु के लक्षण—कटि प्रदेश में वायु स्थित होकर एक जाँघ या टाँग की मोटी नसों को मार देता है और पीड़ा पैदा करता है, तो उसे खञ्ज ( लँगड़ा ) कहते हैं। यही बात दोनों टाँगों मे होने से पंगु कहलाता है। खञ्ज रोग में आदमी कुछ २ लँगड़ा कर चल सकता है, परन्तु पंगु चल ही नहीं पाता ॥ ५९ ॥

**अथ कलायखञ्जस्य लक्षणम् ।** ( Spastic Paraplegia ) स्पैस्टिक् पैराप्लेज़िआ

खञ्जविशेषमाह—

प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति ॥ ६० ॥
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ।

( सु० नि० अ० १ )

म०—प्रक्रामन्नित्यादि प्रक्रामन्निति गमनमारभमाणो वेपते । प्रशब्दोऽयमादिकर्मणि । खञ्जन्निव गच्छति=विकलयन्निव गच्छति, गमनारम्भेन वेपते तेन खञ्जादस्य भेदः । मुक्तसन्धिप्रबन्धनमिति शिथिलीकृतसन्धिबन्धनम् । कलायखञ्ज इति शास्त्रे रूढा संज्ञा, अयमेवान्यत्र खञ्जवात इत्युक्तः ॥ ६० ॥

भा० टी०—कलाय खञ्ज के लक्षण—जिस आदमी की टांग चलने के समय पर उठाते ही काँपे और जो लँगड़ायकर चले, उसे कलाय खञ्ज कहते हैं,इसमें पैर के सब जोड़ ढीले पड़ जाते हैं ॥ ६० ॥

## अथ वातकण्टकरोगस्य लक्षणम्—

वातकण्टकमाह—

**रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा ॥ ६१ ॥**
**वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ।**

( मा० नि० अ० १५ )

म०—रुगित्यादि । विषमपादन्यासकुपितः श्रमकुपितो वा वायुर्गुल्फे वेदनां जनयन् वातकण्टकमित्याहुः, अयमेवान्यत्र "खुड्डकावात" इत्युक्तः ॥ ६१ ॥

भा० टी०—वात कण्टक के लक्षण—ऊँचे खाले पैर रखने से या बहुत चलने से थकाहट मालूम होने पर, वायु कुपित होकर गुल्फदेश में पीड़ा पैदा करदेता है उसे वातकण्टक कहते हैं ॥ ६१ ॥

## अथ पाददाहस्य लक्षणम्—

( Burning of the ( feet ) बर्निङ्ग आफ दि फीट

पाददाहमाह—

**पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥ ६२ ॥**
**विशेषतश्चङ्क्रमतः पाददाहं तमादिशेत् ।**

( सु० नि० अ० १ )

म०—पादयोरित्यादि । विशेषतश्चङ्क्रमत इत्यनेन स्थितस्य मन्दो दाह इति दर्शयति । वैवर्ण्यादेरभावाद्वातरक्तादस्य भेदः ॥ ६२ ॥

भा० टी०—पाद दाह के लक्षण—पित्त, रक्त, और वायु दोनों पैरों में दाह ( जलन) पैदा करदेते हैं, अधिक चलने पर दाह अधिक होता, और बैठने या खड़े रहने पर कम, इसे पाद दाह कहते हैं ॥ ६२ ॥

### अथ पादहर्षस्य लक्षणम् ( Anacsthesia ) ऐनेस्थीसिआ

पादहर्षमाह—

हृष्यते चरणौ यस्य भवेतां चापि सुप्तकौ ॥ ६३ ॥
पादहर्षः स विज्ञेयः कफवातप्रकोपतः ।

( सु० नि० अ० १ )

म०—हृष्येते इत्यादि । हृष्येते=हर्षयुक्तौ भवतः, हर्षश्च रोमाञ्चप्रायोऽन्तः शीतो झिणिझिणिवत् वेदनाविशेष इत्याहुः, झिणिझिणि तु न[1] चिरानुबन्धिनी केवलवातजेति भेदः ॥ ६३ ॥

भा० टी०—पाद हर्ष के लक्षण—जिस के दोनों पैरों में हर्ष रोमाञ्च होजाय-अन्दर ठण्डा सा मालूम हो, छूनेपर स्पर्श न मालूम हो, झुनझुनी के समान जान पड़े,वात कफ से पैदा होने वाले इस रोग को पादहर्ष कहते हैं। इसे झुनझुनी नहीं कह सकते, क्यों कि वह देर तक नहीं रहती और केवल वात से होती है, उसमें कफ नहीं होता दूसरे, पाद हर्ष पैर में ही होता है और झुनझुनी हाथ में भी होती है॥ ६३ ॥

### अथ अंसशोषस्य लक्षणम् ।

अर्धार्धश्लोकेनांसशोषावबाहुकयोर्लक्षणम्—

अंसदेशस्थितो वायुः शोषयेदंसबन्धनम् ॥ ६४ ॥

( सु० निं० अ० १ )

म०—अंसेत्यादि । अंसेत्यादिना श्लोकार्धेनांसशोषः केवल वातज उच्यते । अंसबन्धनकारकः श्लेष्मा अंसबन्धनः, एतदनन्तरं 'अंसशोषं जनयेत् इति शेष इति कार्तिकः ॥ ६४ ॥

भा० टी०—अंस देश में ( कंधेके पास ) वायु कुपित होकर वहां के बन्धन ( कफ ) को सुखा कर कमजोर कर देता है उसे अंसशोष कहते हैं ॥ ६४ ॥

### अथ अवबाहुकस्य लक्षणम् ।

अवबाहुकमाह—

सिरां[2]श्चाकुञ्च्य तत्रस्थो जनयेदवबाहुकम् ।

( सु० नि० अ० १ )

---

१—चिरानुबन्धिनी चिरकालस्थितिः ।

२ सिरा बाहुस्थसिराः ।

म०–सिराश्चेत्यादिना । तत्रस्थोंऽसदेशस्थः, अयं वात-कफजः । अन्ये तु मिलित्वा अवबाहुकलक्षणमाहुः, तन्न, यतः सुश्रुतेनोक्तम्,—"अंसशोषाववबाहुकयोर्बाहुमध्ये सिराव्यधः" ( सु. शा. स्था. अ. ८ )–इति । एतदनन्तरं सुश्रुतेन बाधिर्यं पठितम्, "यदा शब्दवहं वायुः ( सु. नि. स्था. अ. )"––इत्यादिना, माधवेन तु प्रकरणानुरोधं मन्यमानेन कर्णरोग एव तत् पठितं, किन्तु सुश्रुतेन वातव्याधौ बाधिर्यं पठित्वाऽपि बाधिर्य–कर्णशूलौ शालाक्येऽपि पठितौ, पुनरुक्तमिति चेत्, न, संप्राप्तिभेदभिन्नत्वात्; वातव्याधौ शब्दवहमित्यनेन कर्णशष्कुल्यवच्छिन्ननभोदेश उक्तः, शालाक्ये च शब्दवहाः सिरा इत्युक्तम् । माधवेन तु कर्णरोगे शब्दाश्रवणत्वाविशेषादेतदेव तत्र पठितमित्यविरोधः—

भा० टी०—उसी अंस देश में स्थित वायु सिराओं को सिकोड़ देता है उसे अवबाहुक कहते हैं ॥

## अथ मूकादीनां लक्षणानि ।

( मूकत्वम् Aphhonia ) अफ़ोनिआ

मूकादीनाह–

आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः ॥ ६५ ॥
नरान् करोत्यक्रियकान् मूक-मिन्मिन-गद्गदान् ।

( सु० नि० अ० १ )

म०–आवृत्येत्यादि । अक्रियकान्=अवचनक्रियकान्; नञयमभावे ईषदर्थे च । आद्यो मूकोऽवचनः, द्वितीयो मिन्मिनः=सानुनासिकसर्ववचनः, तृतीयो गद्गदो=लुप्तपदव्यञ्जनाभिधायी ॥ एषां च समानकारणाभिधानेऽपि दुष्टेरुत्कर्षादिभिरदृष्टवशाद्वा भेद इत्युन्नेयम् ॥ ६५ ॥—

भा०टी०—वायु शब्दवाहिनी धमनियों को घेर कर बिगाड़ देता है,जिससे आदमी गूँगा हो जाता है, मिनमिना कर बोलता है, अथवा गद्गद ( जिसमें पद और व्यञ्जन साफ नहीं निकलता ) बोलता है । गद्गदको 'हकलाकर बोलना' कहते हैं ॥ ६५ ॥

## अथ तूनीरोगस्य लक्षणम ।

तूनीमाह—

अधो या वेदना याति वर्चोमूत्राशयोत्थिता ॥ ६६ ॥
भिन्दतीव गुदोपस्थं सा तूनी नाम नामतः ।

( सु० नि० अ० १ )

म०—अध इत्यादि । अध इति गुदोपस्थम् । वेदना=शूलम् । वर्चोमूत्राशयोत्थिता=पक्वाशयमूत्राशयोत्थिता, पक्वाशय-मूत्रपुटयोर्व्यस्तसमस्तयोर्जाता । उपस्थं=स्त्रीपुंसयोर्गुह्यम् । नामतः=प्रसिद्धितः ॥ ६६ ॥

भा० टी०—पक्वाशय और मूत्राशय से वेदना उठ कर नीचे गुदा, लिंग और योनि को भेदती हुई जाय उसे तूनी कहते हैं। यह वेदना पक्वाशय और मूत्राशय दोनों में एक साथ भी होती है, और एक में होती है ॥ ६६ ॥

### अथ प्रतितूनीरोगस्य लक्षणम् ।

प्रतितूनीमाह—

गुदोपस्थोत्थिता या तु प्रतिलोमं प्रधाविता ॥ ६७ ॥
(१)वेगैः पक्वाशयं याति प्रतितूनीति सोच्यते ।

( सु० नि० अ० १ )

म०—गुदेत्यादि । प्रतिलोममित्यूर्ध्वम् । वेगैर्वातकृतोद्गमैः । सेत्यनेन भिन्दतीवेत्यतिदिश्यते ॥ ६७ ॥—

भा० टी०—यदि यही वेदना, उलटा-गुदा तथा लिंग या योनि से उठ कर बड़े वेग से भेदती हुई पक्वाशय तक जाय तो उसे प्रतितूनी कहते हैं ॥ ६७ ॥

### अथाध्मानरोगस्य लक्षणम् ।

( Tympanitis ) टिम्पेनिटिस

आध्मानमाह—

साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् ॥ ६८ ॥
आध्मानमिति तं विद्याद् घोरं वातनिरोधजम् ॥

( सु० नि० अ० १ )

म०—साटोपमित्यादि । साटोपमिति आटोपश्चलचलनमिति गयदासः; गुडगुडाशब्द इति कार्त्तिकः । आध्मातं=वातपूर्णचर्मपुटकस्थानीयम् । उदरमिति पक्वाशयः, प्रत्याध्मानस्य आमाशयसम्भवत्वात् । घोरमिति कष्टप्रदम् ॥ ६८ ॥

---

१ "वेगैर्मुहुर्मुहुः स्वभावोपशमलक्षितैः" इति भावमिश्रः ।

२—वातनिरोधजमधोवातनिरोधजम् ।

भा० टी०—अध्मान के लक्षण-जिस रोग में पेट में गुड़गुड़ाहट हो, पीड़ा अधिक हो, उदर (पक्वाशय,) वायु से भर कर फूल जाय,उसे आध्मान कहते हैं। यह बड़ा ही कष्टप्रद रोग है। यह वायु के रुकने से पैदा होता है॥ ६८॥

अथ प्रत्याध्मानस्य लक्षणम्।

आमाशयसमुत्थत्वेन [1]प्रत्यासत्त्या पार्श्व-हृदययोरपि वेदनाशङ्कानिरासार्थमाह—

विमुक्त-पार्श्व-हृदयं तदेवामाशयोत्थितम्॥ ६९॥
प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम्।

( सु० नि० अ० १ )

म०—विमुक्तेत्यादि। तदेवेत्यनेन साटोपादित्वमतिदिशति। कफव्याकुलितानिलं=कफावृतवातम्॥ ६९॥

भा० टी०—यदि यही पीड़ा और लक्षण आमाशय में हो, किन्तु हृदय और पार्श्व बिल्कुल बचा रहे, अर्थात् उसमें कुछ भी पीड़ा न हो तो उसे प्रत्याध्मान कहते हैं, इसमें वायु कफ से घिरा रहता है।

अथ वाताष्ठीलारोगस्य लक्षणम्।

अष्ठीलामाह—

नाभेरधस्तात् सञ्जातः सञ्चारी यदि वाऽचलः॥ ७०॥
अष्ठीलावद् घनो ग्रन्थिरूर्ध्वमायत उन्नतः।
वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम्॥ ७१॥

( सु० नि० अ० १ )

म०—नाभेरित्यादि। अष्ठीला=उत्तरापथे वर्तुलः पाषाणविशेष इति **जेज्जटमतानुवादी** कार्त्तिकः, कर्मकाराणां वर्तुला दीर्घा लौहभाण्डी इति **गयदासः**। ऊर्ध्वमायत=उपरिदीर्घः। उन्नतः=तिर्यगुन्नतः। वातकृता अष्ठीलावाताष्ठीलेति [2]स्वरूपपरम्, व्यावृत्त्यभावात्। बहिर्मार्गावरोधिनीं वातमूत्रपुरीषावरोधिनीम्॥७१॥

भा० टी०—वाताष्ठीला के लक्षण-नाभि के नीचे एक चञ्चल ( इधर उधर फिरने वाली ) स्थिर ( एक जगह रहने वाली ) ऊपर की तरफ लम्बी, तिरछी, ऊँची लोढ़ा के समान घन=ठोस,गाँठ हो जाती है। उसके पैदा होने से हवा का खुलना और पाखाना पेशाब बन्द हो जाता है। उसे वाताष्ठीला कहते हैं॥ ७१॥

---

१—प्रत्यासत्या सामीप्येन।

१—स्वरूपपरं स्वरूप कथनं न तु विशेषबोधकम्। व्यावृत्त्यभावात्–पित्तकफकृताष्ठीलयोरुत्पत्त्यभावात्, यदि तत्कृताष्ठीले स्यातां तदा वाताष्ठीलेति व्यवच्छेदकमेव स्यान्न स्वरूपपरमितिभावः।

## अथ प्रत्यष्ठीलाया लक्षणम् ।

एतामेव रुजोपेतां वात-विण्-मूत्र-रोधिनीम् ।
प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥ ७२ ॥

( सु० नि० अ० १ )

म०—एतामित्यादि सैव जठरे तिर्यगुत्थिता तिर्यगायता प्रत्यष्ठीलेति भेदः । वात-विण्-मूत्र-रोधिनीमिति विशेषपरम् ॥ ७२ ॥

भा० टी०—यही गाँठ यदि पेट में तिरछी, लम्बी हो, तथा पीड़ा पैदा करे और वात मूत्र पुरीष बन्द हो जाय, तो उसे प्रत्यष्ठीला कहते हैं ॥७२॥

## अथ मूत्रावरोधस्य लक्षणम् ।

अष्ठीलाव्यतिरिक्तामपि वातविकृतिं मूत्ररोधिनीमाह—

मारुतेऽनुगुणे बस्तौ मूत्रं सम्यक् प्रवर्तते ।
विकारा विविधाश्चात्र प्रतिलोमे भवन्ति च ॥ ७३ ॥

( सु० नि० अ० १ )

म०—मारुत इत्यादि । अनुगुणेऽनुलोमे प्रतिलोमे मारुत इति सम्बन्धः । विकारो=अश्मरीमूत्रकृच्छ्रादयः ॥ ७३ ॥

भा० टी—बस्ति=मूत्राशय में वायु के ठीक रहने पर मूत्र भली भाँति निकलता है, और कुपित होकर उल्टा हो जाने पर अश्मरी, मूत्रकृच्छ्र आदि अनेक वातरोग पैदा होते हैं ॥ ७३ ॥

## अथ वेपथुरोगस्य लक्षणम् ।

( Paralysis Agitans ) पैरालिसिस एजिटेन्स ।

वेपथुवातविकारमाह—

सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः ।

म०—सर्वेत्यादि । शिरसः कम्प इति सम्बन्धः, शिर इत्यवयवोपलक्षणं, तेन हस्तादेरपि कम्पो वेपथुरित्यर्थः ॥-

भा० टी०—सब अंग—शिर और हाथ पैर आदि किसी अंगों का काँपना, वेपथु कहलाता है ।

अथ खल्लीरोगस्य लक्षणम् ।

खल्ली तु पादजङ्घोरुकरमूलावमोटनी ॥ ७४ ॥

म०—खल्लीत्यादि । खल्ली सिरावमोटन इति लोके । "अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन च । करोत्युद्गारबाहुल्यमूर्ध्ववातं प्रचक्षते" ॥ ७४ ॥

भा० टी०—पैर, जङ्घा=पेंडरी, ऊरु=जाँघ और हाथों का मिरोड़ जाना, खल्लीरोग कहलाता है ॥ ७४ ॥

अथोर्ध्ववातस्यलक्षणम् ।

अधः प्रतिहतो वायुः[1] श्लेष्मणा मारुतेन वा ।
करोत्युद्गारबाहुल्यमूर्ध्ववातः स उच्यते ॥ ७५ ॥

भा० टी०—समान वायु कुपित अपान वायु और कफ से नीचे की तरफ रुक कर ऊपर बार २ आता है उसे ऊर्ध्ववात [ डकार ] कहते हैं ॥ ७५ ॥

अथानुक्तानां वातरोगाणां सूचनम् ।

अनुक्तवातरोगसंग्रहार्थमाह—

स्थाननामानुरूपैश्च लिङ्गैः शेषान्विनिर्दिशेत् ।
सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ ७६ ॥

म०—स्थानेत्यादि । स्थानानुरूपैर्लिङ्गैर्यथा—कुक्षिशूलं, नखभेद इत्यादि । नामानुरूपैर्लिङ्गैर्यथा-शूलमित्युक्ते कीलनिखातवद्वेदनाविशेष एवोच्यते तथा भेद-तोदादिभिरपि पीडाविशेष एव गम्यते ॥ ७६ ॥

भा० टी०—जो वात रोग यहाँ नहीं कहे गये हैं, उन्हें स्थान और नाम के अनुसार लक्षणों से जानना चाहिये, तथा सब वात रोगों में पित्त और कफ का सम्बन्ध भी विचारना चाहिए ॥ स्थानानुरूप लक्षण जैसे-कुक्षि में शूल होने से कुक्षिशूल, नख में भेदनवत् पीडा होने से नखभेद, पीठ में शूल होने से पृष्ठशूल । नामानुरूप जैसे-कुक्षि शूल कहने पर शूल पद से ऐसी पीडा होती है जैसे कील गाड़ा जाता हो, तोद कहने से सुई चुभोने जैसी पीडा होती है । इसी प्रकार न कहे गये वात रोग को अपनी बुद्धि से समझ लेना चाहिए ॥ ७६ ॥

---

१—"वायुः समान वायुः, मारुतेन अपान वायुना स्वहेतुदुष्टेन" इति भावप्रकाशे ।

अथैषां वातरोगाणां साध्यासाध्यत्वविचारः ।

उक्तरोगाणां कृच्छ्रसाध्यत्वमाह—

हनुस्तम्भार्दिताक्षेपपक्षाघातापतानकाः ।
कालेन महता वाता यत्नात्सिध्यन्ति वा नवा ॥ ७७ ॥
नरान्न बलवतस्त्वेतान् साधयेन्निरुपद्रवान् ।

म०—वाता इति वातविकाराः, कार्य-कारणयोरभेदोपचारात्, वातादिति पाठे तु वाताद्ये हनुस्तम्भादय इति योज्यम् ॥ ७७ ॥

भा० टी०—हनुस्तम्भ, अर्दित, आक्षेप, पक्षघात,अपतानक, ये वात रोग कुछ दिन तक कोशिश के साथ चिकित्सा करने से शायद अच्छे हो जाते हैं और नहीं भी अच्छे होते । यदि रोगी जवान–बलवान् हो, और कोई दूसरा रोग उपद्रव रूप से न खड़ा हो गया हो तो उसकी चिकित्सा करे, नहीं तो नहीं ॥ ७७ ॥

अथ वातोपद्रवाः ।

वातोपद्रवानाह—

विसर्प-दाह-रुक्-सङ्ग-मूर्च्छारुच्यग्निमार्दवैः ॥
क्षीण-मांस बलं वाता घ्नन्ति पक्षवधादयः ।

( सु० सू० अ० ३३ )

म०—विसर्पेत्यादि । वाता इति वातविकाराः,कार्यकारणयोरभेदोपचारात्। वातादिति पाठे तु वातात् पक्षवधादय इति योज्यम् ॥ ७८ ॥

भा० टी०—विसर्प, दाह, पीड़ा; वायु मूत्र मल न निकले, अरुचि, मन्दाग्नि कृशता और निर्बलता, ये वात रोग के उपद्रव हैं । इनके उत्पन्न होजाने पर पक्षवधादिक रोग मार ही डालते हैं ॥ ७८ ॥

अथ वातव्याधेरसाध्यत्वम् ।

शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ।
रुजार्तिमन्तं च नरं वातव्याधिर्विनाशयेत् ॥ ७९ ॥

( सु० सू० अ० ३५ )

म०—शूनमित्यादि । शूनं=सशोथम् । सुप्तत्वचं=स्पर्शानभिज्ञत्वगिन्द्रियम्॥७९

भा० टी०—सूजन, चमडा में छूने पर न मालूम होना, हड्डी टूट जाना, कम्प, आध्मान, अधिक पीड़ा होना, इन सब लक्षणों के होने पर वात रोगी नहीं बचता ॥७९॥

अथ प्रकृतिस्थस्य वायोर्लक्षणम् ।

इदानीं पञ्चविधस्यापि प्रकृतिस्थस्य वायोर्लिंगं कार्यं चाह—

अव्याहतगतिर्यस्य स्थानस्थः प्रकृतिस्थितः ।
वायुः स्यात् सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥ ८० ॥

म०—अव्याहतेत्यादि । यस्येति पुरुषस्य, अव्याहतगतिः=अनवरुद्धमार्गः, स्थानस्थः=स्वाश्रयव्यवस्थितः, प्रकृतिस्थितोऽक्षीणश्च प्रवृद्धः, एतद्विशेषणत्रयं [1]हेतुहेतुमद्भावेन योज्यम् । वीतरोगो=नीरोगः [2]कफपित्तदुष्टेरपि प्रेरकवातेनान्तरीयकत्वात् अधिकं समाः शतमिति पञ्च दिनाधिकं सविंश वर्षशतम् । यदाह वराह आयुर्निरूपणे—"समाः षष्टिर्द्विघ्ना मनुजकरिणां पंच च निशाः"-इत्यादि ॥ ८० ॥

भा० टी०—जिस आदमी के शरीर में वायु का कहीं रास्ता न रुका हो—शरीर भर में जहाँ २ वायु आता जाता है वहाँ २ वेरोक आया जाया करे, वायु का शरीर में जो स्थान है, उन २ स्थानों में मौजूद रहे, और वायु न घटे और न बढ़े तो वह मनुष्य अपनी पूरी आयु ( एक सौ वीस वर्ष और पाँच दिन, चरक के अनुसार पूरा सौ वर्ष) तक नारोग रहता हुवा जीवित रहता है ॥ ८० ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां
रुग्विनिश्चयभाषाटीकायां वातव्याधिनिदानम् ।

## अथ वातरक्तनिदानम् । ( Gout ) गाउट

### अथ वातरक्तस्य कारणानि ।

वातव्याधिविशेषत्वात्तदनन्तरं वातरक्तमाह-ननु सुश्रुते वातरोगाध्याय एव वातरक्तं पठितं तत् कुतोऽत्र संग्रहे पृथक् पाठः ? उच्यते, सत्यपि वातरोगत्वे निदानवैशिष्ट्यात् विशिष्टदोषदूष्यख्यापनार्थं हस्तादिदेश एव संप्राप्तिकथनार्थं क्रियाविशेषख्यापनार्थं च पृथक्करणम् । अत एव चरकेऽपि वातव्याध्यनन्तरं पृथग्वातरक्ताधिकारः । ननु 'रुजस्तीव्राः ससंतापा' इत्यादिना रक्तगतस्य वातस्य लक्षणं वातव्याधावेवोक्तम्, ततश्च वातरक्ताभिधानं पुनरुक्तं स्यात्; नैवम्, वातरक्तं हि दुष्टेन वातेन दुष्टेन रक्तेन च विशिष्टसंप्राप्तिकं विकारान्तरमेव ।

---

१ हेतुहेतुमद्भावेनेति-यथा-प्रकृतिस्थितस्य स्थानस्थो हेतुः, स्थानस्थस्य अव्याहतगतिर्हेतुः ।

२-कफपित्तेति-पित्तकफौ पङ्गू वर्तेते तद्दुष्टिर्दुष्टवातेनैव यदा च अव्याहतेत्यादि लक्षणत्रयेण वातदुष्टेरभावः स्यान्न तदा तयोर्दुष्टिस्ततश्च दोषत्रयसाम्यात्पुरुषो वीतरोग एव भवतीति भावः ।

उक्तं हि चरके-"वायुः प्रवृद्धो वृद्धेन रक्तेनावारितः पथि । क्रुद्धः संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्" ( च. चि. स्था. )-इति। रक्तगतवाते तु वात एव दुष्टो रक्तमदुष्टमेव गच्छतीति भेदः ।

लवणाम्ल-कटु-क्षार-स्निग्धोष्णाजीर्ण-भोजनैः ।
क्लिन्न-शुष्काम्बुजानूप-मांस-पिण्याक-मूलकैः ॥ १ ॥
कुलत्थ-माष-निष्पावशाकादिपललेक्षुभिः ।
दध्यारनाल-सौवीर-शुक्त-तक्र-सुरा-ऽऽसवैः ॥ २ ॥
विरुद्धाध्यशनक्रोध-दिवास्वप्न-प्रजागरैः ॥ ३ ॥

( च० चि० अ० २९ )

प्रायशः सुकुमाराणां मिथ्या-हार-विहारिणाम् ।
स्थूलानां सुखिनां चापि कुप्यते वातशोणितम् ॥४॥

( सु० चि० अ० ५ )

म०-लवणाम्लेत्यादि । क्लिन्न-शुष्कशब्दौ मांसेन संबध्येते । पिण्याकस्तिलकल्कः । निष्पावः=शिम्बिः, पललं=मांसम् । प्रायश इत्यादि । सुकुमाराः मृदुदेहावयवाः, तेषामल्पचेष्टत्वाल्लवणादिभिः रक्तं कटुतिक्तप्रजागरादिभिश्च वातः कुप्यतीति ईशानः ॥ १-३ ॥

भा० टी०—वातरक्त के कारण-अक्सर जो आदमी सुकुमार होते हैं अर्थात् कोई मेहनत का काम नहीं करते जिनका शरीर कोमल होता है । स्थूल=मेदस्वी (मोटे) और सुखी होते हैं, और मनमानी आहार विहार सेवन करते हैं, अक्सर उनका वात और रक्त बिगड़ जाता है। वात रक्त बिगड़ने के कारण—नमक, खटाई, मिर्चा, क्षार, स्निग्ध, गर्म, अजीर्ण में भोजन, सड़ा सूखा मांस, पानी का मांस=मछली वगैरह अनूप=जल के पास रहने वाले जीवों का मांस=जैसे भैंस और सूअर आदि । खली, मूली, कुल्थी, उर्द, निष्पाव=बोड़ा, शाक, पलल=तिलकुट या मांसमात्र, ऊख, दही, काँजी, सौवीर=बिना छिलका वाले जव का आसव,सिरका, मठा, सुरा, आसव, विरुद्ध भोजन, अध्यशन-बदहज़मी की हालत में खाना, क्रोध, दिन में सोना, रात में जागना, इन सबके अधिक सेवन से वात रक्त कुपित होता है ॥ १-४ ॥

## अथ वातरक्तस्य सम्प्राप्तिः ।

सम्प्राप्तिमाह—

**हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं स विदाहाऽशनस्य ।**
**कृत्स्नं रक्तं विदहत्याशु तच्च स्रस्तं दुष्टं पादयोश्चीयते तु ॥**
**तत्संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ॥ ४ ॥**

( सु० नि० अ० १ )

म०—हस्त्यश्वेत्यादि । हस्त्यादिगमनं वातवृद्धौ विशेषेण रक्तस्य द्रवस्याधोगमनेऽपि हेतुः, विदाह्यन्नं च शोणितवृद्धौ । हस्त्यादिगमनं विशेषेण, पादेनापि गमनं हेतुरेव । तद्रक्तम् । संपृक्तं वायुना दूषितेन=स्वहेतुवृद्धेन । तत्प्राबल्यादिति द्वयोर्दुष्टत्वेऽपि वातस्य प्राबल्यात् दोषत्वेन प्राधान्याद्वातरक्तव्यपदेशः, न तु रक्तवात इति ॥ ४ ॥

भा० टी०—वात रक्त की सम्प्राप्ति–हाथी, ऊँट, घोड़ा पर चढ़ना, ज्यादा पैदल चलना, विदाहि अन्न=थोड़ा कुलथी सरसो राई आदि खाना, पहले का खाना न हजम होने पर दुबारा फिर खाना, इन कारणों से सारे शरीर का रक्त खराब होकर एक या दोनों पैरों में इकट्ठा होता है । बाद वह रक्त अपने कारणों से कुपित वायु से मिल जाता है इस कारण तथा दोषों में वात की प्रधानता होने से यह रोग वातरक्त कहलाता है ॥ ४ ॥

## अथ वातरक्तस्य पूर्वरूपाणि ।

पूर्वरूपमाह—

**( स्पर्शोद्विग्नौ तोद-भेद-प्रशोष-स्वापोपेतौ वातरक्तेन पादौ ।**
**पित्तासृग्भ्यामुग्रदाहौ भवेतामत्यर्थोष्णौ रक्तशोफौ मृदू च ॥**
**कण्डूमन्तौ श्वेत-शीतौ सशोफौ पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते ।**
**सर्वैर्दुष्टे शोणिते चापि दोषाः स्वं स्वं रूपं पादयोर्दर्शयन्ति ॥)**
**स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ।**
**सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गमः ॥५॥**

---

१—सविदाहमशनं यस्य तस्य । भुक्ते विदग्धे तदुपरि भुञ्जानस्य इत्यर्थः । २–संपृक्तं मिलितम् ।

जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥ ६ ॥
कण्डूः सन्धिषु रुग् भूत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥ ७ ॥

( च० चि० अ० २९ )

म०—स्वेदेत्यादि । स्वेदोऽत्यर्थं न वेति घर्मागमनमत्यर्थं भवति सर्वथा वा न भवति, एतच्च व्याधिमाहिम्ना कुष्ठवत् । क्षतेऽतिरुगिति यदि कारणान्तरात् क्षतं स्यात्तदाऽतिशयं रुजा स्यात्, तद्देशस्य दुष्टत्वात् ॥ ५–७ ॥

भा० टी०—वातरक्त का पूर्व रूप-वातरक्त से पैरों में छूने में तकलीफ होती है। सूख जाता है, तोद भेद पीड़ा होती है। स्पर्शज्ञान नहीं रहता। पित्तरक्त से जबर्दस्त जलन होती है, पैर गर्म रहते हैं। लाल रंग की सूजनहो जाती,और पैर मुलायम रहते हैं। श्लेष्म रक्त से पैर सफेद हो जाते हैं, ठण्ढे रहते हैं, सूजन आ जाती है, पैर मोटे पड़ जाते हैं, और स्तब्ध हो जाते हैं। खुजली होती है। सन्निपात होने पर तीनों दोषों के लक्षण होतेहैं,पसीना हरवक्त निकले या बिलकुल न निकले,सब अङ्ग काले पड़ जाँय, स्पर्श न जाने, बाद किसी कारणसे शरीर में क्षतहो जाय, तो वहां बड़ी पीड़ा, सब जोड़ ढोले हो जांय आलस्य रहे, शरीर सुस्त रहे, शरीर में फुंसियाँ निकल आवें, अधिकतर घुटना, पेंडुरी, जाँघ, कटि, कंधा, हाथ, पैर में तोद भेद और फरकन हो। भारीपन, खुजली, सन्धियों में बार २ पीड़ा और दाह हो और शान्त हो जाया करे, शरीर की कान्ति बिगड़ जाय, और चकत्ते निकलें ॥ ७ ॥

## अथ वाताधिकवातरक्तस्य लक्षणम् ।

वातरक्तस्य दोषान्तरसंसर्गेण लक्षणान्याह—

वातेऽधिकेऽधिकं तत्र शूल-स्फुरण-भञ्जनम् ।
शोथस्य रौक्ष्यं कृष्णत्वं श्यावता वृद्धिहानयः ॥ ८ ॥
धमन्यङ्गुलिसन्धीनां संकोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भ-वेपथु-सुप्तयः ॥ ९ ॥

( च० चि० अ० २९ )

म०—वातेऽधिक इत्यादि । वृद्धिहानय इति वातरक्तलक्षणानाम् ॥ ९ ॥

भा० टी०—वाताधिक वातरक्त का लक्षण-वायु अधिक होने पर शूल,फरकन और पीड़ा हो, सूजन हो और वह रूखी हो, और काली हो, या श्याम वर्ण हो। तथा कभी घटे और कभी बढ़ जाय, धमनियाँ, अँगुली और जोड़ों में सिकुड़न रहे, शरीर में बहुत पीड़ा हो, ठंढी हवा और ठंढी चीजें अच्छी न मालूम हों, और शीत से रोग बढ़े, शरीर जकड़ा रहे, काँपे, तथा स्पर्श न मालूम हो ॥ ८-९ ॥

अथ रक्ताधिकवातरक्तस्य लक्षणम्।

रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते।
स्निग्धरूक्षैः शमं नैति कण्डू-क्लेद-समन्वितः॥ १०॥

( च० चि० अ० २९ )

म०-रक्त इत्यादि रक्त इत्यत्राधिक इत्यनुवर्तनीयं, एवं वक्ष्यमाणपित्तादिषु। एतच्चारम्भकरक्तादन्यद्रक्तान्तरं बोध्यं, रक्तमपि रक्तान्तरदूषकं भवति। यदुक्तं दुष्टरक्तलक्षणे,-"पित्तवद्रक्तेनातिकृष्णं (सु. सू. स्था. अ. १४)-" इति। शमं नैति=शान्तिं न याति॥ १०॥

भा० टी०—वातरक्तमें रक्त अधिक हो तो शोथ हो, अधिक पीड़ा हो, तोद, शोथ ताम्र वर्ण हो, शरीर में चुनचुनाहट मालूम हो, खुजली रहे, और गीलापन रहे, स्निग्ध तथा रूखी चीजों से यह शोथ शान्त न हो, जिस रक्त से रोग उत्पन्न होता है उस रक्त से दूसरे रक्त के अधिक होने पर ये लक्षण होते हैं, क्योंकि सुश्रुत में रुधिर से अन्य रुधिर का दूषित होना लिखा है॥ १०॥

अथ पित्ताधिकवातरक्तस्य लक्षणम्।

पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदस्तृषा।
स्पर्शासहत्वं रुग्रागः शोथः पाको भृशोष्मता॥ ११॥

( च० चि० अ० २९ )

अथ कफाधिकवातरक्तस्य लक्षणम्।

कफे स्तैमित्य-गुरुता-सुप्ति-स्निग्धत्व-शीतताः।
कण्डूर्मन्दा च रुग्,-

म०-कफ इत्यादि।

भा० टी०—वातरक्त में पित्त के अधिक होने पर, दाह अधिक होता है, मूर्च्छा रहती है, पैरों में पसीना निकलता है, पैर सुन्न हो जाते हैं, नशा सा मालूम होता है, प्यास लगती है, स्पर्श करने पर पीड़ा होती है, शोथ लाल होता है, पीड़ा होती है, शोथ पकता है और बड़ी जलन होती है ॥ ११ ॥

### अथ द्वि-त्रि-दोषजवातरक्तस्य लक्षणानि ।

द्वन्द्वं सर्वलिङ्गं च संकरात् ॥ १२ ॥

( सु० नि० अ० १ )

म०—द्वन्द्वसर्वलिङ्गं च संकरादिति—संकरात्=द्विदोषात्रिदोषमेलकात् द्वन्द्वलिङ्गं सर्वलिङ्गं च क्रमाद्वातरक्तं भवति ॥ ८—१२ ॥

भा० टी०—कफ के अधिक होने पर-शोथ गीला रहता है, भारीपन मालूम होता है, स्पर्श ज्ञान नहीं होता, शोथ ठंढा और चिकना होता है, खुजली आती है और मन्द २ पीड़ा होती है । द्वन्द्वज में दो दोषों के और त्रिदोषज में तीनों दोषों के लक्षण होते हैं ॥ १२ ॥

### अथ वातरक्तस्य प्रसारः ।

पादयोर्जातमप्रतिक्रियमाणं देशान्तरं व्याप्नोति, पादवद्धस्तयोरपि भवतीति दर्शयन्नाह—

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोर्विषमिव क्रुद्धं तद्देहमुपसर्पति ॥ १३ ॥

( सु० नि० अ० १ )

म०—पादयोरित्यादि । आखोर्विषमित्यनेन मन्दविसर्पणतां दर्शितवान् । एतद्वातरक्तं चरकेण द्विविधमुक्तम् । यदाह—"उत्तानमथ गम्भीरं द्विविधं वातशोणितम् । त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम्" ( च. चि. स्था. अ. २९ ) इति । सुश्रुतेन तु कुष्ठवदुत्पत्तौ उत्तानस्योत्तरकालं गम्भीरत्वमुक्तमिति मतभेद एव ॥ १३ ॥

भा० टी०—वातरक्त रोग पैरों में उत्पन्न होकर कभी हाथों में भी हो जाता है और उसकी चिकित्सा न होने पर धीरे २ वह मूसा के विष की तरह बढ़कर सारे शरीर में फैल जाता है ॥ १३ ॥

अथ वातरक्तस्यासाध्यलक्षणानि ।

असाध्यत्वादिकमाह—

आजानु स्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत् ।
उपद्रवैश्च यज्जुष्टं प्राण-मांस-क्षयादिभिः ॥ १४ ॥
वातरक्तमसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ।
( सु० नि० अ० १ )

म०—आजान्वित्यादि । आजानु=जानुपर्यन्तं गतमसाध्यम् । तथा स्फुटितादिकं स्फुटितं=दलितत्वक्, प्रभिन्नं=विदार्णत्वक्, उपद्रवैरित्यादौ आदिशब्देन वक्ष्यमाणानामस्वप्नादीनां ग्रहणम् । याप्यं संवत्सरोत्थितमित्यनेन संवत्सरादर्वाक् साध्यम्, यदि स्फुटितत्वगादयो न भवेयुरित्याहुः ॥ १४ ॥

भा० टी०—वातरक्त के असाध्य लक्षण-यदि वातरक्त (१) घुटना तक हो गया हो (२) चमड़ा फट जाय और फूट कर बहे, (३) शरीर में बल न हो और शरीर कृश हो जाय तथा आगे कहे जाने वाले अस्वप्न अरोचक आदि उपद्रवों से युक्त हो तो असाध्य होता है। अगर वातरक्त एक वर्ष से पैदा हो तो याप्य होता है, वर्ष भर के भीतर का वातरक्त किसी उपद्रव के न होने पर अच्छा हो जाता है ॥ १४ ॥

अथ वातरक्तस्योपद्रवाः ।

उपद्रवानाह—

अस्वप्नारोचक-श्वास-मांसकोथ-शिरोग्रहाः ॥ १५ ॥
संमूर्च्छा-मद-रुक्-तृष्णा-ज्वर-मोह-प्रवेपकाः ।
हिक्का-पांगुल्य-वीसर्प-पाक-तोद-भ्रम-क्लमाः ॥ १६ ॥
अंगुलीवक्रता-स्फोट-दाह-मर्मग्रहार्बुदाः ।
एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वाऽपि यत् ॥ १७ ॥
( च० चि० अ २९ )

म०—अस्वप्नेत्यादि पाङ्गुल्यं=पङ्गुता । मोहेनैकेनेति वचनात् पूर्वोक्तः समस्तैर्द्वित्र्यादिभिश्चेति ज्ञापयतीति ॥ १७ ॥

भा० टी०—वातरक्त के उपद्रव–नींद न लगना, अरुचि, श्वास, मांस का गल जाना, शिर में पीड़ा, मूर्च्छा, मद, पीड़ा, प्यास, ज्वर, बेहोशी, शरीर का काँपना, हिचकी, पाङ्गुल्य, विसर्प, पकना, तोद, चक्कर थकावट, अँगुलियों का टेढ़ा हो जाना, फफोले पड़ जाना, दाह, मर्मस्थानों में पीड़ा, अर्बुद, इन उपद्रवों के प्रकट हो जाने पर या अकेली मूर्च्छा ही हो तो वातरक्त असाध्य होता है ॥ १५–१७ ॥

### अथ वातरक्तस्य साध्यासाध्यत्वम् ।

अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ।
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः ॥ १८ ॥

( च० चि० अ० २९ )

भा० टी०—पूरे उपद्रव न रहने पर वातरक्त याप्य होता है, उपद्रव कोई भी न हो तो अच्छा ( साध्य ) हो जाता है। नया और एक दोष से पैदा हुआ साध्य, तथा द्वन्द्वज याप्य होता है। त्रिदोज और जिसमें सब उपद्रव हों तो वह वातरक्त असाध्य होता है ॥ १८॥

इति श्रीहरिनारायणशर्मवैद्यकृतायांनिदानदीपिकायां रुग्विनिश्चयभाषा टीकायां वातरक्त निदानम् ।

## अथोरुस्तम्भनिदानम् ।

( Paraplegia ) पैराप्लेजिआ ।

### अथोरुस्तम्भस्य निदानपूर्विका सम्प्राप्तिः ।

वातव्याधिविशेषत्वादूरुस्तम्भमाह—

शीतोष्ण-द्रव-संशुष्क-गुरु-स्निग्धैर्निषेवितैः ।
जीर्णा जीर्णे तथाऽऽयास-संक्षोभ-स्वप्न-जागरैः ॥ १ ॥
सश्लेष्म-मेदः-पवनः साममत्यर्थसञ्चितम् ।
अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥ २ ॥
सक्थ्यस्थिनी प्रपूर्यान्तः श्लेष्मणा स्तिमितेन[२] च ।
तदा स्तभ्नाति [३]तेनोरू स्तब्धौ शीतावचेतनौ॥ ३ ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्द-स्तैमित्य-तन्द्रा-च्छर्द्यरुचि-ज्वरैः ॥ ४ ॥

---

१—यदा पवनः कर्ता सश्लेष्ममेदश्चेति कर्म तदा प्रतिपद्यते प्रापयतीत्यर्थः । २—स्तिमितेन स्थिरीभूतेन ।
३—तेन स्तम्भेन ।

संयुक्तौ पादसदन-कृच्छ्रोद्धरण-सुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५ ॥

( वा० नि० अ० १५ )

म०—शीतोष्णेत्यादि । शीतोष्णग्रहणमनुक्तपरस्परविरोधिद्वन्द्वोपलक्षणार्थं, तेन गुरुस्निग्धाभ्यां लघुरूक्षयोर्ग्रहणं बोध्यमिति जेज्जटः । संशुष्कं=कठिनं, द्रवविरोधित्वात् । जीर्णाजीर्णे इति प्रभूतं=जीर्णं, स्तोकमजीर्णमित्याहुः, तस्मिन् 'भोजने' इति शेषः । अत एव दृढबलेन-"जीर्णाजीर्णे समश्नतः" ( च. चि. स्था. अ. २७ )-इति पठितम् । एते च यथासंभवं श्लेष्मादीनां हेतवः । सश्लेष्ममेदःपवन इति । सश्लेष्ममेदश्चासौ पवनश्चेति सश्लेष्ममेदः पवन इति विग्रहः । इतरं दोषं=पित्तम् । अस्यां सम्प्राप्तौ वातस्य प्राधान्यमुक्तम्, अत एव सुश्रुतेन महावातव्याधावयं रोगः पठितः । चरके तु कफस्य प्रधान्यमुक्तम् । यदाह—'ऊरू श्लेष्मा समेदस्को वातपित्तेऽभिभूय तु" ( च. चि. स्था. अ. २७ )—इत्याह । तत्र चरके आवरकस्य श्लेष्मणः प्राक्चिकित्स्यत्वेन प्राधान्यम्, आरम्भकत्वेन तु सुश्रुते पवनस्येति न विरोधः । परकीयाविवेत्यनेन उत्क्षेपणगमनादिष्वप्रभुत्वं दर्शयति । ध्यानादिभिर्ज्वरान्तैरुपलक्षितः । 'पुरुष' इति शेषः ॥ १-५ ॥

भा०टी०-ऊरुस्तम्भका निदान और सम्प्राप्ति-भोजन कुछ या अधिक जीर्ण और कुछ अजीर्ण हो, इस हालत में ठण्डा, गरम, पतला, सूखा, भारी, चिकना पदार्थों का सेवन, अधिक परिश्रम, शरीर का अधिक हिलाना डुलाना, दिनमें सोना, रात में जागना, इन कारणों से वायु कुपित होकर कफ और मेद तथा पित्त को दूषित कर पहलेसे इकट्ठे हुए आम को ऊरु=जाँघों में लाकर भीतर जाघों की हड्डियों में मेद और कफ को भर कर ऊरु को जकड़ देता है । बाद ऊरु ऐसे जकड़ जाते हैं कि दोनों जाँघ सुन्न, ठंडे और बे जान के मालूम होते हैं । अधिक बोझदार और दूसरों की जाँघें मालूम होती हैं । उनमें पीड़ा बड़ी तेज होती है । ध्यान, अंग मर्द, ठंडक, तन्द्रा, छर्दि, अरुचि, ज्वर होता है, पैर थहराता है, पैर उठाने में कष्ट होता है और स्पर्शज्ञान नहीं रहता, इसे ऊरुस्तम्भ कहते हैं । कोई २ आचार्य इसका नाम आढ्य वात बतलाते हैं ॥ १-५ ॥

अथोरुस्तम्भस्य पूर्वरूपाणि ।

प्राग्रूपं तस्य निद्राऽतिध्यानं स्तिमितता ज्वरः ।
रोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा ॥ ६ ॥

( च० चि० अ० २७ )

भा० टी०—ऊरुस्तम्भ का पूर्वरूप-निद्रा-ध्यान-शरीर से काम कम होना, ज्वर, रोमाञ्च, अरुचि, छर्दि, तथा पेंडुरी और जाँघों का थहराना, ये सब लक्षण ऊरुस्तम्भ के पूर्व रूप में होते हैं ॥ ६ ॥

अथोरुस्तम्भस्य लक्षणानि ।

वातशङ्किभिरज्ञानात्तस्य स्यात्स्नेहनात्पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ७ ॥
जंघोरुग्लानिरत्यर्थं शश्वच्चादाहवेदने ।
पादं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ ८ ॥
संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः ।
अन्यस्येव हि सम्भग्नावूरू पादौ च मन्यते[१] ॥ ९ ॥

( च० चि० अ० २७ )

म०—वातेत्यादि । वातशङ्किभिरिति सुप्तिसंकोचकम्पादिवातरोगसदृशलिङ्गदर्शनात्तच्छंकिभिः । अज्ञानादनिश्चयात्, मोहादितीशानः । तत्रोपशयानुपशयज्ञानार्थं स्नेहनम्, यदुक्तं चरके–"गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेत" ( च. चि. स्था. अ. ४ )–इति । ततः स्नेहनादनुपशयो भवतीत्याह–पादयोरित्यादि । उद्धरणमूर्ध्वचालनम् । आदाहवेदने इति आङ् ईषदर्थे; अन्ये त्वीपदर्थ एव नञमाहुः, उद्भूतदाहस्यासाध्यत्वेन वक्ष्यमाणत्वात् । 'आनाहवेपने' इति पाठान्तरमयुक्तम्, चरकटीकाकारैः सर्वैरव्याख्यातत्वात् । व्याधिस्वभावादयं चोरुस्तम्भ एक एव त्रिदोषारब्धः, न तु वातादिभेदादनेकविधः । उक्तं हि चरके व्याधिसंख्यायाम्–'एक एवोरुस्तम्भः, ( च. सु. स्था. अ. १९ )–इति । सम्भग्नाविति सम्भग्नाविव सम्भग्नौ ॥ ७–९ ॥

भा० टी०—इस ऊरुस्तम्भ रोग में सुप्ति-संकोच-कम्प आदि वात के लक्षणों के देखने से वैद्यों को वात रोग की आशङ्का होती है, कुछ ठीक निश्चय नहीं कर पाते और तेल लगवाते हैं तो उससे बीमारी और बढ़ जाती है—पैर शिथिल हो जाते हैं। स्पर्श ज्ञान नहीं रहता । पैर मुश्किल से उठता है और कष्ट होताहै, पेंडुरी और जाँघों में बिल्कुल जोर नहीं रहता,हरसमय कुछ२ जलन और पीड़ा हुआ करती है । पैर रखने पर बड़ी पीड़ा होती है। शीत स्पर्श नहीं मालुम होता, अगर बर्फ भी रख दिया जाय

---

१—"अन्यनेयौ हि" इति पाठान्तरम् ।

तो उसकी ठंडक न मालूम हो, पैर रखे रहने में ( बैठे रहने में ) दबाने पर, चलन में या हिलाने में मनुष्य असमर्थ रहता है। रोगी को ऐसा जान पड़ता है कि मेरी जांघ और पैर टूट गये हैं और ये दूसरों के हैं, यह ऊरुस्तम्भ स्वभावतः एकही प्रकार का त्रिदोषज होता है। वातादि भेद से कई तरह का नहीं होता ॥ ७–६ ॥

अथोरुस्तम्भस्यासाध्यलक्षणानि ।

यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥ १० ॥

( च० चि० अ० २७ )

भा० टी० ऊरुस्तम्भके असाध्य लक्षण—दाह, तोद, कम्प होने पर ऊरुस्तम्भ असाध्य होता है, और इन उपद्रवों के न होने पर पैदा होते ही चिकित्सा करने से अच्छा हो जाता—है ॥ १० ॥

इति श्रीहरिनारायण शर्म वद्यकृतायां निदानदीपिकायां रुग्विनिश्चयभाषाटीकाया मूरुस्तम्भनिदानम् ।

अथामवातनिदानम् ।

( Rheumatism ) ह्युमेटिज़्म् ।

अथामवातस्य निदानपूर्विका सम्प्राप्तिः ।

ऊरुस्तम्भे वायुः साम इत्युक्तम्, अतस्तदनन्तरमामवातनिदानमाह—

विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च ।
स्निग्धं भुक्तवतो ह्यन्नं व्यायामं कुर्वतस्तथा ॥ १ ॥
वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति ।
तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते ॥ २ ॥
वात-पित्त-कफैर्भूयो दूषितः सोऽन्नजो रसः ।
स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः ॥ ३ ॥
जनयत्याशु दौर्बल्यं गौरवं हृदयस्य च ।
व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः ॥ ४ ॥

**म०-विरुद्धेत्यादि** । विरुद्धाहारः=संयोगादिविरुद्धः, विरुद्धा च चेष्टा यथा-अजीर्णे व्यायाम-व्यवाय-जलप्रतरणादि । स्निग्धं भुक्तवतो व्यायामं कुर्वत इति मिलितो हेतुः । श्लेष्मस्थानमामाशय-सन्ध्यादि । तेन वातेन विदग्धो दूषितोऽसावामो धमनीः प्रतिपद्यते, 'धमनीभिः प्रपद्यत' इति पाठान्तरे श्लेष्मस्थानमिति योज्यम् । सोन्नजो रस इति आमः, अन्नरसस्यैवापक्वस्य तन्त्रान्तरे आमव्यपदेशात् । यदुक्तम्—"ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् । दुष्टमामाशयगतं रसमामं प्रचक्षते" (वा. सू. स्था. अ. १३) इत्यादि । अन्यैरप्युक्तम्—"आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः । आद्य आहारधातुर्यः स आम इति कीर्तितः"—इति । अपरे त्वाहुः—"अविपक्वमसंयुक्तं दुर्गन्धं बहु पिच्छिलम् । सदनं सर्वगात्राणामाम इत्यभिधीयते"—इति । अन्ये त्वाहुः—"आहारस्य रसः शेषो यो न पक्वोऽग्निलाघवात् । स मूलं सर्वरोगाणामाम इत्यभिधीयते"—इति । तथाचापरे—"आममन्नरसं केचित् केचित्तु मलसञ्चयम् । प्रथमां दोषदुष्टिं च केचिदामं प्रचक्षते"—इति । नानावर्ण इति वातादिदूषितत्वाद्बहुवर्णः ॥१-४॥

**भा० टी०**-आम वात का निदान औ सम्प्राप्ति-विरुद्ध भोजन, तथा विरुद्ध चेष्टा (काम)—( जैसे अजीर्ण की हालत में व्यायाम, मैथुन, जल में तैरना आदि ) करने से, मन्दाग्नि,किसी तरह का परिश्रम न करने से,स्निग्ध भोजन और व्यायाम करने से अन्न ठीक हज़म न होकर आम ( कच्चा ) ही रहता है और वायु कुपित हो जाता है, बाद वह आम वायु से प्रेरित होकर कफ स्थानों में-( आमाशय, सन्धि, कण्ठ, शिर, उरः स्थल ) जाकर फिर वायु से दूषित होकर सब धमनियों में भर जाताहै । फिर वह आम वात, पित्त, कफ, से दूषित होकर सब स्रोतों में लिपट जाता है । उस आमके वात आदि दोषों से दूषित होने से तीनों दोषों का कृष्ण, पीत, श्वेत आदि कई वर्ण होते हैं और वह विल्कुल पिच्छिल ( लबाब जैसा ) होता है । इस आम वृद्धि से निर्बलता तथा हृदय बोझदार मालुम होता है । आम बड़ाही कष्ट दायक तथा अनेक रोगों का घर होता है ॥ १—४ ॥

अपक्व अन्नरसको आम कहते हैं ।

### अथामवातस्य पूर्वरूपाणि ।

**युगपत् कुपितावन्तः स्त्रिकसन्धिप्रवेशकौ ।**
**स्तब्धं च कुरुतो गात्रमामवातः स उच्यते ॥ ५ ॥**

म०—युगपदित्यादि । वातकफौ युगपत्कुपितावन्तः=कोष्ठे त्रिकसन्धिप्रवेशकौ भवतः, अथवा गात्रं स्तब्धं कुरुतः, त्रिकसन्धिषु प्रवेशस्तद्गतवेदनया बोध्यः ॥५॥

भा० टी०—आम वात का स्वरूप—वात तथा कफ और आम एक साथही कुपित होकर कटि प्रदेश तथा सन्धियों में घुस कर पीड़ा पैदा कर देते हैं, अथवा शरीर को जकड़ देते हैं, तो उसे आमवात कहते हैं ॥ ५ ॥

## अथामवातस्य सामान्यलक्षणानि ।

आमवातस्य सामान्यलक्षणमाह—

अङ्गमर्दोऽरुचिस्तृष्णा आलस्यं गौरवं ज्वरः ।
अपाकः शूनताऽङ्गानामामवातस्य लक्षणम् ॥ ६ ॥

म०—अङ्गमर्द इत्यादि ॥ ६ ॥

भा० टी०—आम वात के सामान्य लक्षण—अंग मर्द, अरुचि, तृष्णा आलस्य, गौरव, ज्वर, भोजन हजम न होना, शरीर में सूजन आ जाना, यह आम वात का सामान्य लक्षण है ॥ ६ ॥

## अथातिवृद्धिं गतस्यामवातस्य लक्षणानि ।

तस्यैवातिवृद्धस्य लक्षणमाह—

स कष्टः सर्वरोगाणां यदा प्रकुपितो भवेत् ।
हस्त-पाद-शिरो-गुल्फ-त्रिक-जानूरु-सन्धिषु ॥ ७ ॥
करोति सरुजं शोथं यत्र दोषः प्रपद्यते ।
स देशो रुज्यतेऽत्यर्थं व्याविद्ध इव वृश्चिकैः ॥ ८ ॥

म०—स इत्यादि । वृश्चिकैः=सविषकीटविशेषैः । स इति आमवातः ॥७–८॥

भा० टी०—बहुत बढ़े हुए आम वात के लक्षण—यह आमवात जब बहुत बढ़ जाता है तो सब रोगों से बढ़ कर यह कष्टप्रद होता है । हाथ, पैर, शिर, गुल्फ, कमर, घुटना जाँघ और सन्धियों में सूजन के साथ पीड़ा पैदा कर देता है और शरीर में जहां २ यह जाता है वहां २ ऐसी अधिक पीड़ा होती है कि मानो बिच्छू ने डंक मारा है॥७–८॥

## अथामवातस्योपद्रवाः ।

उपद्रवानाह—

जनयेत् सोऽग्निदौर्बल्यं प्रसेकारुचिगौरवम् ।
उत्साहहानिं वैरस्यं दाहं च बहुमूत्रताम् ॥ ९ ॥

कुक्षौ कठिनतां शूलं तथा निद्राविपर्य्ययम् ।
तृड्-छर्दि-भ्रम-मूर्च्छाश्च हृद्ग्रहं विड्विबद्धताम् ॥
जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान् ॥ १० ॥

म०—जाड्यमकर्मण्यत्वम् अन्यानुपद्रवान्=संकोचखञ्जत्वादीन् ॥९-१०॥

भा० टी०-आम वात के उपद्रव-बढ़े हुए आमवात से मन्दाग्नि, मुंह से लार वहना, अरुचि, गौरव, काम करने में मन न लगना, मुंह का फीका पन, दाह, पेशाव का वहुत होना, कोखा का कड़ा हो जाना और उसमें पीड़ा होना, नींद न लगना, प्यास कय, भ्रम, मूर्च्छा, हृदय में पीड़ा, पाखाना न उतरना, शरीर का जकड़ जाना, आंतों में आवाज होना, आनाह=पेट फूलकर पाखाना कय कुछ न होना, तथा दूसरे रोग-संकोच खञ्जता, पक्षाघात, आदि उपद्रव रूप से पैदा हो जाते हैं ॥ ९-१० ॥

## अथ पित्तादियुक्तस्य विशेषलक्षणानि ।

तस्य विशेषलक्षणान्याह—

पित्तात् सदाहरागं च सशूलं पवनानुगम् ।
स्तिमितं गुरुकण्डूं च कफदुष्टं तमादिशेत् ॥ ११ ॥

म०-पित्तादित्यादि ॥ ११ ॥

भा० टी०-आमवात में पित्त अधिक होने से शरीर में जलन तथा शरीर लाल हो जाता है, वात अधिक होने से शूल और कफ अधिक होने से जड़ता गौरव और खुजली होती है ॥ ११ ॥

## अथास्य साध्यासाध्यत्वादिविचारः ।

तस्य साध्यत्वादिकमाह—

एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते ।
सर्वदेहचरः शोथः स कृच्छ्रः सान्निपातिकः ॥ १२ ॥

म०-एकेत्यादि ॥ १२ ॥

भा० टी०-एक दोष अधिक होने पर आमवात साध्य, दो दोष होने पर याप्य, सब शरीर में जिसमें सूजन हो, तथा सन्निपात का आमवात कष्ट साध्य होता है ॥१२॥

इति हरिनारायण शर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चयभाषाटीकायाम् वातनिदानम् ।

## अथ शूलपरिणामशूलान्नद्रवशूलनिदानम् ।

कालिक( Colic=वातिक उदरशूल, Neuralgic Pain=स्नायुशूल ) न्यूरलजिक्पेन

### अथ शूलरोगस्योत्पत्तिक्रमः ।

आमवातेऽपि शूलं भवतीत्यतस्तदनन्तरं शूलनिदानम्—

दोषैः पृथक् समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ।
सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥ १ ॥

म०—ज्वरादिवत् शूलस्यापि प्रागुत्पत्तिरस्ति । यदाह हारीतः,—"अनंगनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजश्च । तमापतन्तं सहसा निरीक्ष्य भयार्दितो विष्णुतनुं प्रविष्टः ॥ स विष्णुहुंकारविमोहितात्मा पपात भूमौ प्रथितः स शूलः । स पञ्चभूतानुगतं शरीरं प्रदूषयत्यस्य हि पूर्वसृष्टिः"—इति । एतेन शूलसंभवत्वादस्य शूलमिति संज्ञा, शूलनिखातवद्वेदनाजनकत्वाच्च । तदाह वृद्धसुश्रुतः,—"शङ्कुस्फोटनवत्तस्य यस्मात्तीव्रा हि वेदना शूलासक्तस्य भवति तस्माच्छूलमिहोच्यते" ( सु. उ. त अ. ४ )—इति । कफपित्तादिशूलेष्ववश्यं भावी वायुरित्याह—सर्वेष्वित्यादि । प्रभुः = कर्ता ॥ १ ॥

भा० टी०—शूल रोग आठ प्रकार का होता है १, वात से, २ पित्त से, ३ कफ से, ४ वात पित्तसे, ५ कफपित्त से, ६ वातकफ से,७ त्रिदोष से,और ८आम से । इन आठों शूलो में वायु प्रधान होता है, अर्थात् शूल रोग वातप्रधान होता है ॥ १ ॥

### अथ वातशूलस्य निदानानि ।

वातिकमाह—

व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् ।
कलाय-मुद्गाढकि-कोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥ २ ॥
कषाय-तिक्तातिविरूढजान्न-विरुद्ध-वल्लूरक-शुष्कशाकात् ।
विट्-शुक्र-मूत्रानिल-वेगरोधाच्छोकोपवासादतिहास्यभाष्यात् ॥३॥
वायुः प्रवृद्धो जनयेद्धि शूलं हृत्-पार्श्व-पृष्ठ-त्रिक-वस्ति-देशे ।
जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् ॥४॥

मुहुर्मुहुश्चोपशमप्रकोपी विड्-वात-संस्तम्भन-तोद भेदैः ।
संस्वेदनाऽभ्यञ्जन-मर्दनाद्यैः स्निग्धोष्णभोज्यैश्चशमं प्रयाति॥५॥

म०—व्यायामेत्यादि । शीतजलातिपानात्=शीतलजलस्य प्रभूतपानात् । आढकी=तुवरी, कोरदूषः=कोद्रवः, विरूढं चान्नम्=अङ्कुरितधान्यकृतमन्नम्, विरुद्धं=क्षीरमत्स्यादिकम् वल्लूरं=शुष्कमांसम् । यद्यपि सर्वैरेव वातकोपनैर्वातशूलं स्यात्तथाऽपि व्यायामादिपाठेनैतद्दर्शयति—व्यायामादयो यथा वातहेतवस्तथा शूलहेतवोऽपीति, दोषव्याधिहेतव इत्यर्थः । एवं पित्तशूलादिषु द्रष्टव्यम् । जीर्ण इत्याहारे । घनागमे=वर्षासु, मेघोदये च । मुहुर्मुहुरुपशम-प्रकोपौ वायोश्चलत्वेन ॥ २—५ ॥

भा० टी०—वातशूल के निदान—व्यायाम, अतिमैथुन, रात में जागना, शीत जल अधिक पीना, मटर, मूंग, अरहर, कोदो, रुक्ष अन्न—चना आदि, अजीर्ण में भोजन, चोट लगना, कसैला, कड़वा ( जैसे नीम ) अङ्कुरित धान्य, विरुद्ध भोजन, सूखा मांस, सूखा शाक, पुरीष, मूत्र, वीर्य और वायु का वेग रोकना, शोक, उपवास, अधिक हँसना और बोलना, इनकामों के अधिक करने से वायु कुपित होकर हृदय, पँसुली, पीठ, मूत्राशय, इनस्थानों में शूल ( कीलगड़ने की तरह पीड़ा ) पैदा कर देता है। भोजन के पक जानेपर, सायङ्काल, वर्षाऋतु और जाड़े के दिनों में शूल अधिक होता है। वायुकी चञ्चलता से बार २ शूल होता है और शान्त होता है, इस में पाखाना रुक जाता है, हवा नहीं खुलती और सूई चुभो ने जैसी तथा फाड़ने की तरह पीड़ा होती है। सेकने, तेल लगाने और मलने तथा स्निग्ध और गरम भोजन से आराम होता ॥ २—५ ॥

## अथ पैत्तिकशूलस्य निदानानि ।

पैत्तिकमाह—

क्षारातितीक्ष्णोष्ण-विदाहि-तैल-निष्पाव-पिण्याक-कुलत्थ-यूषैः ।
कट्वम्ल-सौवीर-सुराविकारैः क्रोधानलाऽऽयास-रविप्रतापैः ॥ ६ ॥
ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम् ।
तृण्-मोह-दाहाऽऽर्ति-करं हि नाभ्यां संस्वेद-मूर्च्छा-भ्रम-चोष-युक्तम् ।
मध्यन्दिने कुप्यति चार्धरात्रे विदाहकाले जलदात्यये च ।
शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरपि भोजनैश्च ॥८॥

म०—क्षारेत्यादि । क्षारो=यवक्षारादिः, मुष्ककादिकृतक्षारद्रव्यं च । तीक्ष्णोष्णं=मरिचराजिकादि, विदाहि=वंशकरीरादि, तैलं=तिलविकृतिः निष्पावः=शिम्बिः, पिण्याकः=निस्नेहः सर्षपादिकल्कः, कुलत्थयूषोऽत्र कुलत्थान्नपानोपलक्षणः । सौवीरं=सन्धानविशेषः । रविप्रतापो=रौद्रः । ग्राम्यातियोगो=मैथुनातिसेवा । विदाहीति पूर्वं पठित्वाऽपि अशनैर्विदग्धैरित्यनेनाविदाहिवस्तुनोऽपि दोषवशेन विदाहित्वं दर्शितम् । यदाह सुश्रुतः—"स्रोतस्यन्नवहे पित्तमग्नौ वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते" (सु. सू. स्था. अ. ४६ ) इति । विदाहकाल इत्याहारस्य । जलदात्यये=शरदि ॥ ६–८ ॥

भा० टी०—पैत्तिक शूलके निदान—क्षार, अति उष्ण, विदाही—जलन पैदा करने वाले पदार्थ, तेल, निष्पाव=बोड़ा, खरी, कुलथी, यूष, चरपरा, खट्टा, सौवीर ( बिना छिलका के जव की कांजी ) अनेक प्रकार के मद्य, क्रोध, अग्नि, परिश्रम, घाम, अधिक मैथुन, भोजन अधपका रहना इन पदार्थों के अधिक सेवन से पित्त कुपित होकर शीघ्र ही नाभि में शूल पैदा कर देता है, । इसमें प्यास, बेहोशी, दाह, पीड़ा, पसीना, मूर्च्छा, भ्रम, चूसन, ये रोग भी पैदा हो जाते हैं । दोपहर, आधीरात, भोजन के पकते समय, और शरदृतु में पित्तशूल अधिक होता है, जाड़े के दिनों में तथा मीठे और ठण्डे भोजन से शान्त होता है ॥ ६—८ ॥

### अथ श्लैष्मिकशूलस्य निदानानि ।

श्लैष्मिकमाह—

आनूप-वारिज-किलाट-पयोविकार-
मांसेक्षु-पिष्ट-कृशरा-तिल-शष्कुलीभिः ।
अन्यैर्बलासजनकैरपि हेतुभिश्च
श्लेष्मा प्रकोपमुपगम्य करोति शूलम् ॥ ९ ॥
हृल्लास-कास-सदानारुचि-संप्रसेकै-
रामाशये स्तिमितकोष्ठ-शिरोगुरुत्वैः ।
भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं
सूर्योदयेऽथ शिशिरे कुसुमागमे च ॥ १० ॥

१ पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका । तक्रेण तक्रकूर्चकस्यात्तयोः पिण्डः किलाटकः ।

म०—आनूपेत्यादि । आनूपवारिजं मांसादिकं, किलाटं=तक्रकूर्चिका, कृशरा=तिल-तण्डुल-माष-यवागूः सूर्योदये=प्रातः । कुसुमागमे=वसन्ते ॥९॥१०॥

भा० टी०—कफज शूलके निदान—जल समीप रहने वाले-भैंस सूअर आदि तथा जल जन्तु-मछली आदि, किलाट=फटा दूध का पिण्ड ( छेना ) दूध, दही, खोआ, मलाई, रबड़ी, मांस, मैदा, उर्द, कृशरा=खिचड़ी, तिल, कचौरी पूरी, इन पदार्थों से, तथा अन्य कफ बिगाड़ने वाले पदार्थों के सेवन से कफ कुपित होकर आमाशय ( मेदा ) में शूल पैदा कर देता है। इसमें ओकाई, कास, सुस्ती, अरुचि, मुह से लार गिरना, स्तिमितकोष्ठ=कब्ज, शिर भारी रहना, ये रोग भी साथ २ पैदा हो जाते हैं। भोजन करने पर, प्रातः काल, जाड़े में और वसन्त ऋतु में कफशूल अधिक बढ़ता है ॥ ९-१० ॥

## अथ सान्निपातिकशूलस्य लक्षणानि ।

सर्वेषु दोषेषु च सर्वलिङ्गं विद्याद्भिषक् सर्वभवं हि शूलम् ।
सुकष्टमेनं विष-वज्र-कल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः ॥११॥

भा० टी०—सान्निपातिक शूलमें तीनों दोषों के लक्षण—होते हैं। यह शूल बड़ाही कष्टदायी, विष और बिजुली के समान इसे समझना चाहिए । यह एकदम असाध्य होता है ॥ ११ ॥

## अथामशूलस्य लक्षणानि ।

आमशूलमाह—

आटोप-हृल्लास-वमी-गुरुत्व-स्तैमित्यकाऽऽनाह-कफप्रसेकैः ।
कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति ॥१२॥

म०—आटोपेत्यादि । कफस्य लिङ्गेन=कफशूलोक्तलिङ्गेन ॥ १२ ॥

भा० टी०—आमशूलके लक्षण—आटोप=गुड़ गुड़ाहट, ओकाई, कय, शरीर और पेट का भारीपन, ठण्डक मालुम होना, आनाह=डकार और अधोवात का रुकना, मुह से कफ गिरना, ये लक्षण और कफ शूलके लक्षण=आमशूल में होते हैं ॥ १२ ॥

### अथ त्रिदोषोत्पन्नशूलस्य लक्षणानि।

बस्तौ हृत्-पार्श्व-पृष्ठेषु स शूलः कफवातिकः।
कुक्षौ हृन्-नाभि-मध्येषु स शूलः कफपैत्तिकः॥ १३॥
दाह-ज्वर-करो घोरो विज्ञेयो वातैपत्तिकः।

म०—वातपैत्तिकश्चरकोक्तवातपैत्तिकशूलस्थाने द्रष्टव्यः। एवं सान्निपातिकोऽपि उक्तदोषत्रयस्थाने। यदुक्तम्—"वातात्मकं बस्तिगतं वदन्ति पित्तात्मकं चापि वदन्ति नाभ्याम्। हृत्-पार्श्व-कुक्षौ कफसंनिविष्टं सर्वेषु देशेषु च सन्निपातात्"-इति॥ १३॥

भा० टी०—मूत्राशय, हृदय, पँसुली, और पीठ का शूल कफवात से होता है। कोख, हृदय और नाभिके मध्यका शूल कफपित्त से होता है। जिस शूल में दाह, ज्वर हो और बड़े जोरसे शूल हो तो उसे वातपित्तका समझना चाहिए॥ १३॥

### अथ शूलरोगस्य साध्यासाध्यत्वम्।

साध्यत्वादिलक्षणमाह—

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः॥ १४॥
सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रवः।

म०—एकेत्यादि। भूर्युपद्रव इति उपद्रवास्तु वेदनादयः। यदुक्तम्—"वेदना च तृषा मूर्च्छा आनाहो गौरवारुची। कासः श्वासश्च हिक्का च शूलस्योपद्रवाः स्मृताः" इति॥ १४॥

भा० टी०—एकदोष का शूल साध्य, दो दोषों का कृच्छ्र साध्य, और सन्निपात का तथा अनेक उपद्रवों से युक्त शूल असाध्य होता है॥ १४॥

### अथ परिणामशूलस्य सम्प्राप्तिः।

परिणामशूलमाह—

स्वैर्निदानैः प्रकुपितो वायुः संनिहितस्तदा॥ १५॥
कफपित्ते समावृत्य शूलकारी भवेद् बली।

म०—स्वैरित्यादि । अस्य च त्रिदोषजस्यापि नियतपरिणामकालसंभवत्वेन पित्तोल्वणत्वं द्रष्टव्यम् । यदुक्तमन्यत्र—"वलासः प्रच्युतः स्थानात् पित्तेन सह मूर्च्छितः । वायुमादाय कुरुते शूलं जीर्यति भोजने ॥ कुक्षौ जठरपार्श्वेषु नाभौ वस्तौ स्तनान्तरे । पृष्ठमूलप्रदेशेषु सर्वेष्वेतेषु वा पुनः ॥ भुक्तमात्रेऽथवा वान्ते जीर्णेऽन्ने च प्रशाम्यति । षष्टिक-व्रीहि-शालीनामोदनेन विवर्धते ॥ तत्परिणामजं शूलं दुर्विज्ञेयं महागदम् । तमाहू रसवाहानां स्रोतसां दुष्टिहेतुकम् ॥ केचिदन्नद्रवं प्राहुरन्ये तत् पक्तिदोषतः । पक्तिशूलं वदन्त्येके केचिदन्नविदाहजम्"—इति ॥ १५ ॥

भा० टी०—परिणाम शूल की सम्प्राप्ति-वातकारक पदार्थों के सेवन से वात कुपित होकर कफ और पित्त को दूषित कर भोजन के परिणाम काल में ( हजम हो जाने पर ) शूल पैदा करता है ॥ १५ ॥

### अथ परिणामशूलस्य सामान्यलक्षणानि ।

भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् ॥ १६ ॥
तस्य लक्षणमप्येतत् समासेनाभिधीयते ।

म०—भुक्ते जीर्यति=आहारे पच्यमाने ॥ १६ ॥

भा० टी०—भोजन के पकते समय जो शूल होता है, वह परिणाम शूल है । उसका थोड़े में लक्षण आगे कहा जाता है ॥ १६ ॥

### अथ वातिकपरिणामशूलस्य लक्षणम् ।

तस्य वातादिभेदेन लक्षणेषु वातिकमाह—

अध्मानाटोप-विण्-मूत्र-विबन्धारति-वेपनैः ॥ १७ ॥
स्निग्धोष्णोपशमप्रायं वातिकं तद् वदेद् भिषक् ।

म०—आध्मानेत्यादि ॥ १७ ॥

### अथ पैत्तिकपरिणामशूलस्य लक्षणम् ।

तृष्णा-दाहारति-स्वेदं कट्वम्ल-लवणोत्तरम् ॥ १८ ॥
शूलं शीतशमप्रायं पैत्तिकं लक्षयेद् बुधः ।

म०—तृष्णादाहारतिस्वेदा यत्र सन्ति तत् तृष्णादाहारतिस्वेदम् । कट्वम्ललवणोत्तरं=कट्वम्ललवणैर्वृद्धम्। शीतशमप्रायं शीतलोपशमबहुलम् ॥ १८ ॥ —

अथ श्लैष्मिकपरिणामशूलस्य लक्षणम् ।

छर्दि-हृल्लास-संमोह स्वल्परुग् दीर्घसन्तति ॥ १६ ॥
कटु-तिक्तोपशान्तं च तच्च ज्ञेयं कफात्मकम् ।

म०--छर्दिहृल्लाससंमोहलिङ्गानि यस्मिन् सन्ति तच्छर्दिहृल्लाससंमोहम् । दीर्घसन्ततीति चिरानुबन्धि ॥ १९ ॥—

भा० टी०—आध्मान=वायु से पेट फूल जाना, पाखाना पेशाब न होना, पेट में गुड़गुड़ होना, मन कहीं न लगना, शरीर का कांपना, स्निग्ध और उष्ण पदार्थों से प्रायः शान्त हो, इन लक्षणों से वैद्य वातिकपरिणाम शूल कहते हैं। तृष्णा, दाह, अरति, पसीना निकलना इन लक्षणों से तथा चरपरा, खटाई और नमक से बढ़नेवाला तथा शीत पदार्थों से शान्त होने वाला परिणामशूल पत्तिकसमझे । छर्दि हृल्लास,मोह होना, पीड़ा कम होना, देर तक ठहरनेवाला, कटु और तिक्तपदार्थों से शान्त होने वाला परिणाम शूल कफ से होता है ॥ १७-१६ ॥

अथ द्वन्द्वजपरिणामशूलस्य लक्षणम् ।

संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत् ॥ २० ॥

भा० टी०—दो दोषों के लक्षणों से द्विदोषज और तीन दोषों के लक्षणों से त्रिदोषज समझना चाहिए । इनमें त्रिदोषज और कृशता, निर्बलता तथा मन्दाग्नि पैदा करने वाला परिणामशूल असाध्य होता है ॥ २० ॥

अथ त्रिदोषजपरिणामशूलस्य लक्षणम् ।

त्रिदोषजमसाध्यं तु क्षीण-मांस—बलानलम् ।

अथ अन्नद्रवाख्यशूलस्य लक्षणानि ।

त्रिदोपविकृतिविशेषमन्नद्रवाख्यं शूलमाह—

जीर्णे जीर्यत्यजीर्णे वा यच्छूलमुपजायते ॥ २१ ॥
पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च ।
न शमं याति नियमात् सोऽन्नद्रव उदाहृतः ॥ २२ ॥
( अन्नद्रवाख्यशूलेषु न तावत् स्वास्थ्यमश्नुते ।
वान्तमात्रे जरत्पित्तं शूलमाशु व्यपोहति ॥ १ ॥ )

म०-जीर्ण इत्यादि । जीर्णे 'आहारे' इति शेषः, एवं जीर्यत्यजीर्णे वेत्यत्र सर्वदेत्यर्थः, न शमं याति नोपशेते इत्यर्थः, न ह्यसाध्यं, चिकित्साविधानादिति ॥ २१-२२ ॥

भा० टी०—जो शूल हर समय होता रहे, चाहे भोजन पकने का समय हो, या भोजन पक चुका हो, चाहे उपवास करे, चाहे खाय, चाहे परहेज करे, या न करे, शान्त होने का कोई समय या कारण न जान पड़े, उसे अन्नद्रव शूल कहते हैं। अन्नद्रव शूल, जब तक कय होकर पित्त नहीं गिर पड़ता तब तक शान्त नहीं होता, पित्त गिरने पर तुरन्त शान्त हो जाता है ॥ २१—२२ ॥

इति श्री हरिनारायण शर्म वैद्यकृतायां निदानदीपिकायां
रुग्विनिश्चयभाषाटीकायां शूलनिदानम् ।

## अथोदावर्तानाहनिदानम् ।

## ( Intestinal obstruction ) इन्टेस्टाइनल आब्स्ट्रक्शन

### अथोदावर्तरोगस्य कारणानि ।

उदावर्तेऽपि शूलं भवतीति शूलानन्तरमुदावर्तमाह—

**वात-विण्-मूत्र-जृम्भा-ऽस्र-क्षवोद्गार-वमीन्द्रियैः-।**
**क्षुत्तृष्णोच्छ्वास-निद्राणां धृत्योदावर्तसंभवः ॥ १ ॥**

म—०वातेत्यादि । अस्रमश्रु, इन्द्रियशब्देनात्र शुक्रं, क्षुत्=बुभुक्षा । धृत्या= वेगविधारणेन । एते वातादयस्त्रयोदश नियमार्थाः, तेनान्येषां क्रोधादीनां वेगविधारणं न तद्धेतुः, स्वास्थ्यहेतुत्वात् । यदाह चरकः—"लोभ-शोक-भय-क्रोध-मान-वेगान् विधारयेत्" ( च. सू. स्था अ ७ )-इत्यादि । सर्वोदावर्तेषु च वायुरेव कारणम् । यदाह सुश्रुतः—"सर्वेष्वेतेषु विधिवदुदावर्तेषु कृत्स्नशः वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये" ( सु, उ, त, अ, ५५ )-इत्यादि । उद्भूतेन वेगविधारणेनावृतस्य वायोर्वर्तनमित्युदावर्तनिरुक्तिः, अन्ये तु वायो रूर्ध्वमावर्तो गमनमित्युदावर्तमाहुः, तन्न, अश्रुस्रावादेरव्यापकत्वात्; छत्रिणो गच्छन्तीति न्यायेन वा समाधेयम् ॥ १ ॥

---

१—"वमीन्द्रियैः" इति पाठान्तरे अवरुध्यमानैरिति संयोज्यम् ।

भा० टी०—उदावर्त के कारण—अपानवायु, पाखाना, पेशाब, मूत्र, जँभाई, आंसू, छींक, डकार, कय, वीर्य, भूख, प्यास,सांस, और नींद के रोकने से उदावर्त होता है। इन वेगों के धारण करने से वायु रुक कर शरीर में चक्कर खाती है और रोग उत्पन्न कर देती है। इसी का नाम उदावर्त है॥ १॥

अथ वातोदावर्तस्य लक्षणम् ।

उक्तवाताद्युदावर्तानां क्रमेण लक्षणान्याह–

वात-मूत्र पुरीषाणां सङ्गो ध्मानं क्लमो रुजा ।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात्॥ २ ॥

म०—वातेत्यादि । अन्ये इति तोद-शूलादयः ॥ २ ॥

भा० टी०—वात के रोकने से हवा खुलना, पाखाना पेशाब बंद हो जाता है। पेट फूलता है। थकाहट मालुम होती है । पेट में पीड़ा होती है और शूल, तोद, भेद होता है॥ २॥

अथ मलावरोधजस्य लक्षणम् ।

आटोप-शूलौ परिकर्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः ।
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ३ ॥

भा० टी०—पाखाना के रोकने से-पेट में पीड़ा और गुड़गड़ाहट होती है, कैंची से कतरने के समान दर्द होता है। पाखाना नहीं होता, डकारें आती हैं अथवा मुह से मल निकलता है॥ ३॥

अथ मूत्ररोधजस्य लक्षणम् ।

बस्ति-मेंहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजाः ।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ४ ॥

मेहनं=शेफः । विनाम=आनाहपीडया ( बन्धनवत्पीडया ) नतगात्रत्वम् । वङ्क्षणयोरानाहो=बन्धनवत् पीडा ॥ ४ ॥

भा० टी०—मूत्र रोकने से बस्ति ( पेड़ू ) और इन्द्रिय में पीड़ा, मूत्र कृच्छ्र, शिरमें पीडा, दर्द से शरीर का झुक जाना, वङ्क्षण=पट्ठा में तनाव, ये सब लक्षण होतेहैं ॥४॥

अथ जृम्भोपघातजस्य लक्षणम् ।

मन्या-गल-स्तम्भ-शिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः ।
तथाऽक्षि-नासा- वदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥५॥

भा० टी०—जँभाई के रोकने से मन्या और गला जकड़ जाता है, शिर में पीड़ा होती है, आँख, नाक, मुह और कानमें वात से कई रोग पैदा हो जाते हैं ॥ ५ ॥

अथाश्रूदावर्तस्य लक्षणम् ।

आनन्दजं वाऽप्यथ शोकजं वा नेत्रोदकं प्राप्तमुञ्चतो हि ।
शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥६॥

म०—नेत्रोदकम्=अश्रु,प्राप्तमागतम्, अमुञ्चतो 'नरस्य, इति शेषः । चकारात्तन्त्रान्तरोक्तप्रतिश्यायहृद्रोगारुचिप्रभृतीनां ग्रहणम् ॥ ६ ॥

भा०टी०—आँखों में आंसू दो कारणों से आते हैं-अधिक आनन्द से या शोक से। उस आंसू को रोकदेनेसे शिर भारी हो जाता है, नेत्रों में रोग हो जाते हैं और पीनस हो जाता है ॥ ६ ॥

अथ छिक्कोदावर्तस्य लक्षणम् ।

मन्यास्तम्भः शिरः शूलमर्दितार्धावभेदकौ ।
इन्द्रियाणां च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥ ७ ॥

म०—अर्धावभेदोऽर्धशिरः शूलम् ॥ ७ ॥

भा० टी०—छींक के रोकने से मन्यास्तम्भ, शिरमें शूल, अर्दित, अधकपारी, और आंख, कान, नाक, जीभ आदि इन्द्रियों में विषय ग्रहण करने की शक्ति कम हो जाती है ॥ ७ ॥

अथोद्गारोदावर्तस्य लक्षणम् ।

कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथवाऽप्रवृत्तिः ।
उद्गारवेगेऽभिहते भवन्ति घोरा विकाराः पवनप्रसूताः ॥८॥

( सु० उ० अ० ५५ )

म०—कूजोऽव्यक्तभाषणमिति कार्त्तिकः । वायोरप्रवृत्तिरुच्छ्वासानिरोधः । घोरा विकारा हिक्कादयः ॥ ८ ॥

भा० टी०—डकार के रोकने से-गला और मुह भरा जान पड़ता है। तोद, पेट में गुड़गुड़ाहट, श्वास रुक जाना, ये लक्षण होते हैं, और वायु के दूसरे हिचकी आदि रोग भी होते हैं ॥ ८ ॥

अथ छर्द्युदावर्तस्य लक्षणम् ।

कण्डू-कोठारुचि-व्यङ्ग-शोथ-पाण्ड्वामय-ज्वराः ।
कुष्ठ-वीसर्प-हृल्लासाश्छर्दिनिग्रहजा गदाः ॥ ९ ॥

( च० सु० अ० ७ )

भा० टी०—कय के रोकने से-खुजली, दिदोरा, अरुचि, व्यङ्ग-झाँई, शोथ, पाण्डु रोग, ज्वर, कुष्ठ, वीसर्प हृल्लास, ये रोग पैदा होते हैं ॥ ९ ॥

अथ शुक्रोदावर्तस्य लक्षणम् ।

मूत्राशये वै गुदमुष्कयोश्च शोथो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा विहते च शुक्रे ॥ १० ॥

( सु० उ० अ० ५५ )

म०-मूत्राशये वस्तौ, 'मूत्रायन' इति पाठे स एवार्थः । वैशब्दः पादपूरणे- तत्स्रवणं=शुक्रस्य स्यन्दनम् ॥ १० ॥

भा० टी०—मैथुन के समय वीर्य रोक देने से-मूत्राशय, गुदा, और अण्डकोश में सूजन। और पीडा, शुक्राश्मरी, मूत्र रुक जाना,वीर्य का गिरना और वात कुण्डलिका आदि रोग पैदा होते हैं ॥ १० ॥

अथ क्षुदुदावर्तस्य लक्षणम् ।

तन्द्रा-ऽङ्गमर्दावरुचिः श्रमश्च क्षुधाभिघातात्कृशता च दृष्टेः ।

भा० टी०—भूख के रोकने से—तन्द्रा, अङ्गमर्द, अरुचि, थकावट और आँख की रोशनी कम होना, ये लक्षण होते हैं ॥

अथ तृष्णोदावर्तस्य लक्षणम् ।

कण्ठास्यशोषः श्रवणावरोधस्तृष्णाविघाताद् हृदये व्यथा च॥११॥

( सु० उ० अ० ५५ )

भा० टी०—प्यास के रोकने से-गला और मुह सूखता है, बहरापन, और हृदय में पीड़ा, ये लक्षण होते हैं ॥ ११ ॥

अथ श्वासोदावर्तस्य लक्षणम् ।

श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमोहावथवाऽपि गुल्मः ।

( सु० उ० अ० ५५ )

भा० टी०—परिश्रम करने पर जो साँस फूलने लगता है, उसके रोकने से, हृदय में पीड़ा, मूर्च्छा अथवा गुल्म रोग होता है ॥

अथ निद्रोदावर्तस्य लक्षणम् ।

निद्रोदावर्तमाह—

जृम्भाऽङ्गमर्दोऽक्षिशिरोतिजाड्यं निद्राभिघाता दथवाऽपि तन्द्रा ॥१२॥

( सु० उ० अ० ५५ )

म०–अतिजाड्यं=गौरवम् । "शिरोगात्राक्षिगौरवम्" इति तंत्रान्तरे पाठः १२

भा० टी०—निद्रा के रोकने से जँभाई, अङ्गमर्द, आँख और शिर में भारीपन रहता है, और तन्द्रा होती है ॥ १२ ॥

अथ कुपितवातजोदावर्तस्य निदानानि ।

वेगनिरोधजानुदावर्तानभिधाय रूक्षादिकुपितवातजमाह—

वायुः कोष्ठानुगो रूक्षैः कषाय-कटु-तिक्तकैः ।
भोजनैः कुपितः सद्य उदावर्तं करोति हि ॥ १३ ॥

( सु० उ० अ० ५५ )

म०—वायुरित्यादि ॥ १३ ॥

भा० टी०—वेग के रोकने से तो उदावर्त होता ही है, किन्तु रूक्ष, कषैला, कड़वा और तीता भोजन से कुपित वायु पेट में जाकर उदावर्त कर देता है ॥ १३ ॥

अथास्य सम्प्राप्तिः ।

वात-मूत्र-पुरीषासृक्-कफ-मेदो-वहानि वै ।
स्रोतांस्युदावर्तयाते पुरीषं चातिवर्तयेत ॥ १४ ॥
ततो हृद्-वस्ति-शूलाऽऽर्तो हृल्लासारतिपीडितः ।
वात-मूत्र-पुरीषाणि कृच्छ्रेण लभते नरः ॥ १५ ॥
श्वास-कास-प्रतिश्याय-दाह-मोह-तृषा-ज्वरान् ।
वमि-हिक्का-शिरोरोग-मनः-श्रवण-विभ्रमान् ।
बहूनन्यांश्च लभते विकारान् वातकोपजान् ॥ १६ ॥

म०—उदावर्तयति=आवृणोति । अतिवर्तयेत्=शोषयेत् । कृच्छ्रेण लभत इति कष्टेन प्रवर्तयति । अत्र केचित् सुश्रुतोक्तमसाध्यलक्षणं पठन्ति,—"तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरुपद्रुतम् । शकृद्वमन्तं मतिमानुदावर्तिनमुत्सृजेत्" ( सु. उ. त. अ. ५५ )–इति ॥ १६ ॥

भा० टी०—अपने कारणों से कुपित वायु वात,मूत्र–पुरीष–रक्त–कफ–मेदस् वाहिनी स्रोतों को रोक कर पुरीष सुखा देता है। वाद हृदय वस्ति में शूल, हृल्लास, अरति, इन रोगों से पीड़ित होने पर मनुष्य का वात–मूत्र–पुरीष बड़े कष्ट से निकलता है,तथा श्वास, कास, प्रतिश्याय, दाह मूर्च्छा, प्यास, ज्वर, कय, हिचकी, शिरोरोग, मनो विभ्रम–जैसे रस्सी में सर्प का ज्ञान,श्रवण विभ्रम–कानों से कम सुन पड़ना, और भी बहुत से वात रोग पैदा होते हैं॥ १२–१६ ॥

अथानाहरोगस्य लक्षणानि ।

( constipation ) कान्स्टिपेशन ।

इदानीं विगुणानिलजत्वेन समानचिकित्स्यत्वेनानाहमाह—

आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन ।
प्रवर्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ॥ १७ ॥

( सु० उ० अ० ५६ )

म०—आममित्यादि । नेति पूर्वेण संबध्यते ॥ १७ ॥

भा० टी०—आनाह रोग के लक्षण–आम या पुरीष धीरे २ इकट्ठे हों बाद कुपित वायु द्वारा रोके जाकर ठीक तरह से न निकलें। इसे आनाह कहते हैं॥ १७॥

अथामजानाहस्य लक्षणम् ।

तस्मिन् भवन्त्यामसमुद्भवे तु तृष्णा-प्रतिश्याय-शिरोविदाहाः ।
आमाशये शूलमथो गुरुत्वं हृत्स्तम्भ उद्गारविघातनं च ॥ १८ ॥

( सु० उ० अ० ५६ )

भा० टी०—आमज आनाह में तृष्णा, प्रतिश्याय, शिर में जलन, आमाशय में शूल और भारीपन, हृदय का जकड़ जाना, डकार न आना ये सब रोग होते हैं॥ १८॥

अथ पुरीषरोधजानाहस्य लक्षणम् ।

स्तम्भः कटी-पृष्ठ-पुरीष-मूत्रे शूलोऽथ मूर्च्छा शकृतश्च छर्दिः ।
शोथश्च पक्वाशयजे भवन्ति तथाऽलसोक्तानि च लक्षणानि ॥१९॥

(च० चि० अ० ५६ )

म०—एवं छर्दिरित्येक एव छकारश्छन्दोऽनुरोधात् । स्तम्भशब्दः कट्यादेः स्तब्धतावाची, मूत्र–पुरीषयोश्चाप्रवृत्तिवाची । अलसोक्तानीति आध्मानवातनिरोधादीनि ॥ १९ ॥

भा० टी०—पुरीष के संचय से उत्पन्न आनाह में, कमर और पीठ जकड़ जाती है, पाखाना पेशाब नहीं होता, मूर्च्छा और पुरीष से मिली हुई कय होती है, शोथ और अलसक के रोग अफारा, हवा न खुलना, पेट में दर्द आदि रोग होते हैं॥१९॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायामुदावर्तादिनिदानम् ।

## अथ गुल्मनिदानम् ।

## ( Abdominal Tumour ) अब्डामिनल ट्यूमर ।

### अथ गुल्मरोगस्य सम्प्राप्तिः ।

गुल्मेऽप्यानाहो भवतीत्यानाहानन्तरं गुल्ममाह—

दुष्टा वातादयोऽत्यर्थं मिथ्याहार-विहारतः ।
कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ।
तस्य पञ्चविधं स्थानं पार्श्व-हृत्-नाभि-बस्तयः ॥ १ ॥

म०—दुष्टा इत्यादि । पञ्चधेति वात-पित्त-कफ-सन्निपात-रक्त-जाः । द्वन्द्व-जास्तु प्रकृतिसमसमवेतत्वान्न पृथग्गण्यन्ते, अर्शोरोगवत् । कोष्ठान्तरामाशयादिमध्ये, ग्रन्थिरूपिणं=गुटिकाकारम् । तस्येत्यादि । एतदेव विवृणोति-पार्श्वेत्यादि । पार्श्वे द्वे गणनीये, अन्यथा पञ्चत्वानुपपत्तिः, अत एव पार्श्वे इति द्विवचनान्तमेव क्वचित् पठ्यते ॥ १ ॥

भा० टी०—अपने कारणों से-मिथ्या आहार विहार से वात आदि दोष अत्यन्त कुपित होकर कोष्ठ के अन्दर गाँठ की सूरत में, गोल पाँच प्रकार का गुल्म पैदा करते हैं। पाँच स्थानों में गुल्म होते हैं—दोनों पसवाड़ा, हृदय, नाभि और वस्ति ॥ १ ॥

### अथ गुल्मरोगस्य सामान्य लक्षणम् ।

सामान्यगुल्मरूपमाह—

हृन्नाभ्योरन्तरे ग्रन्थिः सञ्चारी यदि वाऽचलः ।
वृत्तश्चयापचयवान् स गुल्म इति कीर्तितः ॥ २ ॥

( सु० उ० अ० ४२ )

म०—हृदित्यादि । नाभिशब्देन बस्तिर्बोध्यः, सामीप्यात्; यथा गङ्गायां घोष इत्याहुः बस्तेरपि गुल्माश्रयत्वेनोक्तत्वात् । अत एव 'हृद्वस्त्योरन्तरे' इति पाठान्तरम् । अन्ये त्वाहुः-बस्तौ विद्रधिरेव स्यान्नतु गुल्म इति । तन्न, गुल्मलक्षण-प्रतीतेः । एतत् पञ्चस्थानकथनं दोषजाभिप्रायेण, रक्तजस्य तु गर्भाशयः स्थानम् अथ वा पार्श्वस्थितत्वात् गर्भाशयस्य पार्श्वग्रहणेनैव ग्रहणम् । वृत्तो=वर्तुलः ।

चयापचयवानिति कदाचिदुपचीयते, कदाचिदपचीयते; एतच्च सामान्योक्तमपि, वातिके व्यवतिष्ठते, तल्लक्षणे तदभिधानादिति जेज्जटः गदाधरस्तु सामान्यलक्षण-माह, सर्वगुल्मानां वातमूलत्वात् । 'चयोपचयवान्' इति पाठान्तरे दोषस्य चयेनोप-चयवानिति । गुल्म इति लतादिपिहितसंस्थानविशेषादौ गुल्मव्यपदेशो लोके, तत्सादृश्यात् सञ्चितपरिपिण्डितदोषेऽपि गुल्मसंज्ञेत्याहुः, वाप्यचन्द्रस्त्वाह,— संप-ण्डितदोषोगुडकेन[1] मीयत इति निरुक्तिः ॥ २ ॥

भा० टी०—गुल्म रोग का सामान्य लक्षण—हृदय और नाभि के बीच में एक गोल गाँठ हो जाती है । वह इधर उधर डोलती भी है और एक जगह भी रहती है । कभी बढ़ती है, कभी घटती है उसे गुल्म कहते हैं । गुल्म का अर्थ झाड़ा है । दोष भी इकट्ठा होकर पिण्ड के रूप में हो जाता है, इस तरह झाड़ी की तरह होने से इस रोग का नाम भी गुल्म ही हुआ ॥ २ ॥

## अथ गुल्मरोगस्य संख्यारूपा सम्प्राप्तिः ।

पूर्वोक्तं पञ्चविधत्वं विवृणोति—

स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः ।
पुरुषाणां, तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥ ३ ॥

( सु० उ० अ० ४२ )

म०—स इत्यादि । व्यस्तैरित्यनेनैकजो द्वन्द्वजोऽपि ग्राह्यः । पञ्चधा गुल्म इत्यनेन विरोध इति चेत् । न । नहि तत्रावधारणं कृतं, पंचधैवैति । अत एव सूत्रस्थाने चरकेण "पञ्च गुल्मा ( च. सू. था. अ. )" इत्यभिधायापि "संसृष्टलिङ्गानपरांश्च गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम्" ( च. चि.स्था. अ. ५ ) इत्युक्तम्, समानचिकित्स्यत्वेन तत्रान्तर्भावात् । रक्तेन चापर इति स्त्रीणामेव । वक्ष्यति हि,—"स रौधिरः स्त्रीभव एव गुल्मः" ( च. चि. स्था. अ. ५ )— इति । रक्तं चात्रार्तवं न धातुरूपं, धातुरूपरक्तजस्तु गुल्मो यद्यप्यन्योऽस्ति तथाऽपि नैतत्सम्प्राप्तिको भवतीति पृथगुपदिश्यते । पृथग्ज्ञानानभिधानं तु पित्तगुल्मसमान-निदान-चिकित्स्यत्वेन तत्रान्तभावात्, सुश्रुते रक्तातीसारवत् । विशेषलक्षणं च यदाह चरकः–"तृष्णा-ज्वर-परीदाह-शूल-स्वेदाग्निमार्दवैः ।

---

१—गुडकेन वर्तुलाकारेण मीयते अनुमीयत इत्यर्थः ।

गुल्मिनामरुचौ चापि रक्तमेवा'वसेचयेत्-" ( च. चि. स्था. अ. ५ ) इति । धातुरूपरक्तजः स्त्रीणां पुंसां च भवति,-इति भट्टारहरिचन्द्रः । तथाच क्षारपाणिः,—स्त्रीणामार्तवजो गुल्मो न पुंसामुपजायते । अन्यस्त्वसृग्भवो गुल्मः स्त्रीणां पुंसां च जायते'-इति । वाप्यचन्द्रस्त्वाह,—वातादिदोषजस्यैवापचाराद्रक्ते दुष्टे रक्तजव्यपदेशः, यथा चरके कफपित्तमेहानामतिकर्षणादुत्तरकालं वातसंसर्गे सति वातमेहत्वमुक्तम् । यदुक्तम्[2],—"या वातमेहान् प्रति पूर्वमुक्ता वातोल्बणानां विहिता क्रिया सा । वायुर्हि मेहेष्वतिकर्षितेषु कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता-( च. चि. स्था. अ. ६ ) इति क्षारपाणेरप्येवमेवाभिप्रायः । यदि तु पृथक् स्यात् तदा [3]तमपि नवमं लिङ्गस्थानादिभिरभ्यधास्यत् । न चोक्तम् जेज्जटगयदासाभ्यां, हरिचन्द्रमतमेवानुमतमिति । सर्वगुल्मेषु वातकारणत्वं ज्ञेयम् । यदुक्तं चरके,—"गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरितव्या । मारुते ह्यवजितेऽन्यमुदीर्णं दोषमल्पमपि कर्म निहन्यात्-" ( च. चि. स्था. अ.५ ) इति; सुश्रुतेऽप्युक्तम्,-"कुपितानिलमूलत्वाद् गुल्म इत्यभिधीयते—( सु. उ. ते. अ. ४२ )" इति । न चैतावता नानात्मजत्वप्रसङ्गः, वातस्यानुबन्धरूपत्वात्, ज्वरे पित्तवत् । ननु, वाताव्यभिचारात् द्विदोषजस्त्रिदोषजो वा गुल्मः स्यान्न केवलं कफजः पित्तजो वेति, ततश्च पञ्चधेति विरोधः नैतत् । अनुबन्धरूपेण वातजव्यपदेशो, नत्वनुबन्ध्यरूपेणेति ॥ ३ ॥

भा० टी०—वात से, पित्त से, कफ से और सन्निपात से, यह चार गुल्म स्त्री और पुरुष दोनों को होता है परन्तु पांचवाँ जो कि आर्तव से होता है वह स्त्रियों के ही होता है पुरुष के नहीं, क्योंकि पुरुष के आर्तव नहीं होता । रक्त धातु से भी गुल्म होना, चरक में वर्णित है वह अलबत्ता स्त्री, पुरुष दोनों के होता है ॥ ३ ॥

## अथ गुल्मरोगस्य पूर्वरूपाणि ।

पूर्वरूपमाह—

**उद्गारबाहुल्य-पुरीषबन्ध-तृप्त्यक्षमत्वान्त्रविकूजनानि ।**
**आटोप आध्मानमपक्तिशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् ॥४॥**

( वा० नि० अ० ११ श्लो० ६ )

---

१—तृष्णादिभिर्लङ्घयै रक्त गुल्मं विज्ञाय रक्तमेव स्रावयेदित्यर्थः ।

२—वातमेहान् प्रति या क्रिया चिकित्सा पूर्वमुक्ता सा वातोल्बणानां पित्तकफमेहानां कर्षणादुत्तरकालम् वातसम्बद्धानामेव विहिता, हियतो मेहेषु कर्षितेषु वायुरवश्यमेकुप्यति । वातमेहास्त्वसाध्या एव स्वरूपतस्तेषां चिकित्साविधानन्तु निष्फलमेवेत्यर्थः ।

३—तमपि धातुरक्तजगुल्ममपि ।

म०—उद्गारेत्यादि पुरीषबन्धो=विड्बन्धः । तृप्तिरनन्नाभिलाषः । सुश्रुतेऽपि हि "द्वेषोऽन्ने"–( सु. उ. त. अ. ४ ) इति पठितम् । अन्नमत्रमसामर्थ्यम् । आटोपोऽत्र रुजापूर्वकः क्षोभः तलतलं वा; नतु गुडगुडाशब्दः; तस्यान्त्रकूजनेनैव गृहीतत्वात्; नाप्याध्मानं, तस्योपात्तत्वात् । अपक्तिशक्तिः=मन्दाग्निता । 'अपक्तृशक्तिः' इति पाठे स एवार्थः ॥ ४ ॥

भा० टी०—गुल्म का पूर्व रूप–डकार का बहुत आना, कब्ज रहना, भूख न लगना, कमजोरी होना, आँतों में आवाज होना, आटोप=पीड़ा और पेट बोलना, पेट फूलना, मन्दाग्नि हो जाना, ये लक्षण गुल्म के पूर्व रूप में होते हैं ॥ ४ ॥

### अथ गुल्मस्य साधारणं रूपम् ।

गुल्मसाधारणरूपमाह—

अरुचिः कृच्छ्र-विण्-मूत्र-वात-ताऽन्त्रविकूजनम् ।
आनाहश्चोर्ध्ववातत्वं सर्वगुल्मेषु लक्षयेत् ॥ ५ ॥

म०—अरुचिरित्यादि ।

भा० टी०—अरुचि, पाखाना, पेशाब, हवा का मुश्किल से निकलना, पेट में गुड़गुड़ाहट होना, आनाह, डकार आना, ये लक्षण सभी गुल्मों में होते हैं, चाहे पाँचों में कोई गुल्म हो ॥ ५ ॥

### अथ वातगुल्मस्य हेतवो लक्षणानि च ।

वातिकमाह—

रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥६॥
यः स्थान-संस्थान-रुजां विकल्पं विड्वातसङ्गं गलवक्त्र-शोषम् ।
श्यावारुणत्वं शिशिरज्वरं च हृत्-कुक्षि-पार्श्वांस-शिरो-रुजं च ॥७॥
करोति जीर्णे त्वधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च ।
वातात् स गुल्मो न च तत्र रूक्षं कषाय-तिक्तं कटुचोपशेते ॥ ८ ॥
( च० नि० अ० ५ )

म०—रूक्षेत्यादि । विषमातिमात्रमिति अन्नपानविशेषणम् । विचेष्टनं=विरुद्धचेष्टा बलवद्विग्रहादिः । अतिमलक्षयो विरेकादिना । निरन्नता=निराहारता । विकल्पशब्दः स्थानादिभिः प्रत्येकं योज्यः । स्थान विकल्पो यथा—कदाचिन्नाभौ, कदाचित्पार्श्वयोः, कदाचिद्बस्तावित्यादिस्थानानन्तरगमनम् । संस्थानविकल्पो यथा— कदाचिदल्पः, कदाचिन्महान्, वृत्तो, दीर्घो वेति । रुजाविकल्पो यथा—कदाचिदल्पा, कदाचिन्महती, तोदरूपा, अनेकरूपा वेति । नच तत्रोपशेते=न सुखयति ॥ ६–८ ॥

भा० टी०—वात के गुल्म का लक्षण—रूखा खान पान, विषम और अति भोजन, विचेष्टन—विरुद्ध कार्य, जैसे अपने से जबर्दस्त के साथ लड़ना, मल मूत्र का वेग रोकना; शोक, चोट, वमन विरेचन से मल का कम हो जाना, उपवास, यह सब वातज गुल्म के कारण हैं । वात के गुल्म का स्थान, आकार और दर्द का कोई ठिकाना नहीं रहता । कभी तो वह नाभि में मालुम होता है, कभी मूत्राशय में, कभी पँसुली में और कभी हृदय में । कभी छोटा मालुम होता है, कभी बड़ा, कभी लम्बा,कभी गोल । पीड़ा कभी थोड़ी, कभी अधिक, कभी सूई चुभोने जैसी और,कभी चीरने ऐसी । पाखाना कब्ज से होता है. गला मुह सूखता है, शरीर सयाह या लाल हो जाता है, जाड़ा देकर ज्वर आता है, हृदय, कोख, पँसली, कंधा और शिर में पीड़ा होती है । भोजन हजम हो जाने पर बीमारी बढ़ती है,और कुछ खा लेने पर आराम मालुम होता है । रूक्ष कषैला और तिक्त रस के सेवन से बढ़ता है । इसे वात गुल्म कहते हैं ॥ ६—८ ॥

## अथ पैत्तिकगुल्मस्य निदानानि ।

पैत्तिकमाह—

**कट्वम्ल-तीक्ष्णोष्ण-विदाहि-रूक्ष-क्रोधातिमद्यार्क-हुताश-सेवा ।**
**आमाभिघातो रुधिरं च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥९॥**

( च० नि० अ० ५ )

म०—कट्वित्यादि । आमाभिघात इति विदग्धाजीर्णजनितदुष्टरसेनाभिभवः; अन्ये तु आमाभिघातावीति पठन्ति, तत्राम उक्तरूपः, अभिघातो लगुडादेः रक्त-दूषको ज्ञेयः ॥ ९ ॥

भा० टी०—पित्तज गुल्म के कारण—चरपरा, खटाई, तीखी वस्तु, गर्म, जलन पैदा करने वाले पदार्थ, रूखे, क्रोध, मद्य पान, घाम में और आग के सामने रहना, आम का बढ़ना, खून का बिगड़ जाना, यह सब पित्तज गुल्म के कारण हैं ॥ ९ ॥

अथ पैत्तिकगुल्मस्य लक्षणानि ।

ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्यति भोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम् ॥ १० ॥

( च० चि० अ० ५ )

म०—जीर्यतीति सप्तम्यन्तम् । व्रणवत् स्पर्शासह इति योज्यम् ॥ १० ॥

भा० टी०—ज्वर होना, शरीर और मुँह लाल हो जाना, भोजन के पकते समय पेट में शूल होना, पसीना आना, जलन होना, गुल्म के छूने पर घाव की तरह पीड़ा मालूम होना, ये लक्षण पित्तज जुल्म के होते हैं ॥ १० ॥

अथ श्लैष्मिकगुल्मस्य निदानानि ।

श्लैष्मिकमाह—

शीतं गुरुस्निग्धमचेष्टनं च सम्पूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसम्भवस्य,—

म०—शीतमित्यादि । सम्पूरणं=तृप्तिभोजनम् ।

अथ सान्निपातिकगुल्मस्य हेतवः ।

सान्निपातिकस्य हेतुमाह—

सर्वस्तु दुष्टो निचयात्मकस्य ॥ ११ ॥

( च० चि० अ० ५ )

म०—सर्व इति वातजाद्युक्तः । निचयात्मकस्य=सन्निपातजस्य ॥ ११ ॥

भा० टी०—शीत, गुरु, स्निग्ध, कुछ परिश्रम या काम न करना, खूब खाना, दिन में सोना, ये कफ गुल्म के कारण हैं । और सन्निपातज गुल्म वेही सब कारण होते हैं जो अलग २ वात आदि दोषों के कारण हैं ॥ ११ ॥

अथ श्लैष्मिकगुल्मस्य लक्षणानि ।

स्तैमित्य-शीतज्वर-गात्रसाद-हृल्लास-कासारुचि-गौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥ १२ ॥

( च० चि० अ० ५ )

म०—कठिनोन्नतत्वं गुल्मस्य ॥ १२ ॥

भा० टी०—कफज गुल्म के चिन्ह—शरीर में गीला कपड़ा ओढ़ने की तरह भारीपन और गीला मालूम होना, जूड़ी, सुस्ती, हल्लास, कास, अरुचि, गौरव, जाड़ा गुल्म का कड़ा और ऊँचा होना, पीड़ा कम होना, ये सब लक्षण कफज गुल्म में होते हैं॥१२॥

## अथ द्वन्द्वजगुल्मस्य लक्षणानि ।

द्व्यात्मकेषु त्रिष्वेकजहेतुलक्षणातिदेशार्थमाह—

**निमित्तरूपाण्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलं च ।**
**व्यामिश्रलिङ्गानपरांश्च गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥१३॥**

( च० चि० अ० ५ )

म०—निमित्तेत्यादि । निमित्तानि च रूपाणि चेति द्वन्द्वः । दोषबलाबलं चेत्यनेन समद्विदोषद्वन्द्वजत्रयेण एकोल्बणादिद्विदोषजोऽपि ग्राह्य इति दर्शयति-अन्यथा बहुत्वापत्तेः । औषधकल्पनार्थमिति एकदोषजाभिहितचिकित्सामेलकेन तान् चिकित्सेदित्यर्थः ॥ १३ ॥

भा० टी०—किसी दो दोषों के कारण और लक्षणों से द्वन्द्वज गुल्म जानना चाहिए। उसमें यह भी जाने कि कौन सा दोष बलवान् है और कौन सा अबल, यह इसी लिये कि एक २ दोषों से उत्पन्न गुल्म की जो चिकित्सा है, द्वन्द्वज में भी वही दो दोषों की चिकित्सा मिलाकर करनी चाहिए॥१३॥

## अथ सान्निपातिकगुल्मस्य लक्षणानि ।

सान्निपातिकमाह—

**महारुजं दाहपरीतमश्मवद् घनोन्नतं शीघ्रविदाहि दारुणम् ।**
**मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् १४**

( च० चि० अ० ५ )

म०—महारुजमित्यादि । अश्मवत् घनोन्नतं पाषाणवत् कठिनमुन्नतं च । मन इत्यादि मनोऽपहारिणं=मनोवैकल्यकारिणं, शरीरापहारिणं=कृशत्ववैवर्ण्यकरम् अग्न्यपहारिणमग्निवैषम्यकरं, बलापहारिणमसामर्थ्यकरम् । ननु, असाध्यमिति विरुद्धं, "सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः" ( सु. उ. त अ. ४२ ) इति सुश्रुतवचनात् । नैवम्, अयं च विकृतिविषमसमवेतोऽसाध्यः, प्रकृतिसमसमवेतस्तु साध्य इत्याहुः । ननु, सोऽप्यसाध्यः, यदाह सुश्रुतः,—

"सर्वात्मके सर्वरुजोपपत्तिस्तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञाः" ( सु उ. त. अ. ४२ )–इति उच्येत, तं चापीति अपिशब्दादचिरोत्थितः साध्यो विश्वामित्रसंवादादिति गयदासः ॥ १४ ॥

भा० टी०—सन्निपातज गुल्म के लक्षण–पीड़ा अधिक हो जलन रहे । गुल्म पत्थर की तरह कड़ा और ऊँचा हो, शीघ्र दाह पैदा करे, अत्यन्त कष्ट हो, मन गिरा हो, शरीर कृश और बदरंग हो जाय, अग्नि विषम हो जाय, शरीर में सामर्थ्य न रहे, ये सब लक्षण सन्निपातज गुल्म में होते हैं, और यह असाध्य होता है ॥ १४ ॥

## अथ रक्तगुल्मस्य सम्प्राप्तिः ।

( Ovarian Tumour )　　ओव्हेरियन ट्यूमर

रक्तल्गुममाह—

**नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा ।**
**वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम्**

( च० चि० अ० ५ )

म०—नवेत्यादि । आमगर्भं विसृजेदिति नवममासादर्वाक् प्रसूते; ऋतौ= आर्तवप्रवृत्तिकाले, अहितभोजनेति संबन्धः । एतच्चोपलक्षणार्थं, तेनाहाराचारादिकं ज्ञेयम् । यदाह चरकः[1]–"ऋतावनाहारतया भयेन विरूक्षणैर्वेगविधारणैश्च । संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति" ( च. चि. स्था. अ. ५ )–इति ॥

भा० टी०—रक्तज गुल्म की सम्प्राप्ति—जो स्त्री बच्चा पैदा होने पर लगभग एक मास तक, या गर्भपात होने पर, अथवा रजस्वला होने पर अहित आहार विहार करती है उसके आर्तव को वायु दूषितकर गर्भाशय में दाह और पीड़ा के साथ रक्तज गुल्म पैदा कर देता है ।

## अथ रक्तगुल्मस्य लक्षणानि ।

**पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध ॥ १५ ॥**
**यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात्सशूलः समगर्भलिङ्गः ।**
**स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥ १६ ॥**

( च. चि० अ० ५ )

---

१ – ऋतावार्तवप्रवृत्तिकाले, अनाहारतया उपवासेन, विरूक्षणैः रूक्षद्रव्यसेवनैः । संस्तम्भनोल्लेखनैः रक्तनिरोधार्थं वस्त्रादिधारणेन योन्यन्तरनिपीडनं तदेव योनिदोषः । अथवा योनिदोषा योनिव्यापदो विंशतिस्तैः ।

म०—पैत्तस्य=पैत्तिकगुल्मस्य । विशेषणं पैत्तिकगुल्माद्विशेषलक्षणम् । पिण्डितः=समूहितः । एवकारोऽत्र अवधारणे । एतदेव स्फुटयति–नाङ्गैर्नावयवैश्चिरात् स्पन्दत इति संबन्धः । समगर्भलिङ्ग इति आर्तवादर्शन—मुखस्रवण-स्तनमुखकृष्णत्व-[1]दोहदादि-गर्भलक्षणयुक्तः, एतच्च व्याधिप्रभावात्; यथा-न्ययार्शसोः स्त्रीरिरंसाकृष्णत्वङ्नखादयः । अन्ये तु समगर्भलिङ्गोऽविकृतगर्भलिंग इत्याहुः । उक्तविशेषणैरेव स्त्रीभवत्वे लब्धे स्त्रीग्रहणेन कुमारीमतिवृद्धां च निषेधयति, अनुद्भूतक्षीणरजस्कत्वात्तयोः । व्यतीतेऽतिक्रान्ते । गर्भसमानलिङ्गत्वेन संशयः—गर्भो वा, रक्तगुल्मो वा, इति; तच्छङ्कानिरासार्थं दशमे मासे व्यतीते इत्युक्तम्, नवम-दशमयोः प्रसवकालत्वादित्येके । तन्न, 'यः स्पन्दते पिण्डित एव नाङ्गैः' इत्यादिनैव विशेषदर्शनेन संशयस्य निवर्तितत्वात्। गर्भो हि निरन्तरं प्रत्यङ्गैर्निःशूलं स्पन्दते, गुल्मस्तु एतद्विपरीतेन । किञ्च नवमे दशमे प्रसूत इत्युत्सर्गः, [2]नतु नियमः, तदधिककालेऽपि प्रसवदर्शनात्, आगमाच्च । उक्तं हि चरके–"तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात्" ( च. शा. स्था. अ. २ )–इति; तस्मान्नेदं दशममासव्यतिक्रमे चिकित्साविधानस्य प्रयोजनं, किन्तु व्याधिमहिम्ना तावतैव कालेन तस्य चिकित्सया सुखोच्छेदनमिति । यथा ज्वरे पुराण एव क्षीरपान–विरेचने । उक्तं हि तन्त्रान्तरे—"रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्"—इति । पुराणता चास्य दशममासव्यतिक्रमेणैव भवति । जेज्जटेनाप्युक्तम्, -यद्यर्वाक् रक्तभेदनं क्रियते तदा गर्भशय्यां क्षिणोति, तल्लीनत्वाद्रक्तस्य; एकादशमासे तु परिपिण्डितगुल्मे स्नेहादिनोपस्कृतदेहाया न गर्भशय्याया विकृतिमादधाति रक्तभेदनमिति ॥ १५ ॥ १६ ॥

भा० टी०—उसमें वे ही लक्षण होते हैं जो कि पित्तज गुल्म में । परन्तु इसमें विशेषता यह है कि रक्तज गुल्म में गर्भ रहने के सब लक्षण-जैसे मासिक न होना, चूचुक काला हो जाना, स्तन मोटा होना और उसमें दूध आ जाना, दोहद होना आदि लक्षण होते हैं,किन्तु गर्भ और गुल्म में इतना फर्क होता है कि गर्भ बिना दर्द हुए हाथ पैर शिर आदि अङ्गों के साथ फड़कता है और गुल्म याहो पिण्ड की शकल में दर्द के साथ फड़कता है । यह रक्त गुल्म स्त्रियों को ही होता है, पुरुषों के नहीं । इसकी चिकित्सा, उत्पन्न होने के समय से दशवें महीने के बीत जाने पर करनी चाहिए। इसका मतलब यह नहीं है कि गर्भ के लक्षण मिलने से शायद गर्भ हो तो चिकित्सा

---

१-दोहदो गृहीतगर्भाणां स्त्रीणामीप्सितम् ।

२—उत्सर्गः सामान्य नियमः ।

से गर्भ खराब हो जाय, क्यों कि गर्भ का न होना तो इसी से मालूम हो जाता है कि गर्भ के फरकने में गर्भ के हाथ पैर शिर प्रत्यक्ष मालूम होते हैं। और दर्द नहीं होता, और गुल्म में दर्द होता है और कोई अङ्ग नहीं जान पड़ते। किन्तु यह मतलब है कि दश महीने के अन्दर गुल्म गर्भाशय में विशेष चिपका और फैला रहता है, उस समय रक्त गुल्म गलाने वाली दवा देने से गर्भाशय पर बुरा असर पड़ सकता है, लेकिन दश महीने के बाद गुल्म गर्भाशय को एक प्रकार छोड़ देता है और इकट्ठा होकर पिण्ड के रूप में हो जाता है, उस समय दवा करने से गर्भाशय किसी प्रकार नहीं बिगड़ सकता ॥ १५-१६ ॥

### अथ गुल्मस्यासाध्यलक्षणानि ।

चिरजस्यावस्थायामसाध्यत्वमाह—

सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।
कृतमूलः सिरानद्धो यदा कूर्म इवोत्थितः ॥ १७ ॥
दौर्बल्यारुचि-हृल्लास-कास-च्छर्द्यरति-ज्वरैः ।
तृष्णा-तन्द्रा-प्रतिश्यायैर्युज्यते स न सिध्यति ॥ १८ ॥

(च० चि० अ० ५)

म०–सञ्चित इत्यादि । महावास्तुपरिग्रहः=सकलोदरव्यापी । कृतमूलो=धात्वन्तरावगाही । सिरानद्धः=सिराजालवान् ॥ १७ ॥ १८ ॥

भा० टी०—गुल्म का असाध्य लक्षण-चिकित्सा न करने से जो गुल्म धीरे २ बढ़ कर सारे पेट में फैल जाय, और जड़ जमा कर सिराओं से नधकर कछुवे की तरह ऊँचा हो जाय और जिसमें दुर्बलता, अरुचि, हृल्लास, कास, छर्दि, बेचैनी, ज्वर, तृष्णा, तन्द्रा प्रतिश्याय, ये रोग पैदा हो जाँय तो वह असाध्य हो जाता है ॥१७॥१८॥

### अथास्य पुनरप्यसाध्यलक्षणम् ।

गृहीत्वा सज्वरं श्वास-च्छर्द्यतीसार-पीडितम् ।
हृन्-नाभि-हस्त-पादेषु शोथः कर्षति गुल्मिनम् ॥ १९ ॥

(च० चि० अ० ५)

म०—हृदयादौ गृहीत्वा शोथो गुल्मिनं कर्षति, 'मरणाय' इति शेषः ॥१९॥

भा० टी०—जिस गुल्म रोगी के ज्वर, श्वास, छर्दि, अतीसार, रोग हो और हृदय, नाभि, हाथ, पैर में सूजन हो तो वह नहीं बचता ॥ १९ ॥

## अथापरमसाध्यलक्षणम् ।

श्वासः शूलं पिपासाऽन्नविद्वेषो ग्रन्थिमूढता ।
जायते दुर्बलत्वं च गुल्मिनो मरणाय वै ॥ २० ॥

( सु० सू० अ० ३३ )

म०—ग्रन्थिमूढता=ग्रन्थिरूपस्य गुल्मस्याकस्माद्विलयनमिति । ननु च, अन्तर्विद्रधि–गुल्मयोः को भेदः ? समानस्थान–सम्भवत्वात् । उच्यते, विद्रधिः पच्यते गुल्मो न पच्यते, निराश्रयत्वात् । यदाह सुश्रुतः,—"न निबन्धोऽस्ति गुल्मस्य विद्रधिः सनिबन्धनः । गुल्मस्तिष्ठति दोषेषु विद्रधिर्मांस-शोणिते ॥ विद्रधिः पच्यते तस्माद् गुल्मः क्वापि न पच्यते" ( सु. नि. स्था. अ. ९ ) इति । ननु, गुल्मोऽपि पच्यत एव । यदाह चरकः—"विदाह-शूल-संक्षोभ-स्वप्ननाशा-रति–ज्वरैः । विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत्" ( च. चि. स्था. अ. ५ ) इति । उच्यते–गुल्मो न पच्यते निराश्रयत्वात्; यदा तु कारणवशादाश्रयं मांसादिकमासादयति, वातोपशमनार्थं कृतस्वेदादिभिर्वा रक्तदुष्टिर्भवति तदा पच्यमानो दाहनिमित्तकं विद्रधित्वमाप्नोति । उक्तं हि,–"ततः शीघ्रविदाहित्वात् विद्रधीत्यभिधीयते" ( च. सू. स्था. अ. १७ )–इति । न हि यस्मात् विकारात् यदुत्पद्यते विकारान्तरं तत् स एव भवतीति, माभूत् प्लीहैव उदरम्, अश्मर्येव शर्करा, इत्यादि शास्त्रोक्ताविरोधविस्तरः । तस्माद्विद्रधिः पच्यते, गुल्मो न पच्यते, इति सिद्धान्तो निरपवादः । ये तु अन्तर्विद्रधिं न पठन्ति तेषामयमभिप्रायः,—गुल्मे पक्के विद्रधौ च पाटन–शोधन–रोपणादेः, अपक्के च विरेक-लेप-विम्लापनादे-श्चिकित्सितस्य प्रायो विशेषाभावादलं पृथग्विकारस्वीकारेणेति ॥ २० ॥

भा० टी०—यदि गुल्म रोगी के श्वास, शूल, पिपासा, अरुचि, दुर्बलता हो और गुल्म अकस्मात् गुप्त हो जाय–पता न चले क्या हो गया तो रोगी नहीं बचता—मर जाता है ॥ २० ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां गुल्मनिदानम् ।



## अथ हृद्रोगनिदानम् ।

( Diseases of the Heart ) डिसीजेस आफ् दि हार्ट

### अथ हृद्रोगस्य निदानानि ।

गुल्मस्य हृदयस्थानमुक्तमतो गुल्मानन्तरं हृद्रोगारम्भः । तस्य हेतुमाह—

**अत्युष्ण-गुर्वन्न-कषाय-तिक्त-श्रमाभिघाताध्यशन-प्रसङ्गैः ।**
**संचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः ॥ १ ॥**

म०—गुल्मस्य हृदयं स्थानमुक्तं, अतो हृदयसंकीर्तनात् हृद्रोगारम्भः प्रसङ्गः= सातत्येन सेवा, अत्युष्णादयो यथायोग्यं वातादीनां क्रिमेश्च निदानमिति बोध्यम् ।

भा० टी०—हृद्रोग के निदान–अत्यन्त गर्म, गुरु, कषैला, चरपरा अन्न का सेवन, परिश्रम, हृदय में चोट लगना, अजीर्ण में खाना, सोचना, मल मूत्र का वेग रोकना इन सबके अधिक सेवन से पाँच प्रकार का हृद्रोग होता है ॥ १ ॥

### अथ हृद्रोगस्य सम्प्राप्तिपूर्वकं लक्षणम् ।

तस्य संप्राप्ति सामान्यलक्षणं चाह—

**दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।**
**हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥ २ ॥**

( सु० उ० अ० ४३ )

म०—दूषयित्वेत्यादि । दूषयित्वा रसमिति रसस्य हृदयाश्रयत्वात् । विगुणाः=कुपिताः । हृद्रोगमिति वाच्ये यद्बाधाग्रहणं, तद्दोषभेदेन बाधावैचित्र्य-ज्ञापनार्थम्; बाधाशब्देन चात्र नानाविधा पीडेति जेज्जटः, भङ्गवत् पीडेति गय-दासः । हृद्रोगमिति " वा शोक-ष्यञ्-रोगेषु–" इति रोगे परे हृदयस्य, हृद्भावः, अथ वा हृदो रोगो हृद्रोगः ॥ २ ॥

भा० टी०—हृद्रोग की सम्प्राप्ति–कुपित दोष हृदय में स्थित होकर वहाँ रहनेवाले रस को दूषित कर अनेक तरह का दर्द पैदा कर देते हैं । इसी का नाम हृद्रोग है ॥२॥

### अथ वातिकहृद्रोगस्य लक्षणम् ।

वातिकहृद्रोगलक्षणमाह—

**आयम्यते मारुतजे हृदयं तुद्यते तथा ।**
**निर्मथ्यते दीयते च स्फोट्यते पाट्यतेऽपि च ॥ ३ ॥**

( सु० उ० अ० ४३ )

म०—आयम्यत इत्यादि । आयम्यते=आकृष्यत इव । तुद्यते सूच्येव । निर्मथ्यते दण्डेनेव दीर्यते=द्विधेव क्रियते । स्फोटयत आरयेव । पाट्यते कुठारेणेव ॥ ३ ॥

भा० टी०—वातिक हृद्रोग में खींचने जैसी, सूई चुभोने जैसी, मथने जैसी, फोड़ने जैसा और काटने जैसी अनेक प्रकार की पीड़ा हुआ करती है ॥ ३ ॥

### अथ पैत्तिकहृद्रोगस्य लक्षणम् ।

पैत्तिकलक्षणमाह—

तृष्णोष्मादाहचोषाः स्युः पैत्तिके हृदयक्लमः ।
धूमायनं च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥ ४ ॥
( सु० उ० अ० ४३ )

म० —तृष्णेत्यादि । ऊष्मा=किञ्चिद्दाहः । हृदयक्लमः=हृदयाकुलत्वं,ग्लानिरिति यावत् ॥ ४ ॥

भा० टी०—पैत्तिक हृद्रोग के लक्षण-तृष्णा, हृदय में थोड़ी जलन, सब शरीर में जलन, हृदय में चूसने जैसी पीड़ा होना, हृदय में घबड़ाहट, धूँवा लगने ऐसा मालुम होना, पसीना होना, मुह सूखना, ये सब लक्षण पैत्तिक हृद्रोग में होते हैं ॥ ४ ॥

### अथ श्लैष्मिकहृद्रोगस्य लक्षणम् ।

श्लैष्मिकमाह—

गौरवं कफसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम् ।
माधुर्यमपि चास्यस्य बलासावतते हृदि ॥ ५ ॥
( सु० उ० अ० ४३ )

म०—गौरवमित्यादि । बलासावतते=कुपितकफव्याप्ते, "दोषा दुष्टा दूषयितारो भवन्ति"—इत्यागमात् ॥ ५ ॥

भा० टी०—श्लैष्मिक हृद्रोग में गुरुता, कफ का गिरना, अरुचि, जड़ता, मन्दाग्नि, मुह का मीठा होना, ये लक्षण होते हैं ॥ ५ ॥

### अथ सक्रिमिजसान्निपातिकहृद्रोगस्य लक्षणम् ।

त्रिदोषज-क्रिमिजयोर्मिलितमेव लक्षणमाह—

विद्यात्त्रिदोषं त्वपि सर्वलिङ्गं तीव्रार्तितोदं क्रिमिजं सकण्डूम् ।
( च० चि० अ० २६ )

उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः ।
अरुचिः श्यावनेत्रत्वं शोथश्च क्रिमिजे भवेत् ॥ ६ ॥
( सु० उ० अ० ४३ )

**म०**—विद्यादित्यादि । सर्वलिङ्गमित्यनेन प्रकृतिसमसमवायारब्धत्वमुक्तं, तेन चिकित्साऽप्यस्य प्रत्येक वातादिजस्य या सा मिलितैव कार्या । अपचाराच्चेह ग्रन्थिरुत्पद्यते ततः क्रिमिसंभवः । उक्तं हि **चरकेण**,—"त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते । तिल-क्षीर-गुडादीनि ग्रन्थिस्तस्योपजायते ॥ मर्मैकदेशे संक्लेदं रसश्चास्योपगच्छति । संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः" ( च. सू. स्था. अ. १७ )—इति । तस्यैवेदं लक्षणमाह,—तीव्रार्तितोदं क्रिमिजं सकण्डूमिति । उत्क्लेद इत्यादिना तमोन्तं त्रिदोषजहृद्रोगलक्षणं; तत्र तोदशूले वातात् । उक्लेद-हृल्लासौ कफात्, तमः पित्तात्, ष्ठीवनं कफपित्तात्; अरुचिरित्यादिना क्रिमिजस्येति **जेज्जटः । गयदासस्त्वाह**—श्यावनेत्रत्वपर्यन्तेन त्रिदोषजलक्षणमिति । स्यादेतत्, त्रिदोषजपदं न तावदत्र **सुश्रुतेन** पठितम्, अतः सर्वमेव उत्क्लेदादि शोथान्तं क्रिमिजलक्षणं भविष्यति । नैवम्, "विद्यात्त्रिदोषं त्वपि सर्वलिङ्गं तीव्रार्तितोदं क्रिमि सकण्डूम्" ( च. चि. स्था. अ. २ ) इति **दृढबलस्य** वाक्यत्वात् । उत्क्लेद इत्यादिस्तु एक एव श्लोकः **सुश्रुतेन** पठितः, न तु पृथक् सन्निपातलक्षणम्, ततस्त्रिदोषजस्यानभिधाने **सुश्रुते** न्यूनत्वं स्यात् । त्रिदोषाश्मरीवत्तस्यासंभव एवेति चेत् ? नैवम्, **तन्त्रान्तरेषु** पठितत्वात् । तथाच **हारीतः**,—"सर्वाणि रूपाणि च सन्निपाताच्चिरोत्थितं चापि वदन्त्यसाध्यम्"—इति **चरकेऽप्युक्तम्**,—"हेतु-लक्षण-संसर्गादुच्यते सान्निपातिकः" ( च. सू. स्था. अ. १७ )—इति; तथा,—"त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते" ( च. सू. स्था. अ. १७ ) इत्यादि । कण्ठरवेण तु त्रिदोषजपदं यन्न पठितं **सुश्रुतेन**, तत् क्रिमिजस्यापि त्रिदोषजत्वख्यापनार्थमित्याचक्षते । ननु दोषजावान्तरावस्थाविशेषत्वात् क्रिमिजोऽपि दोषज एव, तत् कथं हृदामयः पञ्चविध इति ? नैवम्, रोगजस्यापि रोगस्य पृथक्त्वदर्शनात् । यदुक्तम्—'निदानार्थकर'—इत्यादि । द्विदोषजस्त्वनुक्तोऽपि प्रकृतिसमसमवायत्वाद्बोध्यः ॥६॥

**भा० टी०**—ओकाई आवे, थूक अधिक आवे, तोद शूल हो, मुंह पानी से भर जाय, और आँखों के आगे अँधेरा हो जाय, सान्निपातिक हृद्रोग में तीनों दोषों के लक्षण होते हैं और क्रिमिज हृद्रोग में हृदय में जबर्दस्त पीड़ा हो मानो सूई चुभायी हो, हृदय में कलबलाहट मालुम हो, अरुचि रहे, आँखें स्याह हो जाँय, और सूजन हो जाय ॥ ६ ॥

अथात्र क्रिमीणामुत्पत्तिबीजम् ।

मर्मैकदेशं संक्लेदं रसश्चाप्युपगच्छति ।
संक्लेदात्क्रिमयश्चास्य भवन्त्युपहतात्मनः ॥ ७ ॥

भा० टी०—सन्निपात के हृद्रोगमें जो रोगी तिल गुड़ आदि सेवन करताहै तो उस हृदय का एक हिस्सा कहीं सड़ जाता है और उसमें कीड़े पड़ जाते हैं ॥ ७ ॥

अथैषामुपद्रवाः ।

सर्वेषामुपद्रवानाह—

क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः ।
क्रिमिजे क्रिमिजातीनां श्लैष्मिकाणां च ये मताः ॥ ८ ॥

म०-क्लम इत्यादि । श्लैष्मिकाणां ये उपद्रवास्ते क्रिमिजहृद्रोगेऽपि स्युः । ते च हृल्लासास्यस्रवणाविपाकादयः ॥ ७-८ ॥

भा० टी०—क्लम=विना परिश्रम के थकावट मालुम होना, सुस्ती,भ्रम,मुह सूखना, ये उपद्रव सब हृद्रोग में होते हैं और कृमिज हृद्रोगमें कफज क्रिमिके उपद्रव-हृल्लास, लार का वहना, अन्न हजम न होना इत्यादि लक्षण होते हैं ॥ ८ ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय भाषाटीकायां हृद्रोगनिदानम् ।

## अथ मूत्रकृच्छ्रनिदानम् ।

## ( Dysuria ) डिस्यूरिआ

अथ मूत्रकृच्छ्रस्य निदानानि ।

सप्तोत्तरे मर्मशते त्रीणि मर्मणि शिरो-हृदय-बस्तयः प्रधानानि । तत्र हृदय गतविकारानभिधाय बास्तिगतविकारानाह—

व्यायाम-तीक्ष्णौषध-रूक्ष-मद्यप्रसङ्ग-नित्य-द्रुत-पृष्ठ-यानात् ।
आनूप-मांसाध्यशनादजीर्णात्स्युर्मूत्रकृच्छ्राणि नृणां तथाऽष्टौ ॥ १ ॥

( च० नि० अ० २६ )

म०—व्यायामेत्यादि । मूत्रकृच्छ्राणीति मूत्रस्य कृच्छ्रेण महता दुःखेन प्रवृत्तिः । अष्टाविति दोषैः पृथक् त्रीणि, सन्निपातेनैकम्, शल्यज-पुरीषज शुक्रजाश्मरीजानीत्येकैकानि । ननु, शर्कराजं मूत्रकृच्छ्रं सुश्रुतेन पठितं; तच्चात्र सग्रहेऽपि पठितम्, "अश्मरी शर्करा चैव तुल्य-सम्भव-लक्षणे"—इत्यादिना, तत् कथमष्टौ ? नव प्राप्नुवन्ति । उच्यते, शर्करा अश्मरीभेद एव । यदाह दृढ़बलः,—"एषाऽश्मरी मारुत-भिन्न मूर्तिः स्याच्छर्करा मूत्रपथात् क्षरन्ती" ( च. चि. स्था. अ. २६ )-इति । अतोऽश्मरीजेनैव शर्कराजग्रहणमिति मन्यमानो दृढ़बलः अष्टावित्यपठत् ॥ १ ॥

भा० टी०—एक सौ सात मर्मस्थानों में शिर हृदय और वस्ति, ये तीन प्रधान कहे गये हैं । उनमें हृदय रोग कह चुके, अब वस्ति गत विकार में मूत्रकृच्छ्र का निदान बतलाया जाता है-बड़ी तकलीफ से मूत्र होने पर मूत्रकृच्छ्र रोग माना जाता है-यह आठ प्रकार का होता है, १ वात से, २ पित्त से, ३ कफ से, ४ सन्निपात से, ५ शल्यज ६ पुरीषज ७ शुक्रज ८ अश्मरीज, मूत्रकृच्छ्र के कारण-व्यायाम, तीक्ष्ण औषध, मद्य का अधिक सेवन, तेज चालवाले घोड़ा आदि पर नित्य चढ़ना, जल के समीप रहने वाले जन्तु—भैंस सूअर आदि का मांस सेवन, अजीर्ण की हालत में खाना ॥ १ ॥

### अथ मूत्रकृच्छ्रस्य सम्प्राप्ति पूर्वकं लक्षणम् ।

**पृथङ्मलाः स्वैः कुपिता निदानैः सर्वेऽथवा कोपमुपेत्य बस्तौ ।**
**मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥ २ ॥**

( च० चि० अ० २६ )

म०–तीव्रेत्यादि ॥ २ ॥

भा० टी०—एक २ वात आदि दोष अथवा समस्त कुपित होकर वस्ति स्थान में जाकर मूत्रमार्ग में खराबी पैदा कर देते हैं तब मनुष्यको मूत्रकृच्छ्र रोग हो जाता है॥२॥

### अथ वातिकमूत्रकृच्छ्रस्य लक्षणम् ।

मूत्रकृच्छ्रस्य वातजादिभेदेन लक्षणानि, तत्रादौ वातिकमाह—

**तीव्रार्तिरुग्-वङ्क्षण-बस्ति-मेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात् ।**

( च० चि० अ० २६ )

भा० टी०—वातज मूत्रकृच्छ्र में–वङ्क्षण=पट्टा, पेडू और लिङ्ग में बड़ी पीड़ा होती है और कष्ट के साथ थोड़ा २ पेशाब बार २ होता है ।

अथ पैत्तिकमूत्रकृच्छ्रस्य लक्षणम् ।

पीतं सरक्तं सरुजं सदाहं कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ॥ ३ ॥

( च० चि० अ० २६ )

म०—सलिंगस्य=समेढ्रस्य । सपिच्छं=पिच्छिलम् ॥ ३ ॥

भा० टी०—पित्तज मूत्रकृच्छ्र में, पेशाव पीला और लाल तथा दाह और पीड़ा के साथ होता है ॥ ३ ॥

अथ कफजमूत्रकृच्छ्रस्य लक्षणम् ।

बस्तेः सलिङ्गस्य गुरुत्व-शोथौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ।

( च० चि० अ० २६ )

अथ सान्निपातिकमूत्रकृच्छ्रस्य लक्षणम् ।

सर्वाणि रूपाणि तु सन्निपाताद्भवन्ति तत्कृच्छ्रतमं हि कृच्छ्रम् ॥४॥

( च० चि० अ० २६ )

म०—कृच्छ्रतमं=कष्टसाध्यम् । कृच्छ्रं=मूत्रकृच्छ्रम् ॥ ४ ॥

भा० टी०—कफज मूत्रकृच्छ्र में पेशाव सफेद और लबाबदार होता है । पेडू लिङ्ग में भारीपन और सूजन होती है । सन्निपातज मूत्रकृच्छ्र में तीनों दोषों के लक्षण होते हैं, और वह कष्टसाध्य होता है ॥ ४ ॥

अथ शल्यजमूत्रकृच्छ्रस्य लक्षणम् ।

मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु वा ।
मूत्रकृच्छ्रं तदाघाताज्जायते भृशदारुणम् ॥ ५ ॥
वातकृच्छ्रेण तुल्यानि तस्य लिङ्गानि निर्दिशेत् ।

( सु० उ० अ० ५९ )

म०—मूत्रवाहिष्विति=मूत्रवहस्रोतःसु ॥ ५ ॥—

भा० टी०—शल्यज मूत्रकृच्छ्र के लक्षण-मूत्रवाही स्रोतों में काँटे आदि से क्षत हो जाने पर, अथवा किसी प्रकार से चोट पहुँचने पर आघात निमित्त से मार डालने वाला मूत्रकृच्छ्र रोग पैदा हो जाता है इसमें, वातज मूत्रकृच्छ्र के लक्षण होते हैं ॥५॥

अथ पुरीषजमूत्रकृच्छ्रस्य लक्षणम् ।

शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः ॥ ६ ॥
आध्मानं वातशूलं च मूत्रसंङ्गं करोति च ।

( सु० उ० अ० ५६ )

भा० टी०—पाखाना के रोक लेने से वायु विगड़ कर आध्मान वातशूल और मूत्रावरोध पैदा कर देता है और फिर मूत्रकृच्छ्र रोग प्रकट हो जाता है ॥ ६ ॥

अथाश्मरीजमूत्रकृच्छ्रस्य लक्षणम् ।

अश्मरीहेतु तत्पूर्वं मूत्रकृच्छ्रमुदाहरेत् ॥ ७ ॥

म०—अश्मरीहेतु तत्पूर्वमिति अश्मरीहेत्विति लक्ष्यपदं, तत्पूर्वमिति लक्षणपदं, तत्पूर्वम्=अश्मरीपूर्वकम् ॥ ७ ॥

भा० टी०—अश्मरी होने के बाद मूत्रकृच्छ्र हो जाय तो उसे अश्मरीज मूत्रकृच्छ्र कहते हैं ॥ ७ ॥

अथ शुक्रजमूत्रकृच्छ्रस्य लक्षणम् ।

शुक्रे दोषैरुपहते मूत्रमार्गे विधाविते ।
सशुक्रं मूत्रयेत्कृच्छ्राद्बस्ति-मेहन-शूलवान् ॥ ८ ॥

( सु० उ० अ० ५६ )

भा० टी०—शुक्रज मूत्रकृच्छ्र के लक्षण-दोषों के द्वारा शुक्र ( वीर्य ) के खराब हो जाने पर वीर्य मूत्र मार्ग में आ जाता है, बाद वीर्य सहित पेशाव कष्ट से उतरता है और बस्ति तथा लिङ्ग में पीड़ा होती है ॥ ८ ॥

अथाश्मरी-शर्करयोर्भेदः ।

मूत्रकृच्छ्रहेतुत्वेनोक्तयोरश्मरी-शर्करयोः समानतामवान्तरभेदं चाह—

अश्मरी शर्करा चैव तुल्य—सम्भव—लक्षणे ।
विशेषणं शर्करायाः शृणु कीर्तयतो मम ॥ ९ ॥
पच्यमानाऽश्मरी पित्ताच्छोष्यमाणा च वायुना ।
विमुक्तकफसन्धाना क्षरन्ती शर्करा मता ॥ १० ॥

( सु० उ० अ० ५६ )

१—अश्मरी हेतुर्यस्य तत् । अश्मरीसमुत्पन्नमित्यर्थः । लक्ष्यपदं लक्ष्यज्ञापकं पदम् ।

म०—अश्मरीत्यादि । अश्मरी शर्करा चैवेत्यनन्तरम् 'एते' इत्यध्याहार्य तुल्यसम्भवलक्षणे इत्यनेन द्विवचनान्तेन सम्बन्धनीयम्, यथा—"तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी"—इत्यादिवत् । तुल्यः सम्भव=उत्पत्तिकारणं लक्षणं च ययोस्ते तथा, 'तुल्ये सम्भवलक्षणैः, इति पाठान्तरे तुल्ये=सदृशे, कैरित्यत उक्तम्–सम्भवलक्षणैरिति; 'तुल्या सम्भवलक्षणैः' इति पाठान्तरे स एवार्थः। विशेषणं=विशेषः । तमेव विवृणोति–पच्यमानेत्यादि । कफसन्धाने=कफेनावयवसंश्लेषः कफ एव वा सन्धानं कफसन्धानं सन्धीयतेऽनेनेति व्युत्पत्त्या । तेन पित्तपाक–वातशोषौ संधानविमोक्षहेतुत्वेनोक्तौ । क्षरन्तीति बस्तितः। चरके हि,—"स्याच्छर्करा मूत्रपथात् क्षरन्ती" (च. चि. स्था. अ. २६)—इत्येवं पाठितम् ॥ १० ॥

भा० टी०—अश्मरी और शर्करा उत्पन्न होनेके कारण और लक्षण एकही होते हैं। फर्क उन दोनों में इतना ही है कि पित्त से पकने पर, वायु से सूखने पर और कफ से मिलने पर अश्मरी कहलाती है और कफ से सम्बन्ध छूट जाने पर मूत्र मार्ग से बालु या छोटी २ कंकरी की तरह गिरती हुई शर्करा कहलाती है॥ ९–१० ॥

अथास्योपद्रवाः ।

हृत्पीडा वेपथुः शूलं कुक्षावग्निश्च दुर्बलः ।
तया भवति मूर्च्छा च मूत्रकृच्छ्रं च दारुणम् ॥ ११ ॥
मूत्रवेगनिरस्ताभिः प्रशमं याति वेदना ।
यावदस्या पुनर्नैति गुडिका स्रोतसो मुखम् ॥ १२ ॥

( सु० उ० अ० ५१ )

म०—कुक्षौ शूलमिति सम्बधः । तया=शर्करया इति ॥ ११ ॥ १२ ॥

भा० टी०—शर्करा के उपद्रव-हृदय में पीड़ा, कम्प, कोख में शूल, मन्दाग्नि, मूर्च्छा और कठिन मूत्रकृच्छ्र पैदा हो जाता है,मूत्र के वेग के साथ शर्करा निकल जाने पर पीड़ा शान्त हो जाती है और जब तक शर्करा को गोलियाँ मूत्रस्रोत के मुह पर आकर नहीं अटकतीं तब तक पीड़ा नहीं होती ११–१२ ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय भाषाटीकायां मूत्रकृच्छ्रनिदानम् ।

## अथ मूत्राघातनिदानम् ।

( Dysuria ) डिस्यूरिया ।

### अथ मूत्राघातस्य संप्राप्तिः ।

मूत्रविकारसाधर्म्यात् मूत्राघातानाह—

जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ।
प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः ॥ १ ॥

म०-जायन्त इत्यादि । मूत्रकृच्छ्र-मूत्राघातयोश्चायं विशेषः—मूत्र-कृच्छ्रे कृच्छ्रत्वमतिशयितम्, ईषद्विबन्धः, मूत्राघाते तु विबन्धो बलवान्, कृच्छ्रत्वमल्पमिति । मूत्रविघाताद्यैर्मूत्रवेगविधारणादिभिः,आद्यशब्देन पुरीष-शुक्र-वेगविघातादीनां रूक्षाशनादीनां च ग्रहणम् । वातकुण्डलिकादयस्त्रयोदशेति संबन्धः ॥ १ ॥

भा० टी०—मल, मूत्र, वीर्य के रोकने से कुपित दोषों द्वारा वात कुण्डलिका आदि तेरह प्रकार के मूत्राघात रोग होते हैं। मूत्रकृच्छ्र में उतनी पेशाब की रुकावट नहीं रहती जितनी अधिक कड़क। मूत्राघात में पेशाब की रुकावट अधिक होती है, कड़क कम, इतना ही दोनों में फर्क है ॥ १ ॥

### अथ वातकुण्डलिकारोगस्य संप्राप्तिपूर्वकं निदानम् ।

( Spasmodic Stricture ) स्पस्मॉडिक स्टिक्चर ।

वातकुण्डलिकामाह—

रौक्ष्याद्वेगविघाताद्वा वायुर्बस्तौ सवेदनः ।
मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः ॥ २ ॥
मूत्रमल्पाल्पमथवा सरुजं संप्रवर्तते ।
वातकुण्डलिकां तां तु व्याधिं विद्यात्सुदारुणम् ॥ ३ ॥

( सु० उ० अ० ५८ )

म०-रौक्ष्यादित्यादि । आविश्येत्यावृत्य; 'आविध्य' इति पाठान्तरे स एवार्थः । चरति=गच्छति । विगुणः=कुपितः । कुण्डलीकृत इति वात्यावद्बस्तावेव भ्रमंस्तिष्ठतीति ॥ २-३ ॥

भा० टी०—शरीर की रूक्षता या मूत्र के वेग रोकने से वायु कुपित होकर, गोल होकर मूत्राशय में चलता रहता है और मूत्र से मिलकर पीड़ा पैदा करता है, तब पेशाब थोड़ा २ और पीड़ा के साथ उतरता है, इस महा दारुण रोग को वात-कुण्डलिका कहते हैं ॥ २-३ ॥

## अथाष्ठीलारोगस्य लक्षणम् ।

( Enlargement of prostate Gland ) एन् लार्जमेन्ट आफ प्रास्टेट ग्लैंड

अष्ठीलामाह—

आध्मापयन्बस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम् ।
कुर्यात्तीव्रार्तिमष्ठीलां मूत्र-विड्-मार्ग-रोधिनीम् ॥ ४ ॥

म०—आध्मापयन्नित्यादि । रुद्ध्वेति बस्तिगुदमेव । अष्ठीलातुल्यत्वादष्ठीला, सा च वातव्याधावुक्ता ॥ ४ ॥

भा० टी०—अष्ठीला रोग का लक्षण-वायु मल मूत्र को रोक कर मूत्राशय और गुदा को फुलाता हुआ, चञ्चल ऊँची, तीव्र पीडा करने वाली अष्ठीला गाँठ पैदा कर देती है, उसे अष्ठीला कहते हैं ॥ ४ ॥

## अथ वातबस्तिरोगस्य लक्षणम् ।

( Retention of Urine ) रिटेन्शन आफ यूरिन ।

वातबस्तिमाह—

वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ।
निरुणद्धि मुखं तस्य बस्तेर्बस्तिगतोऽनिलः ॥ ५ ॥
मूत्रसङ्गो भवेत्तेन बस्ति-कुक्षि-निपीडितः ।
वातबस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥ ६ ॥

( सु० उ० अ० ५८ )

म०—वेगमित्यादि । बस्ति-कुक्ष-निपीडित इति बस्तौ कुक्षौ च निपीडितः संपिण्डितो वायुरिति संबन्धः; 'बस्तिकुक्षी निपीडयन्' इति पाठान्तरे बस्तिकुक्ष्यो-रुजाकर इति ॥ ५-६ ॥

भा० टी०—जो मूर्ख पेशाब रोक देता है उसके वस्ति और कोख में वायु कुपित और इकट्ठी होकर बस्ति के मुह को बन्द कर देता है, तब मूत्र बन्द हो जाता है। इसे वात वस्ति कहते हैं। यह रोग कष्ट साध्य होता है ॥ ५—६ ॥

## अथ मूत्रातीतरोगस्य लक्षणम् ।

( Incontinence of vrin- ) इनकोन्टिनन्स आफ यूरिन ।

मूत्रातीतमाह—

चिरं धारयतो मूत्रं त्वरया न प्रवर्तते ।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ ७ ॥

म०-चिरमित्यादि । त्वरया न प्रवर्तते इति मूत्रमित्यर्थः । मेहमानस्य=मूत्रं त्यजतः । 'वहमानस्य' इति पाठान्तरं सुगमम् ॥ ७ ॥

भा० टी०—देर तक पेशाब रोके रहने से फिर पेशाब जल्दी नहीं उतरता, यदि उतरता भी है तो धीरे २, इसे मूत्रातीत कहते हैं ॥ ७ ॥

## अथ मूत्रजठररोगस्य लक्षणम् ।

( Distended Bladder) डिस्टेन्डेड ब्लडर।

मूत्रजठरमाह—

मूत्रस्य वेगेऽभिहते तदुदावर्तहेतुकः ।
अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥ ८ ॥
नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् ।
तन्मूत्रजठरं विद्यादधोबस्तिनिरोधनम् ॥ ९ ॥

( सु० उ० अ० ५८ )

म०-मूत्रस्य वेग इत्यादि । तदुदावर्तहेतुक इति मूत्रवेगधारणजनितोदावर्तनिमित्तः । अधोवस्तिनिरोधनमिति वस्तेरधोभागे विबन्धकारकम् ॥ ८—९ ॥

भा० टी० –मूत्र के वेग रोकने से अपान वायु कुपित होकर पेट को फुला देता है और नाभि के नीचे फूल जाता है, अत्यन्त पीडा होती हैं और मूत्राशय के नीचे का हिस्सा रुक जाता है अर्थात् पेशाब बन्द हो जाता है। इसे मूत्रजठर कहते हैं ॥८-९ ॥

## अथ मूत्रोत्सङ्गरोगस्य लक्षणम्।

(Stricture of Urethra) स्ट्रिक्चर आफ यूरेथ्रा।

मूत्रोत्सङ्गमाह—

बस्तौ वाऽप्यथवा नाले मणौ वा यस्य देहिनः।
मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः॥ १०॥
स्रवेच्छनैरल्पमल्पं सरुजं वाऽथ नीरुजम्।
विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः॥ ११॥
(सु० उ० अ० ५८)

म०—बस्तावित्यादि। नाले=मेढ्रे; मणौ=मेढ्राग्रे। प्रवृत्तं सज्जेतेति संसक्तं सन्न प्रवर्तते। सरक्तं वा प्रवाहत इति प्रवाहणकुपितवायुना बस्त्यादिभेदजनितरक्त-युक्तं मूत्रं प्रवर्तते॥ १०-११॥

भा० टी०—वायु कुपित हो जाने से जिस आदमी का निकलता हुआ मूत्र, मूत्राशय, लिङ्ग, अथवा लिङ्ग के अग्र भाग में आकर रुक जाय और काँखने से बस्ति के फट जाने से खून के साथ थोडा २ निकले, इसे मूत्रोत्सर्ग कहते हैं, इसमें पीडा होती भी है और नहीं भी होती॥ १०-११॥

## अथ मूत्रक्षयरोगस्य लक्षणम्।

(Supression of urine) सप्रेशन आफ यूरिन।

मूत्रक्षयमाह—

रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ।
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम्॥ १२॥
(सु० उ० अ० ५८)

म—रूक्षस्येत्यादि। तदाह्वयमिति मूत्रक्षयाख्यम्, कारणे कार्योपचारात्॥ १२॥

भा० टी०—रूक्ष शरीर और थकावट होने से ब्रस्ति में वात पित्त कुपित होकर मूत्र को सुखा देते हैं। फिर दाह और पीडा भी होती है इसे मूत्रक्षय कहते हैं॥१२॥

## अथ मूत्रग्रन्थिरोगस्य लक्षणम् ।

( Abscess or Tumour of the bladder ) एब्सेस या ट्यूमर आफ दि ब्लडर

मूत्रग्रन्थिमाह—

अन्तर्बस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ।
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥ १३ ॥

( वा० नि० अ० ६ )

म०—अन्तरित्यादि । अन्तर्बस्तिमुखे=वस्तिमुखस्याभ्यन्तरे । ग्रन्थिगुडाकाकारः । ननु, स्थान-वेदना=कारणानामभिन्नत्वादश्मर्या सह को भेदः । उच्यते, अश्मर्यां पित्तादिकं संहन्यते, अत्र तु रक्तमेव । उक्तं हि तन्त्रान्तरे—"रक्तं वातकफाद् दुष्टं वास्तिद्वारे सुदारुणम् । ग्रन्थिं कुर्यात् स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ॥ अश्मरीसमशूलं तं रक्तग्रन्थिं प्रचक्षते"—इति । विशेषज्ञानं तु कुत इति चेत् ? अश्मरीपूर्वरूपोक्तस्य मूत्रे वस्तसगन्धत्वादेर्भावाभावाभ्याम् ॥ १३ ॥

भा० टी०—मूत्रग्रन्थि के लक्षण-मूत्राशय के अन्दर वात कफ से छोटी, स्थिर, अश्मरी के समान एक गोल गाँठ हो जाती है; इसमें अश्मरीको ही तरह बड़ी पीड़ा होती है । इसे मूत्रग्रन्थि कहते हैं ॥ १३ ॥

## अथ मूत्रशुक्ररोगस्य लक्षणम् ।

मूत्रशुक्रमाह—

मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ।
स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते ॥ १४ ॥
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ।

( वा० नि० अ० ६ )

म०—मूत्रितस्येत्यादि । मूत्रितस्य=मूत्रवेगितस्य । स्थानाच्च्युतं=स्वस्थानाद्भ्रष्टं शुक्रम् ॥ १४ ॥

भा० टी०—लगे हुए पेशाब को रोक कर मैथुन करने से स्थानच्युत वीर्य वायु द्वारा ऊपर की तरफ को जाता है, बाद फिर पेशाब करने पर आगे या पीछे राख मिले हुए पानी की तरह गिरता है । इसे मूत्रशुक्र कहते हैं ॥ १४ ॥

### अथोष्ण[1]वातस्य लक्षणम् ।

( Gonorrhoea ) गनोरिआ

उष्णवातमाह—

व्यायामाध्वातपैः पित्तं बस्तिं प्राप्यानिलान्वितम् ॥ १५ ॥
बस्तिं मेढ्रं गुदं चैव प्रदहेत् स्रावयेदधः ।
मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा ॥ १६ ॥
कृच्छ्रात्पुनः पुनर्जन्तोरुष्णवातं ब्रुवन्ति तम् ।

( सु० उ० अ० ५८ )

म०—व्यायामेत्यादि । व्यायामात् विरोधिसौम्यधातुक्षयात्तेजोवृद्ध्या पित्तवृद्धिः । अनिलान्वितमानिलसंयुतम् । 'अनिलावृतम्' इति पाठान्तरं सुगमम् । सरक्तमीषल्लोहितम् ॥ १५ ॥ १६ ॥

भा० टी०—व्यायाम करने, अधिक रास्ता चलने और घाम में रहने से वायु और पित्त बस्ति, लिङ्ग और गुदा में जलन पैदा करता हुआ पीला या गुलाबी रंग का मूत्र अथवा केवल रक्त ही कड़क के साथ वार २ निकलता है । इसे उष्णवात कहते हैं दिहाती लोग खर वात कहते हैं । कोई इसे ही सुजाक मानतेहैं ।

### अथ मूत्रसादरोगस्य लक्षणम् ।

( Cystitis ) सिस्टायटिस ।

मूत्रसादमाह—

पित्तं कफौ द्वावपि वा संहन्येतेऽनिलेन चेत् ॥ १७ ॥
कृच्छ्रान्मूत्रं तदा पीतं श्वेतं रक्तं घनं सृजेत् ।
सदाहं रोचना-शङ्ख-चूर्ण-वर्णं भवेत्तु तत् ॥ १८ ॥
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ।

( या० नि अ० ६ )

म०—पित्तमित्यादि । संहन्येते=स्त्यानीक्रियेते । शुष्कमल्पं, तन्मूत्रं पित्तेन रोचनाभं, कफेन शंखचूर्णाभं, समस्तवर्णमुक्तसकलवर्णं सन्निपातात् ॥ १७ ॥ १८ ॥

---

१—इदमेवाधुना लोके "सोजाक" इति नाम्ना प्रसिद्धम् ।

भा० टी०—मूत्रसाद के लक्षण-जिसके मूत्राशय में वायु द्वारा पित्त या कफ सुखा दिये जाते हैं, बाद पेशाब पीला, सफेद, लाल, गाढ़ा गोरोचन और शङ्ख चूर्णके रंग का अथवा सब रंग का थोड़ा निकलता है। इसे मूत्रसाद कहते हैं। इसमें पित्त से गोरोचन जैसा, कफ से शङ्ख चूर्ण के रंग का और सन्निपात से सब रङ्ग का होता है ॥१७-१८॥

## अथ विड्विघातरोगस्य लक्षणम् ।

( Vesico-Intestinal Fistula ) वेसायको इन्टेस्टायनल फिश्चुला।

विड्विघातमाह—

रूक्ष-दुर्बलयोर्वातेनोदावृत्तं शकृद्यदा ॥ १९ ॥
मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः ।
विड्गन्धं मूत्रयेत्कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥ २० ॥

( च० नि० अ० ९ )

म०—रूक्षेत्यादि । अनुपद्येत=प्राप्नुयात् । विड्गन्धमित्यत्र वाशब्दो द्रष्टव्यः ॥ १९ ॥ २० ॥

भा० टी०—रूक्ष और निर्बल पुरुष की विष्ठा को वायु कुपित होकर कब्ज करके ऊपर की तरफ फेर देता है, बाद वह विष्ठा जब मूत्रमार्ग में आ जाती है तो पेशाब विष्ठा के सहित अथवा वैसो बदबूदार दर्द के साथ होता है। इसे विड्विघात कहते हैं ॥ १९-२० ॥

## अथ बस्तिकुण्डलरोगस्य लक्षणम् ।

( Atony of Bladder ) एटनी आफ ब्लडर।

वस्तिकुण्डलमाह—

द्रुताध्वलङ्घनायासैरभिघातात्प्रपीडनात् ।
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥ २१ ॥
शूल-स्पन्दन-दाहाऽऽर्तो बिन्दुं बिन्दुं स्रवत्यपि ।
पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्तिमान् ॥ २२ ॥
बस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ।
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ।

म०—द्रुतेत्यादि । लंघनमुत्पतनम् । उद्वृत्तः=स्वस्थानादूर्ध्वं गतः । गर्भवदिति गार्भिण्या उदरान्तर्गतापत्यवत्; एतेन बस्तिपुटस्य पार्श्वगमनं दर्शितम् । पीडित इति नाभेरधः । उद्वेष्टनार्तिः=उद्वेष्टनरूपाऽऽर्तिः । शस्त्रविषोपमं=शस्त्रविषसदृशामिति विभिन्नार्थसूचनार्थं=प्रसिद्धानुभवोपदर्शनार्थम् ॥ २१ ॥ २२ ॥

भा० टी०—जल्दी २ रास्ता चलने से, अधिक परिश्रम से, चोट से दब जाने से मूत्राशय ऊपर की तरफ खसक कर गर्भ की तरह मोटा होकर रहता है, बाद पीड़ा फरकन, दाह होता है और पेशाव बूँद २ होता है, पेडू पर दबाने से होता है, जकड़न और ऐंठन रहती है । इसे वस्तिकुण्डल रोग कहते हैं । यह हथियार और विष की भांति कष्ट देनेवाला होता है । इसमें वात की प्रधानता रहती है । मामूली चिकित्सक तो इसकी चिकित्सा हो नहीं कर सकते ॥ २१-२२ ॥

## अथ वातस्य दोषान्तरानुबन्धवशाद्विशेषलक्षणानि ।

वातस्यैव दोषान्तरानुबन्धिनो लक्षणमाह—

तस्मिन्पित्तान्विते दाहः शूलं मूत्रविवर्णता ॥ २३ ॥
श्लेष्मणा गौरवं शोथः स्निग्धं मूत्रं घनं सितम् ।

म०—तस्मिन्नित्यादि । श्लेष्मणा अन्विते तस्मिन्निति बोद्धव्यम् ॥२३॥—

भा० टी०—इसी में पित्ताधिक्य होने से दाह, शूल, और पेशाब मैला होता है । कफाधिक्य से भारीपन सूजन और खूब चिकना, सफेद और गाढ़ा होता है ॥ २३ "

## अथैतस्य साध्यासाध्यत्वम् ।

तस्यैव साध्यत्वासाध्यत्वमाह—

श्लेष्मरुद्धबिलो बस्तिः पित्तोदीर्णो न सिध्यति ॥ २४ ॥
अविभ्रान्तबिलः साध्यो न तु यः कुण्डलीकृतः ।

म०—श्लेष्मरुद्धबिल इत्यादि । बिलं=बस्तिमुखशुषिरम् । पित्तोदीर्णः=उपचितपित्तः, स एव अविभ्रान्तबिलोऽनावृतबिलः । कफेनकुण्डलीकृतोऽसाध्य इति बोध्यम् । अकुण्डलीकृतस्तु साध्यत्वेनोक्तः ॥ २४ ॥

भा० टी०—यदि बस्ति कुण्डल रोग में पित्ताधिक्य हो और बस्ति का मुख कफसे बंद हो गया हो तो असाध्य, और यदि कफ से बस्ति का मुह बंद न हो तथा कुण्डलाकार-गोल-न हो गया हो तो रोग साध्य होता है ॥ २४ ॥

अथ कुण्डलीभूतस्यास्य लक्षणम् ।

कुण्डलीभूतस्यैव लिङ्गमाह—

**साढस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥ २५ ॥**

म०—स्यादित्यादि । एतौ विड्विघात-वस्तिकुण्डलौ सुश्रुतेन न पठितौ, तेन हि मूत्रोदकसादमेव द्विधा पठित्वा द्वादश मूत्राघाता इत्युक्तम्, सर्वानभिधानं तु पराधिकारत्वेनेति मन्तव्यम् ॥ २५ ॥

भा० टी०—वायु के कुण्डलाकार होने पर प्यास मूर्च्छा और श्वास होता है ॥२५॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय भाषाटीकायां मूत्राघात निदानम् ।

## अथाश्मरीनिदानम् ।

( Calculus ) कल्क्युलस ।

अथाश्मरीरोगस्य विवरणम् ।

मूत्ररोधित्वसाधर्म्यादश्मरीमाह—

**वात-पित्त-कफैस्तिस्रश्चतुर्थी शुक्रजाऽपरा ।**
**प्रायः श्लेष्माश्रयाः सर्वा अश्मर्यः स्युर्यमोपमाः ॥ १ ॥**

म०—वातेत्यादि । श्लेष्माश्रया इति श्लेष्मसमवायिकारणाः, शुक्रजां विना; तत्र शुक्रस्यैव समवायिकारणत्वात् । तथा च दृढबलः—"विशोषयेद्वस्तिगतं संशुक्रम्" ( च. चि. स्था. अ. २६ )—इत्यादि, एतच्च सामान्योक्तमपि विशेषणं सम्बध्यते । यथा—हल्ङ्यादिसूत्रे 'दीर्घात्' इति विशेषणं ङ्याभ्यां सम्बध्यते, न तु हला । अत एवात्र प्रायोग्रहणं कृतवान् । अन्ये तु शुक्राश्मर्यामपि कफकारणत्वमिच्छन्त्येव, विरोधाभावात् । प्रायः शब्दश्चात्र विशेषार्थः । यमोपमा इति असति चिकित्सिते अवश्यमेव मारकत्वात् ॥ १ ॥

भा० टी०—अश्मरी ( पथरी ) रोग का निदान—अश्मरी रोग चार प्रकार का होता है १ वातज, २ पित्तज, ३ कफज और ४ शुक्रज । शुक्रज अश्मरी को छोड़ कर बाकी सब में कफ की प्रधानता रहती है, यह बडा दुःखदायी रोग है । यदि इसकी ठीक तरह से चिकित्सा न की जाय तो रोगी नहीं बचता ॥ १ ॥

अथाश्मरीरोगस्य सम्प्राप्तिः ।

तस्याः सम्प्राप्तिमाह—

**विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा ।**
**यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥ २ ॥**

( च० चि० अ० २६ )

म०–पित्तेष्विवेति वातशोषितेषु ॥ २ ॥

भा० टी०—अश्मरी की सम्प्राप्ति–जब वायु द्वारा शुक्रमूत्र या कफ, मूत्रपित्त बस्ति में सूख जाता है तब गाय के पित्त में गोरोचन की भांति अश्मरी पैदा हो जाती है ॥ २ ॥

अथाश्मर्यामनेकदोषाश्रयत्वम् ।

नैकदोषाश्रयाः सर्वा,–

( च० चि० अ० २६ )

म०–नैकदोषाश्रया इति त्रिदोषजाः, उद्गतदोषेण व्यपदेशः ॥–

यह रोग त्रिदोषसे होता है—

अथाश्मरीरोगस्य पूर्वरूपम् ।

अथासां पूर्वलक्षणम् ।

पूर्वरूपमाह—

बस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक् ॥ ३ ॥
मूत्रे बस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ।

( वा० नि० अ० ६ )

म०–अथेत्यादि । बस्तसगन्धत्वं=बस्तसमानगन्धत्वम् ॥ ३ ॥—

भा० टी०–अश्मरी के पूर्वरूप में बस्ति फूल जाती है और उसके आसपास चारो तरफ—ऊपर, अंडकोश लिङ्ग में बहुत पीड़ा होती है। पेशाब करने में तकलीफ होती है और पेशाब में बकरा के समान बदबू आती है, तथा ज्वर और अरुचि हो जाती है ॥ ३ ॥

अथाश्मरीरोगस्य सामान्यलक्षणम् ।

तासां सामान्यलक्षणमाह—

सामान्यलिङ्गं रुङ् नाभि-सेवनी बस्ति-मूर्धसु ॥ ४ ॥
विशीर्णधारं मूत्रं स्यात्तया मार्गे निरोधिते ।

म०—सामान्येत्यादि । रुक्=शूलं, वस्तिमूर्धा=नाभेरधोदेशः । विशीर्णधारं=सविच्छेदधारम् । तया=अश्मर्या । मार्गो=मूत्रवाहिस्रोतः ॥ ४ ॥

भा० टी०—पथरी का सामान्य लक्षण—पथरी हो जानेपर सेवनी = सीवन, नाभि और वस्ति के ऊपर पीड़ा होती है, और पथरी मूत्रवाही स्रोत—रास्ते को रोक देती है, जिससे पेशाव एक धार से नहीं होता ॥ ४ ॥

अथ पुनः स्वलक्षणान्तरम् ।

**तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ॥ ५ ॥**
**तत्संक्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत् ।**

( वा० नि० अ० ६ )

म०—तद्व्यपायात्—वायुना कदाचिदश्मरीकृतमार्गरोधव्यपगमात् । मेहेत्=मूत्रयेत् । अच्छमनाविलम् । गोमेदकोपममिति गोमेदको=लोहितमणिस्तद्वर्णम् । तत्संक्षोभात्=निरुद्धमार्गमूत्रेण पीडनादश्मरीसंघट्टनाद्वा क्षते जाते मूत्रवहादौ, सास्रं=सरक्तं मूत्रं प्रवर्तते । अयासात्=प्रवाहणादिजनितक्लमात् ॥ ५ ॥

भा० टी०—कभी कभी वायुद्वारा पथरी हटजाती है और मूत्र मार्ग साफ हो जाता है तो पेशाव स्वच्छ और गोमेदक मणि की तरह लाल रंगका विना किसी तकलीफ के उतरता है। पथरी से मूत्रमार्ग घिसजाने से वहां घाव हो जाता है और पेशाव खून के साथ होता है। पथरी की हालतमें पेशाव जल्दी नहीं उतरता, इसलिए रोगी पेशाव उतारने के लिए कांखता है,उस समय बड़ी ही पीड़ा होती है ॥ ५ ॥

अथ वातजाश्मरीरोगस्य लक्षणम् ।

वातजामाह—

**तत्र वाताद्भृशं चार्तो दन्तान् खादति वेपते ॥ ६ ॥**
**[2]गृह्णाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ।**

---

१ वेदनारहितमित्यर्थः । २—''गृह्णाति'' इति पाठान्तरम् ।

सानिलं मुञ्चति शकृन्मुहुर्मेहति विन्दुशः ॥ ७ ॥
श्यावारुणाऽश्मरी चास्या स्याच्चिता कण्टकैरिव ।
( वा० नि० अ० ६ )

म०-तत्रेत्यादि । क्वणन्=आर्तनादं सानिलं कुर्वन् । सशब्दं, मूत्रप्रवृत्त्यर्थं कृतार्तिकुन्थनात् । मेहति विन्दुश इति विन्दुं विन्दुं मूत्रयति "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्"-इति अल्पार्थे शस्प्रत्ययः । श्यावेत्यादि । अश्मर्या आकारकथनम्, एतच्चाकृष्टानां प्रत्यक्षसंवादेन शास्त्रप्रामाण्यख्यापनार्थमित्याहुः, आकृष्टासु दोषोचितचिकित्सार्थमित्यन्ये ॥ ६—७ ॥

भा० टी०—वातकी पथरीमें इतनी कड़ी पीड़ा होती है कि रोगी दांत कट कटाता हैं, कांपता है। पीड़ा के मारे लिङ्ग और नाभि को दबाता और मसलता है। हर वक्त हाय हाय किया करता है। पेशाब उतरने के लिए जोरसे काँखता है तो पहले आवाज के साथ पाखाना हो जाता है और पेशाब बड़ी मुश्किलसे बूंद बूंद उतरता है । यदि अश्मरी ( पथरी ) यन्त्र के द्वारा बाहर निकाली जाती है तो उसका रंग धुमिल या गुलाबी होता है और उसके चारो ओर कांटेसे मालूम होते हैं ॥ ७ ॥

अथ पैत्तिकाश्मरीरोगस्य लक्षणम् ।

पित्तजामाह—

पित्तेन दह्यते बास्तिः पच्यमान इवोष्मवान् ॥ ८ ॥
भल्लातकास्थिसंस्थाना रक्तपीताऽसिताऽश्मरी ।
( वा० नि० अ० ६ )

म०-पित्तेनेत्यादि । पच्यमानः क्षारेणेव । ऊष्मवान्=उष्णस्पर्शः । असिता=कृष्णा ॥ ८ ॥—

पित्तकी पथरी में वस्ति स्थान ( पेडू ) में ऐसी जलन जान पड़ती है जैसे तेजाब से चुरती हो। ऊपरसे भी छूनेपर गरमी मालूम होती है, बाहर निकलनेपर पथरी भिलावे की गुठली के समान और रंगमें पीली, लाल या काली होती है ॥ ८ ॥

अथ कफजाश्मरीरोगस्य लक्षणम् ।

श्लेष्मजामाह—

बस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ॥ ९ ॥
अश्मरी महती श्लक्ष्णा मधुवर्णाऽथवा सिता ।
( वा० नि० अ० ६ )

म०-बस्तिरित्यादि । श्लक्ष्णा=मसृणा । मधुवर्णा=ईषत् पिङ्गलशुक्ला॥९॥

भा० टी०—कफकी पथरी में पेडू में सूई चुभोने की तरह पीड़ा होती है, ठंडक और बोझ मालुम देता है । पथरी बड़ी चिकनी सफेद या पिङ्गल वर्णकी होती है।

अथासां बालेषु प्रायिकत्वम् ।

एताः प्रायः शिशूनां भवन्तीत्याह—

एता भवन्ति बालानां तेषामेव च भूयसा ॥ १० ॥
आश्रयोपचयाल्पत्वाद्ग्रहणाहरणे सुखाः ।

(वा० )

म०—एता इति त्रिदोषजा बालानां स्युः, तेषां तन्निदानाभ्यासात् । भूयसा=प्रायेण, तेन महतामपि त्रिदोषजा भवन्ति । तेषामेव बालानां ग्रहणाहरणे सुखा इति सम्बन्धः । आश्रयोपचयाल्पत्वादिति आश्रयो=बस्तिः, उपचयः=स्थौल्यं, तयोरल्पत्वं; तच्च तद्देहाल्पत्वात् । आहरणं=पाटनादिपूर्वकमाकर्षणं, ग्रहणं=तदर्थमेवाङ्गुलिभ्यां धारणम् । उक्तं हि सुश्रुते, "प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्न-समशनाध्यशन-शीत-स्निग्ध-मधुराहारप्रियत्वाद्विशेषेण बालानां भवन्ति, तेषामेवाल्पबस्तिकायत्वादल्पमांसोपचयाच्च बस्तेः सुखग्रहणाहरणा भवन्ति" ( सु. नि. स्था. अ. ३ )—इति ॥ १० ॥—

भा० टी०—ये तीनों अश्मरी लड़कों को अधिक हुआ करती हैं, क्योंकि वे लोग प्रायः अश्मरी के निदान—( दिनमें सोना, अगड़ बगड़ खाना, मीठा अधिक खाना आदि ) का सेवन अधिक किया करते हैं । औ साथही यह भी बात है कि उन की पथरी जल्दी अच्छी भी हो जाती है, क्योंकि उनका बस्तिस्थान छोटा और मोटा कम होता है,इसलिए शस्त्रादि के द्वारा उनकी पथरी सुगमतासे निकाली जा सकती है। बालकों के अलावा बड़ी उम्रके लोगों को भी ये पथरियां हो जाया करती हैं ॥ १० ॥

अथ शुक्राश्मरीमाह—

शुक्राश्मरीमाह—

शुक्राश्मरी तु महतां जायते शुक्रधारणात् ॥ ११ ॥
स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ।
शोषयत्युपसंगृह्य शुक्रं तच्छुक्रमश्मरी ॥ १२ ॥

(वा० नि० अ० ६ )

म०–शुक्रेत्यादि । तुशब्दोऽवधारणे; तेन महतामेव नतु बालानां, तेषां वक्ष्यमाणसम्प्राप्तेरभावात्; नतु शुक्राभावात्, अन्यथा षड्धातुकत्वं स्यात् । शुक्रधारणादुपस्थितशुक्रवेगस्य मैथुनाकरणात् । मुष्कयोरन्तरे 'मेढ्रेण सह' इति शेषः । सुश्रुते हि 'मेढ्र-वृषणयोरन्तरे' ( सु. नि. स्था. अ. ३ )–इत्येवोक्तम् । मेढ्रवृषणमध्यगतबस्तिमुख इत्यर्थः, तत्रैव शुक्रवहस्रोतसो वस्तिमुखेन सह सम्बन्धात् । तथाभूतं शुक्रमेवाश्मरीति ॥ १२ ॥

भा० टी०–शुक्राश्मरी बड़ी उम्रके लोगों को ही होती है, क्योंकि शुक्राश्मरी की सम्प्राप्ति बालकों में नहीं घटती, मैथुन करने की इच्छा होनेपर किसी कारण वह न होसकने से लिङ्ग और अण्डकोश के बीच इकट्ठे हुए शुक्र (वीर्य) को वस्ति मुख के पास सुखाकर उसे पथरी की सूरतमें करदेता है । उसेही शुक्राश्मरी कहते हैं॥१२॥

अथ शुक्राश्मर्या लक्षणम् ।

तस्या लक्षणमाह—

बस्तिरुङ्-मूत्रकृच्छ्रत्व-मुष्कश्वयथु-कारिणी ।
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥ १३ ॥
पीडिते त्ववकाशेऽस्मिन्,—

( वा० नि० अ० ९ )

म०–वस्तिरुक्=वस्तिशूलं, मुष्कश्वयथुकारिणी=वृषणयोः शोथकारिणी । तस्यां=शुक्राश्मर्याम् । एति=वर्तते । तुशब्दोऽवधारणे । अवकाशेऽस्मिन्निति= मेढ्रवृषणयोरन्तरे । अस्मिन्नेव पीडिते सति विलीयते=प्रविलयमापद्यत इत्यर्थः । अत एव सुश्रुतः,—"पीडितमात्रे च तस्मिन्नेवावकाशे प्रविलयमापद्यते" ( सु. नि. स्था. अ. ३ )–इति ॥ १३ ॥

भा० टी०—इस प्रकार शुक्राश्मरी पैदा होनेपर वस्ति में पीड़ा होती है, पेशाव मुश्किल से उतरता है और अण्डकोशमें सूजन हो जाता है । शुक्राश्मरी के पैदा होते ही लिङ्ग और अण्डकोशके बीच में दबाने से शुक्राश्मरी गुप्त हो जाती है और मूत्रमार्ग से वीर्य कुछ २ निकलता है, परन्तु अच्छी तरह से शुक्राश्मरी होजाने पर लिंग और अण्डकोश के बीच दबाने से भी शुक्राश्मरी गुप्त नहीं होती ॥ १३ ॥

---

१ तस्यां शुक्राश्मर्यामुत्पन्नमात्रायां सत्यां शुक्रं शुक्राश्मरी । अस्मिन्नवकाशे मेढ्रवृषणयोरन्तरे पीडिते सति विलीयते विलीना भवति । प्रकर्षेणोत्पन्नायान्तु तदन्तरे पीडिते सत्यपि न विलीयत इत्यभिप्रायः ।

## अथ शर्करारोगस्य लक्षणम् ।

( Gravel Renal Calculi ) ग्रविल रीनल कल्क्युलाइ

सैवावस्थाभेदादश्मरी शर्करा, पञ्चमी न भवतीत्याह—

—अश्मर्येव च शर्करा ।

( वा० नि० अ० ६ )

म०—अश्मर्येव चेति । चकारात् सिकताऽपि भवतीति मन्तव्यम् । अत एव 'शर्करा सिकतान्विता' इति वक्ष्यति । शर्करा-सिकतयोश्च महत्वाल्पत्वाभ्यां भेदः ॥

## अथ शर्करारोगस्य संप्राप्तिः ।

कथमश्मरी शर्करा भवतीत्याह—

अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे ॥ १४ ॥
निरेति सह मूत्रेण प्रतिलोमे निरुध्यते ।
मूत्रस्रोतःप्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ॥ १५ ॥

( वा० नि० अ० ८)

म०—अणुश इत्यादि । अणुशोऽल्पशः । अत्रार्थे सुश्रुतः—"पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः । सा भिन्नमूर्तिर्वातेन शर्करेत्यभिधीयते"(सु. नि. स्था. अ. ३)-इति । मूत्रस्रोतः प्रवृत्ता सा सक्तेति=मूत्रमार्गगा सती संलग्नेत्यर्थः ॥१४—१५॥

भा० टी०—यह शुक्राश्मरी ही जब वायु द्वारा भीतर शर्करा ( छोटी २ कंकड़ी ) के रूपमें टुकड़ा टुकड़ा हो जाती है तो उसे शर्करा कहते हैं, और यदि अधिक छोटी बालूकी सूरतमें अश्मरी का टुकड़ा होता है तो सिकता कहते हैं। यह शर्करा या सिकता वायुके अनुलोम (सीधे) हो जानेपर पेशाब के साथ निकलती है और वायुके प्रतिलोम (उलटे) रहने पर नहीं निकलती, किन्तु पथरी कभीभी स्वयं नहीं निकलती, चाहे वायु अनुलोम रहे या प्रतिलोम। शर्करा यदि निकलते समय मूत्र मार्ग में अटक जाय तो बड़े उपद्रव खड़े हो जाते हैं ॥१५॥

अथाश्मरी-शर्करयोरुपद्रवाः ।

दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमथारुचिम् ।
पाण्डुत्वमुष्णवातं च तृष्णां हृत्पीडनं वमिम् ॥ १६ ॥

( सु० नि० अ० ३ )

भा० टी०—अश्मरी और शर्करा के उपद्रव—देह दुबली हो जाना, ताकत कम हो जाना, शरीर सुस्तरहना, कोखमें शूल होना, अन्नमें रुचि न होना, शरीर पीला हो जाना उष्णवात रोग होजाना, प्यास, कय और हृदयमें पीड़ा होना, ये सब अश्मरी शर्करा के उपद्रव हैं।

अथानयोरसाध्यलक्षणम् ।

असाध्यलक्षणमाह—

प्रशूननाभिवृषणं बद्धमूत्रं रुजातुरम् ।
अश्मरी क्षपयत्याशु सिकता शर्करान्विता ॥ १७ ॥

( सु० सू० अ० ३३ )

इति श्री माधवकर विरचिते माधवनिदानेऽश्मरी निदानं समाप्तम् ।

म०–प्रशूनेत्यादि । रुजातुरं शूलपीडितमित्यर्थः ॥ १७ ॥

इति श्रीविजयरक्षित कृतायां मधुकोशव्याख्याया मश्मरीनिदानं समाप्तम् ।

भा० टी०—नाभि और अण्डकोशमें सूजन हो जाय, पेशाव एक दम न उतरे, पीड़ा बहुत हो तो, और सिकता या शर्करा की सूरत में अश्मरी हो जाय तो रोगी नहीं बचता ॥ १७ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्वि निश्चयभाषाटीकायामश्मरीनिदानम् ।

* श्रीः *

# अथोत्तरार्धम् ।



## अथ प्रमेह-प्रमेहपिडका-निदानम् ।

( Diseases of the Urination ) डिज़ीज़िज़ आफ़ दि यूरिनेशन

### अथ प्रमेहरोगस्य हेतवः सम्प्राप्तिश्च ।

अश्मरीरोगानन्तरं वस्तिविकृतिसाम्यात्प्रमेहनिदानमुच्यते—

**आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि ।**
**नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम् ॥ १ ॥**

( च० चि० अ० ६ )

*चन्द्रोदय-प्रणय-पीवर-दुग्धसिन्धु-पूर-भ्रमं वहति यद्गुणकीर्तिगुच्छः ।
तेन व्यधायि गुरुणा विजयेन शिष्यप्रेम्णाऽश्मरीरुग[1]वधेर्मधुकोषबन्धः ॥१॥
श्रीकण्ठदत्तभिषजा गुरुभक्तिलेशादारभ्यते प्रभृति संप्रति मेहरोगात् ।
सूक्तीर्विचिन्त्य मधुशीकरमुद्गिरन्तीष्टीकाकृतः कतिपयस्य तदीयशेषः ॥२॥

म०—आस्यासुखमित्यादि । आस्या=उपविष्टस्य चेष्टोपरमः, तेन कृतं सुखमास्यासुखम्, एवं स्वप्नसुखमिति द्रष्टव्यम् । तेनासनादिदोषादास्यादुःखं स्वप्नदुःखं वा न प्रमेहहेतुः । गुडवैकृतमिति गुडविकाराः शर्करादयस्तथा गुड-कृताश्च भक्ष्याः । प्रमेहहेतुः कफकृच्च सर्वमित्यनुक्तहेतुसंग्रहार्थमुक्तम् । एष साधा-रणो हेतुः प्रमेहस्य; विशेषहेतुस्तु चरके निदानस्थाने,—"हायनकोद्दालक"—इत्यादिना कफजस्य, 'उष्णाम्ललवण'—इत्यादिना पित्तजस्य, 'कटुतिक्तकषाय' ( च. नि. स्था. अ. ४ )—इत्यादिना वातजस्याभिहितः । [2]एतेन सामान्य-

---

* चन्द्रोदयेति—यस्य गुरोर्गुणकीर्तिगुच्छः गुणबाहुल्यात् स्तवकस्वरूपः । चन्द्रोदये यः प्रणयः प्रेम तेन पीवरस्य स्फीतस्य दुग्धसिन्धोः क्षीरसागरस्य पूरस्य सागरस्थदुग्धौघस्य भ्रमं भ्रान्तिं वहति, तेन शिष्यप्रेम्णा गुरुणा विजयेन अश्मरीरुगवधिरिति पाठे तु अश्मरी रुगवधिर्यस्य, मधुकोश एव बन्धो व्यधायि अकारि । सम्प्रति इदानीं श्रीकण्ठदत्त भिषजा गुरुभक्तिलेशात् कतिपयस्य टीकाकृतः टीकाकारस्य मधुशीकरम् मधोः पुष्परसस्य शीकरं कणां उद्गिरन्तीर्वमनं कुर्वतीः सूक्तीः शोभनवचनानि । यथा पुष्परस आह्लादजनक एवं टीकाकाराणां ग्रन्थतत्त्वार्थप्रकाशकत्वेन सूक्तयोऽपि हृदयानन्दकारिण्य इत्यर्थः । विचिन्त्य विचार्य, मेहरोगात्प्रभृति तस्य मधुकोपस्यायं तदीयः सचासौ शेष मधुकोष इत्यर्थः, आरभ्यते विधीयते ॥

१—"रुगवधिः" इति पाठान्तरम् । २-एतेनेति—चरके वातजादिप्रमेहस्य पृथक् पृथक् निदानकथनेन । किंचेति—एत दास्यासुखादि सर्वं निदानं सर्वेषां वातजादिमेहानां कारणं सदपि विशेषतः कफजप्रमेहस्यैव हेतुर्मेहानां विशेषेण कफेनोत्पत्तेरिति।

हेतुसहितो विशिष्टहेतुः कफजादिप्रमेहस्य । किंच कफजनिदानमप्येतदास्यासुखादि बोद्धव्यम् ॥ १ ॥

भा० टी०—प्रमेह का कारण—आस्यासुख = गुलगुली, ऊँची गद्दीपर हरवख्त बैठे रहना, कोई परिश्रमजनक काम न करना, अच्छी शय्यापर अधिकतर सोये रहना, दही, ग्राम्य-गांवके पशु-खसी, भेंडा, दुम्मा, आदि, औदक = मछली कछुवा सूँईस आदि, अनूप = जल के किनारे रहनेवाले हंस, चकवाचकई, भैंस, सूअर आदि के मांस कारस, दूध, नया अन्न और नया जल ( बरसातीपानी ) गुड़ राव, चोटा, शकर, इन चीजों का सेवन तथा कफ वर्धक आहार विहार का सेवन प्रमेह रोग पैदा करनेवाला होता है ॥ १ ॥

## अथ त्रिदोषजमेहानां क्रमेण सम्प्राप्तिः ।

कफ-पित्त-वात-जमेहानां क्रमेण सम्प्राप्तिमाह—

मेदश्च मांसं च शरीरजं च क्लेदं कफो वस्तिगतः प्रदूष्य ।
करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि ॥ २ ॥
क्षीणेषु दोषेष्ववकृष्य धातून् संदूष्य मेहान् कुरुतेऽनिलश्च ।
साध्याः कफोत्था दश, पित्तजाः षड् याप्या, न साध्यः पवनाच्चतुष्कः
समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथा मं ते ॥ ३ ॥

( च० चि० अ० ६ )

म०—मेद इत्यादिना । अत्र कफजा एव मेहा [1]भूयस्त्वेन साध्यत्वेन च आदावुच्यन्ते । तानेवेति मेदोमांसशरीरजक्लेदान् । उष्णैरिति उष्णवीर्यस्पर्शैर्द्रव्यैः । क्षीणेषु दोषेष्विति प्रवृद्धत्वेनैव क्षीणेषु, न तु समानापेक्षया क्षीणेषु; अनेन वृद्धे कफे पित्ते वा यो वायुर्लङ्घनादिना क्रमेण वृद्धो भवति, स नेहासाध्यमेहचतुष्टयप्रकरणे विवक्षित इति सूच्यते[2] । तत्र हि चिकित्साविधानात् साध्यत्वमस्ति । यदुक्तं,—"या वातमेहान् प्रति पूर्वमुक्ता वातोल्बणानां विहिता क्रिया सा । वायुर्हि धातुष्वतिकर्षितेषु कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता" ( च. चि. स्था. अ. ६ )

---

१ भूयस्त्वेन इतरमेहापेक्षया संख्यायां बहुत्वेन । २ यस्तु स्वमानापेक्षया क्षीणे पित्ते कफे च कुपितवायुकृतोमेहः स एवासाध्य इत्यर्थः ।

इति । दोषेष्विति कफपित्तेषु, द्वयोश्च बहुवचनं व्यक्त्यपेक्षया बहुत्वात् । अत्रकृष्येति वस्तिमुखं नीत्वा। धातूनिति वसामज्जौजोलसीकाख्यान् । समक्रियत्वादिति कफस्य दोषस्य दूष्यस्य च मेदःप्रभृतेः समानत्वात् कटुतिक्तादिक्रियायाः । अत्र व्याधिमहिम्ना तुल्यदूष्यता साध्यताया हेतुः । तेन "न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत् ( च. सू. स्था. अ. १० ) इति चरकवचनं कष्टसाध्यतार्थं नोद्भावनीयम् । यदुक्तं,—"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम् ॥"—इति । विषमक्रियत्वादिति पित्तस्य प्रमेहप्रधानदूष्यस्य च मेदः प्रभृतेश्चान्योऽन्यविपरीतक्रियत्वात्; पित्तहरं हि मधुरादि मेदस्करं, मेदोहरं च कटुकादि पित्तकरमिति क्रियावैषम्यहम्, अत्र व्याधिस्वभावो हेतुः, तेनान्येषु व्याधिषु परस्परविरुद्धदोषदूष्यसंसर्गेऽप्युभयप्रत्यनीकभेषजविधिरविरोधीति । महात्ययत्वादिति मज्जादिगम्भीरधात्वपकर्षकत्वेन बहुव्यापत्तिकरत्वात्; आशुकारित्वादितीशानः । चकारात् विषमाक्रियत्वं च वातजानां समुच्चीयते ॥ २ ॥ ३ ॥

भा० टी०—कुपित कफ वस्तिस्थानमें जाकर मेद मांस, शरीरके क्लेद (आर्द्रता) को विगाड़ कर कफ के प्रमेह को, इसी प्रकार पित्तभी अपने कारणों से खास कर उष्णपदार्थों सें कुपित होकर उन्हीं मेद आदि को खराब कर पित्तज प्रमेह को पैदा करता है । वायु भी कफ पित्तके क्षीण होजानेपर वसा, मज्जा, लसीका और ओजको वस्तिमें खींचलाकर वातजप्रमेह को पैदा करताहै । इनमें कफके दश प्रमेह साध्य–जल्दी अच्छे होजाते—हैं—क्योंकि दोष (कफ)और दूष्य मेद आदि,दोनों की चिकित्सा एकही प्रकार की कटु तिक्त आदि दवा से हो सकती है । पित्तका छः प्रमेह याप्य होता है । कारण यह है कि इसप्रमेह में विषम क्रिया होती है, क्योंकि पित्त शान्ति करने वली मधुर आदि दवा से मेद आदि दूष्य बढ़ेंगेऔर मेद आदि दूष्यकी कटुआदि दवासे पित्त की वृद्धि होगी । वातका प्रमेह चार असाध्य होता है, क्योंकि वह मज्जा आदि गम्भीर धातुको दूषित करता है,जिससे बड़े२ भयङ्कर रोग खड़े हो जाते हैं, और फिर वात आशुकारी होताहै । वह जल्दा ही धातुओं को क्षीण करदेता है, जिस से कि धातुओं की पूर्ति और शुद्धि जल्दी नहीं हो पाती । परन्तु वह वातज मेह तब असाध्य होताहै, जबकि अपने प्रमाण से कफ और पित्त क्षीण (कम) हो जाते हैं, और वायु कुपित होकर प्रमेह पैदा कर देता है । यदि अपने कारणों से पित्त और कफ बढ़जाँय और यदि उस समय लङ्घन आदिसे बढ़े हुए कफ पित्तके कम हो जाने पर वायु कुपित होकर प्रमेह करदे तो वह प्रमेह असाध्य नहीं होता॥ २—३ ॥

## अथ सर्वमेहानां दोष-दूष्यसंग्रहः।

सर्वमेहानां दोषदूष्यसंग्रहमाह—

**कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः।**
**मज्जा रसौजः पिशितं च दूष्याः प्रमेहिणां विंशतिरेव मेहाः॥ ४॥**

(वा० नि० अ० १०)

म०—कफ इत्यादिना। वसा=मांसस्नेहः, सर्वदेहस्नेह इत्यन्ये। लसीका=उदकविशेषः। यथाह चरकः—"यत्तु मांसत्वगन्तरे उदकं तल्लसीकाशब्दं लभते" (च. शा. स्था. अ. ७)—इति। रसौज इति रसश्च ओजश्च इति द्वन्द्वः। ओजश्चात्रार्धाञ्जलिपरिमितं श्लेष्मरूपम्। यदुक्तम्—श्लेष्मलस्यौजसोऽर्धाञ्जलिः परिमाणम्" (च. शा. स्था. अ. ७)—इति। न त्वष्टबिन्द्वात्मकं, तस्य भ्रंशेन मरणाभिधानात्। ननु रस एवौजो रसौज इति कुतो न कल्प्यते? रसोऽप्योजः शब्देनोच्यते; यदुक्तम्—"तस्मिन् काले पचत्यग्निर्यदन्नं कोष्ठमागतम्। मलीभवति तत् प्रायः कल्प्यते किंचिदोजसे' (च. चि. स्था. अ. ८)-इति; ओजसे इति रसायेत्यर्थः। नैवम्-ओजसो हि मधुमेहे दूष्यत्वेनोक्तत्वात्, ओजः शब्दोपादानवैफल्याच्च। यद्यप्यत्र बहूनि मेदः प्रभृतीनि दूष्यत्वेनोच्यन्ते, तथाऽपि पूर्वं मेदो-मांसशरीरज-क्लेदानां सर्वमेहेष्ववश्यम्भाविदूष्यत्वेन पृथगभिधानम्। मज्जादयस्तु मेहविशेषे दूष्याः। तद्यथा-लसीका वसा-मज्जौजांसि वातिके, न पैत्तिके, न श्लैष्मिके। ईशानः पुनराह-रस-रक्त-शुक्राणि सर्वमेहेषु कदाचित् दूष्यन्ते न त्ववश्यमिति। किंच सर्वमेहानामेव दोषत्रयजन्यत्वं सकलदूष्याश्रयित्वं च 'कफः सपित्त'-इत्यादिनोपदर्श्यते। मेदोमांसादीनि त्वत्यन्तदूष्योपदर्शनार्थं पृथगुक्तानि। यतश्चरकेऽपि कियन्तः शिरसीयाध्याये सकलमेहवाचकमधुमेहकथने दोषत्रयप्रकोपोऽभिहितः। तथाहि—"समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः। दर्शयत्याकृतिं गत्वा क्षयमाप्याय्यते पुनः" (च. सू. स्था. अ. १७)-इति। तथा सुश्रुतोऽप्याह—"वात-पित्त-मेदोभिरन्वितः श्लेष्मा मेहान् जनयति" (सु. नि. स्था. अ ६)-इत्यादि। कफादीनां द्रवत्वलवणादिसंसर्गस्यानन्त्येन सर्वमेहावस्थाविशेषेण मधुमेहेन च 'संख्याधिक्यप्रसङ्गनिरासायावधारणार्थमाह-विंशतिरेव मेहा इति॥ ४॥

भा० टी०—प्रमेह में वात, पित्त और कफ ये तीन दोष होते हैं मेद, । अस्र (रक्त) शुक्र, अम्बु (शरीर क्लेद) वसा, लसीका (मांस और त्वचा के वीचमें रहनेवाला जल) मज्जा,रस,ओज और मांस,ये दूष्य होतेहैं । और प्रमेह सिर्फ वीस प्रकार का होताहै॥४॥

### अथ प्रमेहस्य पूर्वरूपाणि ।

पूर्वरूपमाह—

दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः ।
दाहश्चिक्कणता देहे तृट् स्वाद्वास्यं च जायते ॥ ५ ॥

( वा० नि० अ० १० )

म०-दन्तादीनामित्यादि । आदिशब्देन नयन-तालु-कर्णादीनां ग्रहणम् । यदुक्तं सुश्रुते-"तालु-गल-जिह्वा-दन्तेषु मलोत्पत्तिः" ( सु. नि. स्था. अ. ६ )- इति । अत्र च मलभूयस्त्वं मेदोदोषात् । चिक्कणता देहे मेदःकफदुष्टेः । अत्र चकारात् सुश्रुतोक्तकेशजटिलीभाव-नखातिवृद्धी बोध्ये । एतच्च व्याधिविशेषनियतमेव, येनान्यत्र विद्यमानाऽपि कफमेदोदुष्टिर्नैवं कर्तुं क्षमा ॥ ५ ॥

भा० टी०—प्रमेह का पूर्वरूप—दांत, आंख, तालु, गला, कान और जीभमें मल अधिक देख पड़ना, हाथ पैर में जलन होना, शरीरमें चिकनाहट मालूम होना, प्यास लगना, मुह मीठारहना, ये सब लक्षण प्रमेह के पूर्व रूपमें होते हैं ॥ ५ ॥

### अथ प्रमेहस्य सामान्यलक्षणम् ।

सामान्यलक्षणमाह—

सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ।
दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ६ ॥
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ।

( वा० नि० अ० १० )

म०-सामान्यमित्यादि । प्रभूतेत्यादि प्रभूतमूत्रत्वं दूष्यद्रवधातुसंबन्धात्, आविलत्वं दोषदूष्यसंसर्गात् । ननु कथं कफेन दश, पित्तेन षडित्यादिव्यवस्था ? यतः कारणभेदात् कार्यभेद इत्याशङ्क्याह-दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः

इति । तेषां दोषदूष्याणामु[1]त्कर्षापकर्षकृतात् संयोगभेदाद्भेदो मेहेषु भवति । यथा—पञ्चानां वर्णानां श्वेत–कृष्ण–पीत–लोहित–श्यावानां संयोगभेदादनेकपिङ्गल–पाटलादिभेदः । सुश्रुतेऽप्युक्तम्—"यथा पञ्चानां वर्णानामुत्कर्षापकर्षकृतेन संयोग-विशेषण कपिलादिनानावर्णोत्पत्तिरेवं दोषादिसंसर्गान्मेहानां नानात्वम्" ( सु. नि. स्था. अ. ६ )–इति । संयोगभेदप्रतीतिः कुत इत्यत आह–मूत्रेत्यादि । मूत्रवर्णादिभेदं दृष्ट्वा कारणानां समानानां भेदः कल्पनीयः, यथा–मृदादिकारण-कलापस्याभेदेऽपि कुम्भकारादिसंयोगभेदादुद[2]ञ्चनादिप्रपञ्चभेदः । ननु, उदञ्चनादौ कुम्भकारादिप्रयत्नभेदात् संयोगभेदः, अत्र तु कः संयोगभेदहेतुः ? उच्यते, तत्तदाहारादिकमदृष्टं च भवतीत्यदोषः ॥ ६ ॥

भा० टी०—प्रमेह का सामान्य लक्षण—दूष्यद्रवधातु तथा दोषों के संसर्ग से पेशाब का बहुत और मैला होना प्रमेह का सामन्य लक्षण मानागया है । यद्यपि कफ पित्त और वायु,ये तीन ही दोष होते हैं,इसलिए तीन ही प्रमेह होना चाहिए । तथापि इन दोषों का दूष्यों के साथ कम या ज्यादा संयोग होने से पेशाव का रंग और स्वाद जो कई तरह का हो,जाता है, उसी कारण कफसे दश,पित्तसे छः और वात से चार प्रमेह गिनती में मानागया है ॥ ६ ॥

## अथ श्लैष्मिकाणां दशमेहानां लक्षणानि ।

अत्र कफस्य श्वेतशीतमूर्तपिच्छिलाच्छास्निग्धगुरुमधुरसान्द्रप्रसादमन्देषु गुणेषु मध्ये कुत्रचित् किञ्चिद्गुणप्रकर्षादुदकमेहादयो दश दृश्यन्त इत्याह—

अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ॥ ७ ॥
मेहत्युद[3]कमेहेन किञ्चिदाविलपिच्छिलम् ।
इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ ८ ॥
सान्द्रीभवेत् पर्युषितं सान्द्रमेहेन मेहति ।
सुरामेहि सुरातुल्यमुपर्यच्छमधो घनम् ॥ ९ ॥
संहृष्टरोमा पिष्टे[4]न पिष्टवद्बहुलं सितम् ।
शुक्राभं शुक्रमिश्रं वा शुक्र[5]मेही प्रमेहति ॥ १० ॥

---

१–उत्कर्ष-आधिक्यम् । अपकर्षो ऽल्पम् । २–उदञ्चनादिप्रपञ्चभेदो घटशरावादिप्रपञ्चभेदः ३उदकमेह=Diabetes Insipidus. डाइबिटीज इनसीपीडस ४ पिष्टमेह =Ghylurea. कायल्यूरिआ ५ शुक्रमेह = Spermatorrh oea ( स्पर्माटोरिया )

मूर्ताणून् सिकतामेही[1] सिकतारूपिणो मलान् ।
शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ ११ ॥
शनैः शनैः शनैर्मेही[2] मन्दं मन्दं प्रमेहति ।
लालातन्तुयुतं मूत्रं लालामेहेन[3] पिच्छिलम् ॥ १२ ॥

( वा० नि० अ० १० )

म०—अच्छमित्यादि । सान्द्रप्रसादस्तु एक एव गुणो गणनीयः, सान्द्रमेहव्यपदेशस्त्वेकदेशेन भविष्यतीति । एतैश्च श्वेतादिभिर्गुणैर्व्यस्तैः समस्तैश्च योगाद्दश मेहा न तु यथाक्रमं,—"येन गुणेनैकेनानेकेन वा भूयस्तरमुपसृज्यते तत्समाख्यं गौणं नामविशेषं प्राप्नोति" ( च, नि, स्था, अ, ४ )—इति । चरकवचनात् । नच यथा दशभिर्गुणैर्दश मेहान् करोति तथा संसर्गविकल्पान्तरेणापरानपि कुतो न करोतीत्याशङ्कनीयं, भावस्वभावस्यापर्यनुयोज्यत्वात्, अदृष्टकल्पनायाश्चानर्हत्वात् । तत्र श्वेताच्छशीतैर्गुणैरुदकमेहः, मधुरशीताभ्यामिक्षुमेहः, सान्द्रपिच्छिलाभ्यां सान्द्रमेहः, अच्छेन पित्तानुरागिणा सुरामेहः, शुक्लेन पिष्टमेहः, अत्र पिष्टवदित्यालेपनपिष्टवत्; श्वेतस्निग्धाभ्यां शुक्रमेहः । अत्र शुक्राभमिति सर्वमेव मूत्रं शुक्रतुल्यं, शुक्रमिश्रं वेति शुक्राभशुक्रमिश्रं, वास्तवशुक्रमिश्रत्वे तु कफजस्याप्यसाध्यत्वं स्यादिति । वाप्यचन्द्रस्तु शुक्रस्य मूत्रेण गुणकृतं सादृश्यं, शुक्रमिश्रं वेति च शुक्रगुणानां संयुक्तसमवायात् मूत्रे दर्शनमित्याह । सान्द्रमूर्ताभ्यां सिकतामेहः, अत्र मूर्ताणूनिति मूर्तान् कठिनान्, अणून् अल्पान्; मलानिति बहुवचनं दोषाणामवयवबहुत्वात्, जात्याख्यायामेकस्मिन् बहुवचनमिति वाप्यचन्द्रः । मलोऽत्र प्रकरणात् कफः । गुरु-मधुर-शीतैः शीतमेहः । मन्दमूर्ताभ्यां शनैर्मेहः । पिच्छिलेन लालामेहः । चरके सुरामेहस्थाने सान्द्रप्रसादमेहः पठितः, तथा पिष्टमेहः शुक्लमेहशब्देन, तेनैव शीतमेह-लालामेहौ पठितौ, पित्तजश्च कालमेहः; सुश्रुतस्तु चरकोक्तशीतमेहलालामेहयोः स्थाने फेनमेहलवणमेहौ, कालमेहस्थाने चाम्लमेहं पठितवान् । सामञ्जस्यं चात्र नास्त्येव, परस्परलक्षणसंवादाभावात्, स्मृतिद्वैधवत् सर्वं प्रमाणम् ॥ ७–१२ ॥

भा० टी०— कफके दश मेह—उदकमेह में पेशाव साफ, अधिक, सफेद, ठंडा, गन्धरहित, पानी की तरह, कुछ गँदला और पिच्छिल ( लबाबदार होता है । इक्षुमेह

---

१ सिकतामेह=Uric Acid diabetus. यूरिक ऐसिड डाइबिटीज़ २ शनैर्मेह=Enuresis. ऐन्यूरेसिस
३ लालामेह= Albuminuria. ऐल्ब्यूमिनोरिआ ।

में पेशाव,ऊखके रस की तरह मीठा और ठंडा होता है। **सान्द्रमेह**में पेशाव,बासी हो जानेपर गाढ़ा और लबाबदार होता है। **सुरामेह**में पेशाव मद्यकी तरह और ऊपर साफ़ तथा नीचे गाढ़ा होता है। **पिष्टमेह** में पेशाव, पानीके साथ पीसे हुए चावलों के लेपन की तरह सफेद और गाढ़ा होता है, पेशाव करते समय रोयें खड़े हो जाते हैं-शरीर गन गना जाता है। **शुक्रमेह** मेंपेशाव शुक्रसेमिला हुआ या रंगरूपमें शुक्र के सदृश होता है। **सिकतामेह** में पेशाव में वालु कीतरह छोटे कफके कण गिरते हैं। **शीतमेह** में पेशाव बहुत मधुर और ठंडा होता है। **शनैर्मेह** में पेशाव थोड़ा थोड़ा और धीरे २ होता है। **लालामेह** में पेशाव लार की तरह तार दार और पिच्छिल होता है ॥ ७—१२ ॥

## अथ पैत्तिकमेहानां षण्णां लक्षणानि।

पित्तात्तु षड्भिः पित्तगुणैः क्षारनीलकालपीतलोहितविस्रैर्यथाक्रमं क्षारमेहादयः षट्, तान् गन्धवर्णरसस्पर्शैरित्यादिना दर्शयति—

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।
नीलमेहेन नीलाभं कालमेही मसीनिभम् ॥ १३ ॥
हारिद्रमेही कटुकं हरिद्रासंनिभं दहत् ।
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ १४ ॥
विस्रमुष्णं सलवणं रक्ताभं रक्त[1]मेहतः ।

( वा० नि० अ० १० )

**म०—गन्धेत्यादि** । नीलाभमिति चासपक्षप्रभं, चासः 'स्वर्णचूड' इति लोके ख्यातः, क्वचित् 'टाकूसना चासः' इति **गदाधरः**, तत्पक्षश्च स्निग्धनीलो भवति । दहदिति मूत्रविशेषणम् । दहन्निति पाठान्तरे दाहमनुभवन् पुरुषः ॥ १३–१४ ॥

**भा० टी०—पित्त के छः प्रमेह—क्षारमेह** में पेशाब, क्षारजल की तरह गन्ध, रंग और स्पर्शवाला होता है। **नीलमेह** में पेशाब नीला होता है। **कालमेह** में पेशाब स्याही की तरह काला होता है। **हारिद्रमेह** में पेशाब, कड़वा, पीला और जलता

1 रक्तमेह Haematurea. हेमेच्यूरिआ

अनन्यउपद्रवकृत = शोथके निदानसे पुरुष के परमें पैदा हुआ तथा स्त्री के मुखमें पैदा हुआ शोथ असाध्य होता है। यदि पाण्डुरोग, ग्रहणी, ज्वर, अर्श आदि रोगमें दूसरे निदानों से शोथ पैर में पैदा होता है तो वह साध्य होता है। बस्ति = पेड़ू पर का शोथ चाहे पुरुष को हो या स्त्रीको, अच्छा नहीं होता। नया और उपद्रव रहित शोथ साध्य होता है। कोखा, पेट, गला, शिर, छाती, और बस्ति का शोथ,तथा बहुत बड़ा, रूखा, और बालक, बूढ़ा, निर्बल आदमी का शोथ भी नहीं अच्छा होता ॥ १९—२० ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां शोथनिदानम् ।

## अथ वृद्धिनिदानम् ।

### अथ वृद्धिरोगस्य सम्प्राप्तिः ।

शोथत्वसामान्याच्छोथानन्तरं वृद्धिरभिधीयते। वृद्धेः सम्प्राप्तिमाह—

क्रुद्धोऽनूर्ध्वगतिर्वायुः शोथ-शूल-करश्चरन् ।
मुष्कौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः ॥ १ ॥
प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः ।
दोषास्र-मेदो-मूत्रान्त्रैः स वृद्धिः सप्तधा गदः ॥ २ ॥
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ।

( वा० नि० अ० ११ )

म०-क्रुद्धोऽनूर्ध्वगतिर्वायुरित्यादि । अनूर्ध्वगतिरधोगतिर्वायुः मुष्कौ प्राप्य चरन्=गच्छन्, वङ्क्षणतो=मेढ्रजङ्घासन्धेः सकाशात्; फलकोषाभिवाहिनीरिति फलं च कोषश्च फलकोषौ, अथवा फलयोः कोषौ तद्वहा धमनीश्च प्रपीड्य=संदूष्य, वृद्धिं करोति । फलकोषयोरिति द्विवचनमुपलक्षणं, तेनैककोषेऽपि दृश्यमाना वृद्धिः संगता। स वृद्धिरिति "क्तिच्क्तौ च संज्ञायाम्"—इत्यनेन क्तिजन्तो वृद्धिशब्दः पुंल्लिङ्गः, क्तिन्नन्तस्तु स्त्रीलिङ्गः। वृद्धिः कुरण्डोऽभिधीयते। संख्येयनिर्देशादेव संख्यायां लब्धायां सप्तधेति वचनं न्यूनाधिकसंख्यानिरासार्थं, तेन द्वन्द्वजादिवृद्धेराधिकाया निरासः; असम्भवस्तु तस्या व्याधिस्वभावात् मूत्रान्त्रवृद्ध्योर्वातवृद्ध्यन्तर्भावात् न्यूनसंख्यानिरासार्थमन-

योर्वातजत्वेऽपि निमित्त-चिकित्सा-भेदात् पृथगभिधानं, निमित्तभेदनिबन्धन एव व्याधिभेदः । यदुक्तम्–"दोष-दूष्य-संसर्गादायतनविशेषात् निमित्ततश्चैषां व्याधीनां भेदः" ( सु. सू. स्था. अ. २४ )—इति । अत आह–मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलमिति ॥ १ ॥ २ ॥–

भा० टी०—वात कुपित होकर नीचेकी तरफ जाकर वङ्क्षण=पट्टा में शोथ और शूल पैदा करता हुआ अण्ड धारण करने वाली नसोंको बिगाड़ता हुआ अण्डकोश को बढ़ा देता है । दोनों अण्डकोश बढ़ते हैं और एक भी, इसे वृद्धि रोग कहते हैं । यह रोग सातप्रकार का होताहै । १ वातज, २ पित्तज, ३ कफज, ४ मूत्रज, ५ अन्त्रज, ६ रक्तज और ७ मेदोज, । मूत्रज और अन्त्रज वृद्धि भी वात सेही होती है; परन्तु विशेष कारण और विशेष चिकित्सा होने से वातज वृद्धि से इन दोनोंकी गणना अलग की गई ॥ १—२ ॥

अथ वातजादिमूत्रजान्तवृद्धीनां क्रमेण लक्षणानि ।

वातजादीनां मूत्रजान्तानां वृद्धीनां क्रमेण लक्षणान्याह—

वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥ ३ ॥
पक्वोदुम्बरसंकाशः पित्ताद्दाहोष्मपाकवान् ।
कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक् ॥४॥
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः[1] ।
कफवन्मेदसा[2] वृद्धिर्मृदुस्तालफलोपमः ॥ ५ ॥
मूत्रधारणशीलस्य मूत्रजः[3] स तु गच्छतः ।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः ॥ ६ ॥
मूत्रकृच्छ्रमधः स्याच्च चालयन् फलकोषयोः ।

( वा० नि० अ० ११ )

म०—वातेत्यादि । अहेतुरुगिति अनिमित्ततो दाहादिरुक् । रक्तजे 'कृष्णस्फोटावृत इति' पित्तजवृद्धिलिङ्गादधिकं; तेन हेतु-लिङ्ग-चिकित्सा-भेदाद्रक्तजवृद्धिः पृथग्गण्यते । मेदोजे तालफलोपम इति पक्वतालफलमिव नीलवर्तुलः

१ रक्तजवृद्धिः = HoematOcele होमेटासिल. २ मेदोवृद्धिः = Elephantiasis Of Scrotum. एली फेन्टी एसिस आफ स्क्रोटम् । ३ मूत्रजवृद्धि = Hydrocele हाइड्रोसील ।

मूत्रजे मूत्रकृच्छ्रमिति मूत्रकृच्छ्रवत् वेदना । चालयन् फलकोषयोरिति फलकोषयोश्चालयन् चलो भवन्नितस्ततो गच्छन् सोऽधः स्यात् । चालयन्निति स्वार्थिको णिच् ॥ ३—६ ॥—

भा० टी०—प्रत्येक वृद्धिके अलग २ लक्षण—वातज वृद्धि हवाभरे गेंद के समान छूनेपर मालूम होतीहै । रुखापन मालूम होता है । और अकस्मात् पीडा हुआ करती है । पित्तज वृद्धि पके हुए गूलर के समान और अन्दर बाहर जलन तथा पाक से युक्त होती है । कफज वृद्धि—ठंडी ,भारी,चिकनी, खुजली दार, कड़ी और थोड़ी पीडा युक्त हुआ करती है । रक्तज वृद्धि के लक्षण पित्तज वृद्धि के समान होते हैं,किन्तु उसमें काले काले फफोले भी होते हैं, मेदोज वृद्धि के लक्षण कफज वृद्धि से मिलते हैं और मुलायम तथा पके तालके फलके समान नीली और गोल होतीहै । मूत्रज वृद्धि अधिक तर उन्हीं लोगों को होती है,जिन्हें पेशाब रोकने की बराबर आदत सी रहतीहै । मूत्रज वृद्धि चलने पर पानी से भरी मशक के समान हिलती है, मुलायम होती है और पीडा भी हुआ करती है । पेशाब करते समय पीडा होती है और पेशाब कम उतरता है । वायु दोनों अण्डों में इधर उधर घूमता हुआ नीचे की तरफ जाता रहता है॥३-६॥

## अथान्त्रवृद्धेर्लक्षणानि ।

( Hernia ) हर्निआ ।

अन्त्रवृद्धिमाह—

वातकोपिभिराहारैः शीततोयावगाहनैः ॥ ७ ॥
धारणेरणभाराध्वविषमाङ्गप्रवर्तनैः ।
क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ॥ ८ ॥
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्[1] ।
कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं[2] तदा ॥ ९ ॥
[3]उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स वायुः ।

---

१ तमन्त्रामिति शेषः ।
२ वायुद्वारा सकुचितान्त्रस्ये वङ्क्षणगत्वात् ।
३ एवम्भूतमन्त्रवृद्धिमुपेक्ष्यमाणस्याचिकित्सितपुरुषस्य सवायुराध्मानरुक्स्तम्भवतीमुष्कवृद्धिंकुर्यादित्यर्थः ।
"आध्मान मुदरे, रुक् मुष्कयोः, स्तम्भो गात्रे" इति भावमिश्रः ।

**प्रपीडितोऽन्तः स्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः॥१०॥**
**[1]अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ।**

( वा० नि० अ० ११ )

इति श्रीमाधवकर विरचिते माधवनिदाने वृद्धिनिदानं समाप्तम् ।

**म०—वातकोपिभिरित्यादि** । धारणं वेगस्योपास्थितस्य, ईरणमप्राप्तस्य । क्षोभणैः क्षुभितोऽन्यैरिति बलवद्विग्रहधनुराकर्षणादिभिः । क्षुद्रान्त्रावयवमिति बृहदन्त्रव्युदासार्थम् । विगुणीकृत्येति संकुचीकृत्य । द्विगुणीकृत्येति पाठान्तरे संकोचेन द्विगुणीकृत्य । स्वनिवेशात्=स्वस्थानात् । तदा वङ्क्षणसन्धिस्थः सन् वङ्क्षणसन्धौ ग्रन्थिरूपं साध्यं श्वयथुं करोति, तत्र ग्रन्थिरूपेण स्थित्वा कालान्तरेण फलकोषं गच्छतीति । तां मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीमुपेक्ष्यमाणस्य=अचिकित्सितपुरुषस्य । अत्र भोजः—"अन्त्रं द्विगुणमादाय जन्तोर्नयति वङ्क्षणम् । वङ्क्षणात्तद्रुजायुक्तं फलकोषं प्रपद्यते"—इति । प्रध्मापयन्निति=उच्छूनयन् । असाध्योऽयमिति कथम् ? यतोऽस्य चिकित्साऽभिहिता, नैवम्, अप्राप्तफलकोषायामयं चिकित्साविधिः । प्राप्तफलकोषा त्वसाध्या; याप्यायां वा तस्यां चिकित्साविधिः । यदुक्तं भोजे—"याप्यां तामन्त्रजां विदुः"—इति । ब्रध्ननिदानं तु तन्त्रान्तरे पठ्यते । तद्यथा—"अत्यभिष्यन्दिगुर्वन्नसेवनान्निचयं गतः । करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु ॥ ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्दिशेत्"—इति ॥ ७–१० ॥—

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां वृद्धिनिदानं समाप्तम् ।

**भा० टी०—वात कुपित करने वाला** आहार विहार, ठंडे जलमें हलकर नहाना, पाखाना पेशाव रोकना और न लगे रहने पर जवर्दस्ती कांख कांख कर निकालने की कोशिश करना, भारी बोझा ढोना, अधिक रास्ता चलना, ऊंचे खाले चढ़ना, उतरना, शक्तिसे अधिक काम करना ( घोड़े की सवारी अधिक करना ) इन सब कारणों से वात विगड जाताहै और यह छोटी आँतों के हिस्सों को वटोर कर उसकी जगह से नीचे की तरफ लाकर वङ्क्षण+पट्टामें गांठको तरह उन्हीं आँतों के द्वारा सूजन पैदा कर देता है । अर्थात् दोनों अण्डकोश जिस डोरी के द्वारा वाहर लटके रहते हैं, उस डोरी का एक सिरा ऊपर पेटमें भी रहता है । जिस रास्ते से वह डोरी पेटमें जाती है वायुद्वारा उस रास्ते के विगड़ जाने से छोटी आँत खर खर कर नीचेकी तरफ वंक्षण संधिमें उतर आतीहै और वहांइकट्ठी हो जातीहै, जिससे उस जगह गांठको तरह सूजन

---

[1] अयमन्त्रवृद्धिरसाध्यो वातवृद्धितुल्यलक्षणश्च भवतीत्यर्थः ।

मालूम होती है। यदि इस अन्त्रवृद्धि की तुरन्त चिकित्सा न की जाय तो वह आँत वायु द्वारा दोनों अण्डकोश में उतर जाती है, जिससे अण्डकोश फूल जाता है। पीड़ा करता है। उस सूजन को हाथसे दबाने पर आवाज करती हुई कोई चीज ऊपर जाती हुई मालूम होती है,और हाथ हटा लेने पर फिर आकर उस जगह को फुलाती हुई जान पड़ती है। जब तक आँत अण्डकोश में नहीं उतरती केवल वङ्क्षण तक उतरी रहती है तब तक उसके अच्छा होने की आशा रहती है मगर अण्डकोष में उतर जाने पर नहीं अच्छी होती। अण्ड कोश में कुपित वायु और आँतों के इकट्ठे हो जानेपर अन्तन्त्र वृद्धि रोग कहा जाता है और इसमें वातवृद्धि के सब लक्षण होते हैं॥ ७—१०॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां
रुग्विनिश्चयभाषाटीकायां वृद्धिनिदानम्।

## अथ गलगण्ड-गण्डमाला-ऽपची-ग्रन्थ्यर्बुदनिदानम्।

( Goitre, ) ग्वोइटर

### अथ गलगण्डरोगस्य निदानम्।

वृद्धियुक्तमुष्कसमानलिङ्गत्वात्तदनन्तरं गलगण्डनिदानम्। तस्य सामान्यलिङ्गमाह—

[1]निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले।
महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत्॥ १॥

म०—निबद्धः श्वयथुरित्यादि। निबद्धोऽनुबन्धवान् मुष्कवदण्डवत्। भोजेऽप्युक्तम्—"महान्तं शोथमल्पं वा हनु-मन्या-गलाश्रयम्। लम्बन्तं मुष्कवद्दृष्ट्वा गलगण्डं विनिर्दिशेत्—" इति॥ १॥

भा० टी०—गलगण्ड रोगका निदान—ठुड्डी, मन्या या गलेमे छोटा या बड़ा दृढ़ शोथ हो कर अण्डकोष की तरह लटक जाता है, उसे गलगण्ड कहते हैं॥ १॥

### अथ गलगण्डरोगस्य सम्प्राप्तिः।

तस्य संप्राप्तिमाह—

वातः कफश्चापि गले प्रदुष्टो मन्ये च संश्रित्य तथैव मेदः।
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः॥२॥
( सु० नि० अ० ११ )

---

१ निबद्धो दृढोऽचलो वेति भावमिश्रः।

म०—वात इत्यादि । वातकफमेदांसि पृथक् गलगण्डकारणानि, तेन त्रय एव गलगण्डाः, पैत्तिकस्तु न भवत्येव, व्याधिस्वभावात्; चातुर्थकज्वरवत् । चातुर्थके हि वचनम्,—"चातुर्थको दर्शयति प्रभावं द्विविधं ज्वरः । जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः"—(च. चि. स्था. अ. ३ ) इति । क्रमश' इत्यनेन शनैरेव वर्धनं दर्शयति । स्वलिङ्गैः समन्वितमिति 'निबद्धः श्वयथुः इत्यादिनोक्तगलगण्डलिङ्गैरन्वितम् ॥ २ ॥

भा० टी०—गलगण्ड की सम्प्राप्ति—वात, कफ और मेद बिगड़कर मन्या तथा गले में अपने २ लक्षणों से युक्त धीरे २ बढ़ने वाला अण्डकोषकी तरह लटकने वाला गण्ड=सूजन पैदा कर देते हैं, उसे गलगण्ड कहते हैं । यह पित्तज नहीं होता । सिर्फ वातज, कफज और मेदोज, तीनही प्रकार का होता है । यह इस रोगकी विशेषता है ॥ २ ॥

### अथ वातिकगलगण्डस्य लक्षणानि ।

वातजमाह—

**तोदान्वितः कृष्णसिरावनद्धः श्यावोऽरुणो वा पवनात्मकस्तु ।**
**पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात्कदाचित् ॥ ३ ॥**
**वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः ।**

( सु० नि० अ० ११ )

क०—तोदान्वित इत्यादि । चिरवृद्धिरिति विकारप्रभावात् वातजोऽपि चिरेण वर्धते । यदृच्छया पाकमियादिति [1]कारणाप्रतिनियमेन कदाचित् पाकं याति । कारणाप्रतिनियमश्च बाह्योऽभिप्रेतः, आभ्यन्तरस्तु पाककारणं पित्तं रक्तं च नियतमेव । कदाचिदिति न सर्वकालम् । "यदृच्छया चैव भवेत् कदाचित्—" इति पाठान्तरे 'पाक' इति शेषः ॥ ३ ॥—

भा० टी०—वातज गलगण्ड के लक्षण-वातज गण्डमें सुई चुभोने जैसी पीड़ा होती है । चारो तरफ काली २ नसें देखपडती हैं । चारो तरफ काला या लाल होता है । छूनेपर खरखराहट मालूम होती है । धीरे २ बढ़ता है । पकता नहीं । कभी २ बाहरी कारण—लेप आदि के करने परभी पक जाता है । मुह फीका रहता है, और तालु तथा गला भीतर से सूखता रहता है ॥ ३ ॥

---

१ कारणाप्रतिनियमेति—कारणस्याप्रतिनियमः प्रतिनियमविपरीतः । कारणञ्चात्र बाह्यं तच्च प्रलेपादि । तथाच प्रलेपादिकारणेष्यवर्तमाने पाकदर्शनम् । इति भावः ।

अथ कफजगलगण्डस्य लक्षणानि।

श्लेष्मजमाह—

स्थिरः सवर्णो गुरुरुग्रकण्डूः शीतो महांश्चापि कफात्मकस्तु ॥ ४ ॥
चिराभिवृद्धिं भजते चिराद्वा प्रपच्यते मन्दरुजः कदाचित् ।
माधुर्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालु-गल प्रलेपः ॥ ५ ॥

( सु० नि० अ० ११ )

म०—स्थिर इत्यादि । सवर्ण इति प्रकृतिसमवर्णः ॥ ४ ॥ ५ ॥

भा० टी०—कफज गलगण्ड के लक्षण—कफज गलगण्ड का रंग शरीर के समान होता है—शरीर जैसा गोरा या काला एक जगह बना रहता है । बोझदार होता है। खुजली आती है। ठंडा होता है। बड़ा होता है। धीरे २ देर में बढ़ता है। देरमें पकता है, और पीड़ा कम होती है। नहीं भी पकता। मुह का जायका मीठा रहता है और तालु गला कफसे लिपा हुआ मालूम होता है ॥ ४-५ ॥

अथ मेदोजगलगण्डस्य लक्षणानि।

मेदोजमाह—

स्निग्धो गुरुः पाण्डुरनिष्टगन्धो मेदोभवः कण्डुयुतोऽल्परुक्च ।
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः ॥ ६ ॥
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेऽनुशब्दं कुरुते च नित्यम् ।

( सु० नि० अ० ११ )

म०—स्निग्ध इत्यादि । देहानुरूपक्षयवृद्धियुक्त इति देहक्षये क्षयं, देहवृद्धौ च वृद्धिं यातीत्यर्थः । गलेऽनुशब्दमिति अनुनादं करोति । "गले तु शब्दम्"—इति पाठान्तरं सुगमम् ॥ ६ ॥—

भा० टी०—मेदोज गलगण्ड चिकना, गुरु, पाण्डुवर्ण, बदबूदार, खुजली लाने वाला और कम पीड़ा वाला होता है। उसका मूल कम होता है। और तूंबाकी तरह लट

का रहता है। शरीर कृश होनेपर वह छोटा हो जाता है और शरीर के मोटा होने पर वह भी बड़ा होता है। उस रोगी का मुह भीतर से चिकना मालूम होता है(जैसे घी या तेल अधिक खाने पर मालूम होता है) गला में हर वख्त धीमी २ आवाज होती हुई जान पड़ती है ॥ ६ ॥

### अथ गलगण्डस्यासाध्यलक्षणानि।

असाध्यतामाह—

**कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्तम् ॥ ७ ॥**
**क्षीणं च वैद्यो गलगण्डयुक्तं भिन्नस्वरं चापि विवर्जयेच्च ।**

( सु० नि० अ० ११ )

कृच्छ्राच्छ्वसन्तमित्यादि । कृच्छ्राच्छ्वसन्तं=दुःखेन श्वासविमोक्षकारिणम्। भिन्नस्वरं=स्वरभेदवन्तम् ॥ ७ ॥

भा० टी०—असाध्यलक्षण—सांस लेने में तकलीफ हो, शरीर सब ढीला हो जाय, एक वर्ष का पुराना, तथा अरुचि, स्वरभेद और क्षीणता पैदा कर देने वाला गलगण्ड असाध्य होता है। वैद्यको उसकी चिकित्सा न करनी चाहिए॥ ७ ॥

### अथ गण्डमालारोगस्य लक्षणानि ।

( Scrofula ) स्क्रोफ्यूला

स्थानतुल्यतया गण्डमालामिहैवाह—

**कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु ॥ ८ ॥**
**मेदःकफाभ्यां चिरमन्दपाकैः स्याद् गण्डमाला बहुभिश्च गण्डैः ।**

( सु० नि० अ० ११ )

म०—कर्कन्धुकोलामलकप्रमाणैरित्यादि । कर्कन्धुः=शृगालकोलिः, कोलं= बृहद्बदरम् । मेदःकफाभ्यामिति मेदो=दूष्यं, कफो=दोषोऽत्रारम्भकः, मेदः- कफौ प्राधान्येनोक्तौ; तेन वातपित्तसंवन्धोऽप्यत्र द्रष्टव्यः । यदाह भोजः- "वात-पित्त-कफा वृद्धा मेदश्चापि समाचितम् । जङ्घयोः कण्डराः प्राप्य मत्स्याण्डसदृशान् बहून् ॥ कुर्वन्ति ग्रथितांस्तेभ्यः पुनः प्रकुपितोऽनिलः । तान् दोषानूर्ध्वगो वक्षः-कक्ष-मन्या-गलाश्रितः ॥ नानाप्रकारान् कुरुते ग्रन्थीन् सा त्वपची मता । तां तु मालाकृतिं विद्यात्कण्ठहृद्धनुसन्धिषु ॥ गण्डमालां

विजानीयादपचीतुल्यलक्षणाम् ।"-इति । स्याद्गण्डमालेति मालातुल्यगण्डयोगात् गण्डमाला । गलमात्र एव गण्डमाला चरके पठिता । यथा-"मेदःकफाच्छोणितसंचयोत्थो गलस्य मध्ये गलगण्ड एकः । स्याद्गण्डमाला बहुभिश्च गण्डैः" ( च. चि.स्था, अ. १२ ) इति ॥ ८ ॥

गण्डमाला का लक्षण—वात, पित्त, खासकर कफ और मेदके कोप से कांख, कन्धा, मन्या, गला या वङ्क्षणमें छोटी या बड़ी वेर, अथवा आँवला की तरह बहुत से गण्ड—छोटी २ गाठें होजाती हैं, इतनी अधिक होती हैं कि माला की तरह मालूम देती हैं। इसे गण्डमाला कहते हैं। ये देर में पकती हैं और कम पकती हैं ॥ ८ ॥

## अथापचीरोगस्य लक्षणम् ।

गण्डमालातुल्यतया अपचीमाह—

ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये॥९॥
कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति तज्ज्ञाः ।
साध्याःस्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्याः ॥१०॥

म०—ते ग्रन्थय इत्यादि । ते इति गण्डमालारम्भकदोषदूष्यकृता ये ग्रन्थयस्त एवेत्यर्थः । कालानुबन्धं चिरमिति चिरकालानुबन्धम् । सैवापचीति तादृशी=अमालारूपा अपची भण्यते । सैवापचीति इति शब्देनाभिहितत्वात् प्रवदन्तीति क्रियायोगेऽपि न द्वितीया । अपचीनिरुक्तिश्चापरापरोपचीयमानतया । अत एव "चयप्रकर्षादपचीं वदन्ति"-( सु. नि. स्था. अ. ११ ) इति सुश्रुतः । चयप्रकर्षश्चापरापरभवनेनैव, साधुत्वं च नैरुक्त्येन विधिना । यदुक्तम्—"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥"-इति । अत एवोक्तम्-नश्यन्ति भवन्ति चान्य इति । साध्याः स्मृता इति छेदः । पीनसादिभिरुपद्रवैरसाध्याः । अयं तु ग्रन्थिश्चरके गण्डमालायामस्ति; संग्रहकारेण तु गण्डमालया सह तुल्यत्वादपच्या अपच्यामेव ग्रन्थिः पठितः ॥ ९ ॥ १० ॥

भा० टी०—अपची के लक्षण—वेही गण्डमाला वाली गांठे कोई पक कर फूट कर और बहकर अच्छी हो जाती हैं, और फिर दूसरी पैदा होजाती हैं, इस प्रकार बहुत दिनों तक वे बनी रहती हैं बिल्कुल अच्छी नहीं होती हैं चिकित्सक लोग उसे

अपची कहते हैं यह अपची रोग साध्यहोता है, मगर पीनस, श्वास, कास, ज्वर, और क्षय इन रोगों के प्रकट हो जाने पर असाध्य हो जाती हैं ॥ ९-१० ॥

## अथ ग्रन्थिरोगस्य निदानम् ।

( Tumour ) ट्यूमर ।

अनन्तरमपचीगुडकतुल्यतया ग्रन्थिमाह—

वातादयो मांसमसृक् प्रदुष्टाः संदूष्य मेदश्च तथा सिराश्च ।
वृत्तोन्नतं विग्रथितं च शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ ११ ॥

( सु० नि० अ० ११ )

म०—वातादय इत्यादि । वात-पित्त-कफाः प्रत्येकं दुष्टाः, दुष्टिश्चात्र वृद्धिरेव न क्षयः; क्षीणानां विकारकरणाक्षमत्वात् । यद्येवं तर्हि कथं वातादिक्षये मन्दचेष्टादयः ? उच्यते, तत्क्षये विरोधि-दोषकोपात्, यथा—मधुरस्निग्धादिभिर्वाते-क्षीणे तत्समानत्वात् श्लेष्मा प्रकुप्यति वचनं हि,—"वृद्धिश्चापि विरोधिनाम्"—इति । संदूष्य मेदश्च मांसमसृक् सिराश्चेत्यनेन मेदोजः कफसंबन्धाद्यो भवति तथा सिराजोऽपि वायुना सिरादुष्ट्या यो जन्यते स उच्यते । एवं पञ्च ग्रन्थयः । तथेति संदूष्य । मांसमसृगिति अत्रासृजः क्रमोल्लङ्घनेन पाठोऽप्राधान्यप्रतिपादनार्थः; विसर्पे तु शोणितमेव प्रधानम् । अत एव क्वचित् चकारमप्राधान्यसूचकं निवेश्य 'असृक् च' इति पाठः । चरके तु ग्रन्थिः वातकफज एव ग्रन्थिविसर्पशब्देनोक्तः । वृत्तोन्नतमिति वृत्तं वर्तुलम् । उन्नतम्=उच्छूनम् । विग्रथितं कठिनं, [1]कक्खटं वा; विग्रथितत्वादेव ग्रन्थिरिति संज्ञा ॥ ११ ॥

भा० टी०—वातादिक दोष बढ़कर और मेद तथा सिरा ख़राब होकर मांस, खून, को खराब कर गोल २ गँठीला शोथ पैदाकर देते हैं इसलिए-गंठीला शोथ होनेसे उसे ग्रन्थिरोग कहते हैं ॥ ११ ॥

## अथ वातजग्रन्थेर्लक्षणानि ।

अनिलग्रन्थिमाह—

आयम्यते वृश्च्यति तुद्यते च प्रत्यस्यते मथ्यति भिद्यते च ।
कृष्णो मृदुर्बस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ १२ ॥

( सु० नि० अ० ११ )

---

१ कक्खटं कठिनम् ।

म०—आयम्यत इत्यादि । आयम्यते=आकृष्य दीर्घीक्रियते । वृश्च्यतीति छिनत्तीव, अत्र दिवादेराकृतिगणत्वात् (१) श्यन्प्रत्ययः । प्रत्यस्यते=क्षिप्यते, मथ्यति=आलोडयतीव, अत्रापि पूर्ववत् समाधानम् । भिद्यते=विदीर्यते इव । अस्रं=स्रावम् ॥ १२ ॥

भा० टी०—वात की ग्रन्थि में अनेक तरह की पीडायें होती हैं-जैसे खींचकर लम्बा किया जाता है। काटता हो,सुई चुभाई जाती हो,फेंका जाता हो,मथा जाता हो, चीरा जाता हो, ग्रन्थि काली, मुलायम और वस्ति की तरह तनी हुई होती है। तथा फूटने पर उससे स्वच्छ रक्त बहता है ॥१२॥

## अथ पित्तजग्रन्थेर्लक्षणानि ।

पित्तग्रन्थिमाह—

दन्दह्यते धूप्यति वृश्च्यते च पापच्यते प्रज्वलतीव चापि ।
रक्तः सपीतोऽप्यथवाऽपि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥१३॥

( सु० नि१ अ० ११ )

म०—दन्दह्यत इत्यादि । दन्दह्यते=अत्यर्थं दह्यते अग्निनेव । पापच्यते=भृशं पच्यत इव क्षारेण, किंवा उत्क्वथ्यत इव । प्रज्वलतीव=ज्वलन् भस्मी भवतीव॥१३॥

भा० टी०—पित्तकी ग्रन्थिमें सारे शरीर में बहुतही कड़ी जलन रहती है,भीतर से उसमें गरमी जान पड़ती है। चूसने तथा पकने और आगसे जलने की तरह पीड़ा होती है। ग्रन्थि रक्तवर्ण या पीतवर्ण होती है। फूटने पर उससे बहुत गरम खून निकलता है ॥ १३ ॥

## अथ कफजग्रन्थेर्लक्षणानि ।

कफग्रन्थिमाह—

शीतोऽविवर्णोऽल्परुजोऽतिकण्डुः पाषाणवत् संहननोपपन्नः ।
चिराभिवृद्धश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥१४॥

( सु० नि० अ० ११ )

---

( १ ) अत्र "प्रत्ययित पुरुषप्रणीता अन्येऽपि धातवस्तत्र द्रष्टव्याःतेन वृश्च्यतीत्यस्य साध्यत्वम् । आत्मनेपदानित्यत्वाद्वा प्रत्यस्यते" इत्यधिकः पाठः क्वचित्पुस्तके दृश्यते ।

म०—शीत इत्यादि । अविवर्णः=प्रकृतिवर्णः, ईषद्विवर्ण इति कश्चित् पाषाणवत् संहननोपपन्न इति पाषाणवत् कठिन इत्यर्थः, किंवा पाषाणवत् भवति। संहननोपपन्न इति संहतान्वितो महानित्यर्थः ॥ १४ ॥

भा० टी०—कफकी ग्रन्थि रंगमें शरीर की तरह होती है। पीड़ा कम होती है पर खुजली अधिक,पत्थर के समान कड़ी होती है, धीरे २ बढ़ती है और फूटने पर उससे सफेद से गाढा २ मवाद बहता है ॥१४॥

## अथ मेदोजग्रन्थेर्लक्षणानि ।

मेदोजग्रन्थिमाह—

शरीर-वृद्धि-क्षय-वृद्धि-हानिः स्निग्धो महान् कण्डुयुतोऽरुजश्च ।
मेदः कृतो गच्छति चात्र भिन्ने पिण्याक-सर्पिः-प्रतिमं तु मेदः ॥१५॥
( सु० नि० अ० ११ )

म०—शरीरेत्यादि । शरीरवृद्धिक्षयवृद्धिहानिरिति शरीरवृद्धिक्षयाभ्यां यथाक्रमं वृद्धिहानी यस्य स तथा । मेदोजेष्वेवं युक्तिः धातुस्वभावात् चिरस्थायित्वाद्वा । गच्छति चात्र भिन्ने पिण्याकसर्पिः प्रतिमं तु मेद इति भिन्ने सति पिण्याकस्तिलकल्कः, सर्पिरत्र स्त्यानं, तत्सदृशं मेदः स्रवति। भोजेन तु मेदोग्रन्थेः संप्राप्तिः पठ्यते । यथा,—"मेदो वायुर्यदा मांसे निक्षिपेदथवा त्वचि । तत्र मेदोभवग्रन्थिः श्यावो भवति पाण्डुरः॥ कृशः कृशे महान् स्थूले ग्रन्थिर्भिन्नश्च पीडितः। तिलकल्कनिभः स्रावो घृतवच्चास्य जायते ॥"—इति ॥ १५ ॥

भा० टी०—मेदोज ग्रन्थि के लक्षण—मेदोजग्रन्थि मोटे आदमी के बड़ी होती है और कृश के छोटी, चिकनी और स्वभाव से बडी, हुआ करती है। खुजली आती है। पीड़ा कम होती है। फूट जाने पर भरी जमा घी की तरह मेद निकलता है। वायु द्वारा मेद के मांस अथवा त्वचा में चले जाने पर होती है ॥ १५ ॥

## अथ सिराजग्रन्थेर्लक्षणानि ।

सिराजग्रन्थेः संप्राप्तिमाह—

व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुस्तु सिराप्रतानम् ।
संकुच्य संपिण्ड्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम् ॥१६॥
ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च ।
स चारुजश्चाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः ॥१७॥
( सु० नि० अ० ११ )

म०—व्यायामजातैरित्यादि। संकुच्येति अन्तर्भावितोऽत्र ण्यर्थः, तेन संकोच्येत्यर्थः। संपिण्ड्येति संहतीकृत्य। उन्नतमाशु वृत्तमिति अस्य सामान्यलक्षणेनैव सिद्धे पुनस्तदुक्तिरतिशयार्थम्। स च सिराजो ग्रन्थिर्यदि सरुजश्चलश्च स्यात्तदा कृच्छ्रसाध्यः। चारुजश्चापीत्यादिना न साध्यः। स चेति चकारेणारुजत्वादिधर्मयोगादपरेऽपि ग्रन्थयोऽसाध्या इति सूचयति। यदुक्तं भोजे,—"पञ्चैतानरुजो ग्रन्थीन् मर्मजानचलांस्त्यजेत्। कपोल-गल-मन्यासु दुश्चिकित्स्याश्च सन्धिषु॥" इति। अन्ये तु मांसासृग्भ्यां षष्ठं ग्रन्थिं वदन्त एवं पठन्ति,—"मांसास्रजं चार्बुदलक्षणेन तुल्यं हि दृष्टं त्वथ लक्षणैः"—इति। किंत्वनार्षोऽयं पाठः, भोजादिसमानतन्त्रेष्वदृष्टत्वात्॥ १६॥ १७॥

भा० टी०—निर्बल आदमी के अनेक प्रकार के परिश्रम करने से वायु कुपित होकर सिराजालको सिकोड़ कर, इकट्ठीकर और सुखाकर उसीके द्वारा ऊंची और गोल ग्रन्थि जल्दीपैदा कर देता है। उसे सिराज ग्रन्थि कहते हैं। यदि वह एक जगहसे दूसरी जगह खसकती और पीड़ा करतीहै तो कृच्छ्र साध्य होती है, अचल होनेपर भी यदि उसमें पीडा होती है तो, और बड़ी तथा मर्म स्थानों में पैदा हुई असाध्य होती है॥१६—१७।

## अथार्बुदरोगस्य सम्प्राप्तिः।

( Malignant Growth ) मैलिगनेन्टग्रोथ

मांसशोणितदूष्यसाधर्म्यादर्बुदाभिधानम्। तस्य संप्राप्तिमाह—

**गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक्प्रदूष्य।**
**वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम्॥१८॥**
**कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति।**
**वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा वा॥१९॥**
**तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि तदा भवन्ति।**

( सु० नि० अ० ११ )

गात्रप्रदेशे क्वचिदित्यादि। कचिदेवेत्यनेनानियतदेशे, न पुनरपचीवन्नियतदेशे। 'संमूर्च्छिता' इति पाठान्तरे संमूर्च्छिता वृद्धाः, दूष्यसंसृष्टा इति कार्तिकः। मांसमसृक् प्रदूष्येति सर्वार्बुदसाधारणं दूष्यं, मांसार्बुद-मेदोर्बुदयोस्तु विशेषेण मांसदुष्टिः; मांसार्बुद-मेदोऽर्बुदयोरपि तद्दूषको दोषोऽस्ति, तेन तत्रापि दोषकर्तृतया[1] संप्राप्तिरियं भवति। मांसोच्छ्रयमिति मांसोच्छ्रयतया

( १ ) मांसमेदोदूषकदकोषकर्तृतयेत्यर्थः।

प्रतीयमानम् । मेदोजेऽपि मांसमुद्गतं भवति । अत्यगाधमिति दूरानुप्रविष्टम्, अत एवानल्पमूलमित्युक्तम् । वातादिभिस्तदर्बुदं जायते=भवति, तेन षडर्बुदानि भवन्ति । ग्रन्थेः समानानीति वात-पित्त-कफ-मेदो-ग्रन्थिभिर्वात-पित्त-कफ-मेदोऽर्बुदानां लक्षणानि समानानि, शोणितज-मांसजयोस्तु लक्षणं पृथक् वक्ष्यति ॥ १८ ॥ १९ ॥

भा० टी०—अर्बुद रोग की संप्राप्ति—तीनों दोष कुपित होकर मांस और रक्तको खराब कर गोल, स्थिर, कम पीड़ा वाला, बड़ा, गहिरी जड़ वाला, धीरे २ बढ़ने वाला और न पकने वाला मांसको ऊँचाई कर देता है। इसका शरीर में कहीं नियत स्थान नहीं होता, शरीर भर में किसी जगह पैदा हो जाता है,उसे शास्त्रज्ञ लोग अर्बुद कहते हैं। यह वात, पित्त, कफ, रक्त, मांस, मेद, इन कारणों से छः प्रकार का होताहै,परन्तु मांस और रक्त ये दोनों सभी अर्बुदमें खराब रहते हैं। इनमें वातज, पित्तज, कफज, और मेदोज अर्बुद का लक्षण का वात पित्त कफ मेद ग्रन्थि के समान होता है, और रक्तज, मांसज अर्बुद का लक्षण भिन्न होता है, जो आगे लिखे जाँयगे ॥ १८ ॥ २० ॥

## अथ रक्तार्बुदस्य लक्षणानि ।

रक्तार्बुदमाह—

दोषः प्रदुष्टो रुधिरं सिराश्च संकुच्य संपिण्ड्यततस्त्वपाकम् ॥ २० ॥
सास्त्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धम् ।
करोत्यजस्रं रुधिरप्रवृत्तिमसाध्यमेतद्रुधिरात्मकं तु ॥ २१ ॥
रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्बुदपीडितस्तु ।

( सु० नि० अ० ११ )

म०—दोषः प्रदुष्ट इत्यादि । संकुच्यंति अन्तर्भावितोऽत्र ण्यर्थः । अपाकमीषत्पाकं, तेन सास्त्रावमित्युपपन्नं भवति । दोष उन्नह्यति=उच्छ्रितो भवति । सास्त्रावमीषत्स्रावम् । मांसपिण्डमाशुवृद्धं शीघ्रवर्धनं, मांसाङ्कुरैराचितं करोति, तथा अजस्रं रुधिरप्रवृत्तिमपि करोति; रुधिरं चात्राधिष्ठानभूतं सिरागतं, न तु पाकात्, ईषदेव स्रावस्य क्लेदरूपस्योक्तत्वात् । किंवा उन्नह्यतीत्यन्तर्भावितण्यर्थः, तेन मांसपिण्डमुन्नाहयति=उद्गतं करोति । 'दोषाः प्रदुष्टा' इति पाठपक्षे 'सास्त्रावमुन्नह्य हि' इति पाठः । उन्नह्य=उन्नाह्य, अन्तर्भावितण्यर्थत्वात् । हि पादपूरणे ॥ २० ॥ २१ ॥

१ संपिण्ड्य संहतं कृत्वा ।

भा० टी०--रक्तार्बुदके लक्षण--दोष कुपित होकर रक्त और सिरा को सिकोड़ इकट्ठा कर देता है, और आप भी बढ़ा रहता है बाद, अनेक मस्सों से घिरा हुआ मांसपिण्ड बहुत जल्दी पैदा हो जाता है, यह थोड़ासा पकता है,और उससे हर समय खून बहता रहता है। अधिक खून बहने से अनेक रोग पैदा हो जाते हैं, और रोगी का शरीर पीला पड़ जाता है ॥ २१-२२ ॥

अथ मांसार्बुदस्य सम्प्राप्तिः ।

( Myoma ) मायोमा ।

मांसजन्यसंप्राप्तिमाह—

**मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं जनयेद्धि शोथम् ॥ २२ ॥**
**अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् ।**
**प्रदुष्टमांसस्य नरस्य गाढमेतद्भवेन्मांसपरायणस्य ॥ २३ ॥**
**मांसार्बुदं त्वेतदसाध्यमुक्तम्,—**

( सु० नि० अ० ११ )

म०—मुष्टिप्रहारादिभिरित्यादि । अश्मोपमं=पाषाणवत् कठिनम् । अप्रचाल्यं=स्थिरम् । यद्यपि रक्तमांसार्बुदयो रक्तमांसयोर्हेतुत्वेनोक्तिस्तथाऽपि रक्तजे पित्तं, मांसजे वायुरारम्भकः, [1]एवमपि ताभ्यां घृतदुग्धन्यायेन व्यपदेशः । मांसपरायणस्य=मांसाशनशीलस्य । तस्य चातिमात्रं मांसवृद्धिः, "मांसं मांसेन वर्धते" इत्यभिधानात् ॥ २२—२३ ॥

भा० टी०--मांसार्बुदके लक्षण--मुक्का, लाठी वगरह से शरीर पर चोट पहुँचने से उतनी जगह का मांस खराब होकर सूजन रूपमें हो जाता है। वह सूजन पीड़ा विहीन, चिकनी, शरीर के रंगकी, न पकने वाली और पत्थर की तरह कड़ी स्थिर होती है। ऐसे सूजन को मांसार्बुद कहते हैं। इसमें दोष वायु रहता है। यह असाध्य होता है। इसकी जड़ नहीं जाती। मांसभोजियों को यह रोग अधिक हुआ करता है ॥ २३ ॥

---

१ एवमपीति—एवं रक्तमांसजातयोरर्बुदयोः पित्तरक्तारम्भकत्वेऽपि ताभ्यां रक्तमांसाभ्यां व्यपदेशो व्यवहारो रक्तार्बुदं मांसार्बुदमिति । यथा घृतदुग्धादौ पार्थिवत्वेऽपि तत्र जलसम्बन्धिनं स्नेहमादाय स्निग्धत्वव्यपदेश इति भावः ।

### अथार्बुदरोगस्य साध्यासाध्यविचारः ।

साध्येष्वप्यसाध्यप्रकारानाह—

साध्येष्वपीमानि तु वर्जयेच्च ।
संप्रस्रुतं मर्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम् ॥२४॥

( सु० नि० अ० ११ )

म०—साध्येष्वपीत्यादि । संप्रस्रुतं=स्रावयुक्तं,स्रावश्चात्रापाकित्वेऽपि त्वगवदरणात् मनागवगन्तव्यः । स्रोतःसु=नासादिषु । अचाल्यं=स्थिरम् ॥ २४ ॥

भा० टी०—जो अर्बुद साध्य बतलाये गये हैं वे भी यदि बहुत हों, मर्मस्थानमें पैदा हों, स्रोतोंका नाक, मुँह आँख के आस-पास पैदा हों और जो अचाल्य—कड़े हों तो वे अच्छे नहीं होते ॥ २४ ॥

### अथ अध्यर्बुदरोगस्य लक्षणम् ।

अध्यर्बुदमाह—

यज्जायतेऽन्यत् खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ।
यद्द्वन्द्वजातं युगपत् क्रमाद् वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥२५॥

( सु० नि० अ० ११ )

म०—यज्जायत इत्यादिना । अधिकमर्बुदमध्यर्बुदम्, [1]एतद्द्विरर्बुदमेव, यद् द्वन्द्वजातं युगपत् क्रमाद्वेति द्वन्द्वजातं युग्मेन जातं, युगपदेकदा क्रमेण वा । तद् द्विरर्बुदं न साध्यम् । तथाच भोजः—"अर्बुदे त्वर्बुदं जातं द्वन्द्वजं चानुजं च यत् । तद् द्विरर्बुदमिति ज्ञेयं तच्चासाध्यं विनिर्दिशेत् ॥"—इति ॥ २५ ॥

भा० टी०—एक अर्बुद हो जाने पर दूसरा अर्बुद पैदा हो जाय तो उसे अध्यर्बुद या द्विरर्बुद कहते हैं, द्विरर्बुद, चाहे एक साथ पैदा हो या एक के बाद दूसरा-क्रम से पैदा हो, असाध्य होता है । एक अर्बुद के ऊपर दूसरा अर्बुद हो तो अध्यर्बुद और अलग २ एक साथ या आगे पीछे पैदा हुआ दो अर्बुद द्विरर्बुद कहलाता है ॥ २५ ॥

---

१ पूर्वजातार्बुदस्योपरिजातमर्बुदमध्यर्बुदम्--अर्बुदाधिकरणकार्बुदमध्यार्बुदमित्यर्थः । पृथक् युग्मेनैकदा क्रमेण वा जातमर्बुदं द्विरर्बुदमित्यनयोस्तात्त्विको भेदः ।

## अथार्बुदस्यापाके कारणानि ।

अर्बुदानां पाकाभावे हेतुमाह—

**न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु ।**
**दोषास्थिरत्वाद् ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥२६॥**

( सु० नि० अ० ११ )

इति श्रीमाधवकरविरचिते माधवनिदाने गलगण्ड-गण्डमाला-पची-ग्रन्थ्यर्बुद-निदानं समाप्तम् ।

म०—**न पाकमायान्तीत्यादि** । सर्वार्बुदानि पित्तरक्तजान्यपि न पाकमायान्ति, कुत इत्यत आह—कफाधिकत्वात् मेदोबहुत्वाच्च । ननु, अपच्यामपि विशेषतः कफमेदसी अधिके, अथ च तस्याः पाकोऽस्त्येव, इत्यत आह—दोषस्थिरत्वादिति ।—अपच्यां कालान्तरेण हि रक्तपित्तमधिकं पाकमारभते, तच्चेह दोषस्थिरत्वात् सदा सदृशदोषत्वात् ग्रथितत्वाच्च न पाकारम्भकम् । अन्ये तु दोषास्थिरत्वादिति दोषोच्छ्रायरूपशोथकाठिन्यादित्याहुः; तदप्रयोजनकम्, अन्यत्र दोषोच्छ्रायशोथकाठिन्येऽपि पाकदर्शनात् । अथ कुतो यथोक्तहेतुसंपदित्याह—निसर्गतस्त्विति ।—निसर्गतो व्याधिस्वभावात् । भोजेऽप्युक्तम्,—" न पच्यते स्थिरत्वाच्च ग्रथितत्वात् स्वभावतः"—इति ॥ २६ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां गलगण्डादिनिदानं समाप्तम् ।

भा० टी०—सब अर्बुद कफ के और विशेष कर मेद के अधिक होनेसे, हर समय इन्हीं दोनों कफ मेदके बराबर रहनेसे, मेठो और गले होनेसे नहीं पकते. और खासकर इस रोगका यह स्वभाव ही होता है कि पकता नहीं क्योंकि इन कारणों के रहते हुए भी अन्य शोथ पक जाते हैं ॥२६॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चयभाषाटीकायां गण्डमालादिनिदानम् ।

## अथ श्लीपदनिदानम् ।

( Elephantiasis ) एलीफेन्टी एसिस

### अथ श्लीपदरोगस्य सम्प्राप्तिः ।

उत्सेधसाधर्म्यादर्बुदेन सह कफसंबन्धाव्यभिचारसाम्याच्चाथ श्लीपदनिदानम् । तस्य संप्राप्तिमाह—

**यः सज्वरो वङ्क्षणजो भृशार्तिः शोथो नृणां पादगतः क्रमेण ।**
**तच्छ्लीपदं स्यात् कर-कर्ण-नेत्र-शिश्नौष्ठ-नासास्वपि केचिदाहुः ॥१॥**

म०-य इत्यादि । वङ्क्षणावस्थानमेवास्य पूर्वरूपम् । क्रमेणेति शनैः शनैः। तच्छ्लीपदं स्यादित्यनेन निरुपाधिरेवेयं संज्ञेति दर्शयति, अन्ये शिलावत् पदं श्लीपदमिति वदन्ति, नैरुक्त्येन च विधिना साधुत्वम् । करकर्णादिगतश्लीपदानां यथोक्तसंप्राप्त्यभावात् केचिदाहुरिति परमतेनोक्तिः ॥ १ ॥

भा०टी०--श्लीपद की सम्प्राप्ति--वङ्क्षण(पट्टामें)पहले एक सूजन होती है और साथ ही ज्वरभी होता है। सूजन में पीड़ा बहुत होती है, फिर वही सूजन धीरे २ नीचे पर तक पहुँच जाती है,उसे श्लीपद रोग कहते हैं, इस के होने से पैर बहुत बड़ा और भीतर से रोगीको बोझदार मालूम होता है। किसी २ आचार्यों का मत है कि यह श्लोपद हाथ, कान, नेत्र, शिश्न, ओष्ठ और नाक में भी होता है। परन्तु इन स्थानों में श्लीपद की ऊपर कही हुई सम्प्राप्ति नहीं घटती। हिन्दीमें इसे"हाथीपाव"कहतेहैं॥१॥

( मेदो मांसाश्रयं शोथं पादयोः श्लीपदं भवेत् ।
स्वालिङ्गदर्शिभिर्दोषैस्त्रिधा स्यात्तु कफोत्तरम् ॥ )

अथ वातजश्लीपदस्य लक्षणम् ।

वातजं कृष्णरूक्षं च स्फुटितं तीव्रवेदनम् ।
अनिमित्तरुजं तस्य बहुशो ज्वर एव च ॥ २ ॥

भा० टी०-वातज श्लीपद के लक्षण-वातज श्लोपद काला,रूखा होता है, ऊपर की त्वचा कुछ फट जाती है, पीड़ा बहुत होती है और कभी कम भी हो जाती है। बार २ ज्वर होता रहता है ॥ २ ॥

अथ पित्तजश्लीपदस्य लक्षणम् ।

पित्तजं पीतसंकाशं दाह-ज्वर-युतं मृदु ।

अथ कफजश्लीपदस्य लक्षणम् ।

श्लैष्मिकं स्निग्धवर्णं च श्वेतं पाण्डु गुरु स्थिरम् ॥ ३ ॥

भा० टी०—पित्तज श्लीपद पीला और दाह ज्वर युक्त होता है। कफज श्लीपद चिकना, सफेद और पाण्डु वर्णका तथा भारी और स्थिर होता है ॥ ३ ॥

अथैषामसाध्यत्वम् ।

एषामसाध्यतामाह—

वल्मीकमिव संजातं कण्टकैरुपचीयते ।
अब्दात्मकं महत्तच्च वर्जनीयं विशेषतः ॥ ४ ॥

म०—वल्मीकमिवेत्यादि । संजातं प्रवृद्धं सत् वल्मीकवद्बहुशिखराकारं ग्रन्थिभिरुपचितं यद्भवति तदसाध्यम् । अन्ये तु पुनरमुं ग्रन्थिं कफजलक्षणत्वेन वर्णयन्ति, तन्न मनो धिनोति, सुश्रुते वल्मीकवज्जातस्यासाध्यत्वेनाभिधानात् । तद्यथा,—"तत्र संवत्सरातीतमतिमहद्वल्मीकमिव संजातं संप्रस्नुतमिति वर्जनीयानि भवन्ति" ( सु. नि. स्था. अ. १२ )—इति । अब्दात्मकमित्यादि ।—अब्दात्मकं= संवत्सरातीतम्, अब्दमेकमिति पाठे तु 'अतिक्रान्तम्' इति शेषः । महदिति अत्यन्त-मुच्छूनम् । वर्जनीयं विशेषत इति प्रत्याख्येयम् ॥ ४ ॥

भा०टी०—असाध्य लक्षण-जिसे श्लीपदमें बाँबी के समान अनेक शिखराकार गाँठें हो जाती हैं, एक वर्ष का पुराना और बहुत भारी सूजन जिसमें होती है वह नहीं अच्छा होता । उसकी चिकित्सा करना फ़जूल है ॥ ४ ॥

## अथ श्लीपदेषु कफस्य प्राधान्यम् ।

श्लीपदेषु कफस्याव्यभिचारेण प्राधान्यमाह—

त्रीण्यप्येतानि जानीयात श्लीपदानि कफोच्छ्रयात् ।
गुरुत्वं च महत्त्वं च यस्मान्नास्ति कफं विना ॥ ५ ॥

म०—त्रीण्यप्येतानीत्यादि । ननु, यद्यव्यभिचारी सर्वत्र कफः कथं तर्हि एकदोपजत्वव्यपदेशः, सर्वस्य द्विदोपजत्वप्रसङ्गात् ? उच्यते, अनुबन्धोऽत्र कफः, न त्वनुबन्ध्यः, एतेनात्र न द्विदोपजप्रसंग इत्यभिप्रायः ॥ ५ ॥

भा०टी०—ये तीनों प्रकारके श्लीपद कफकी अधिकता से होते हैं, क्योंकि गुरुता ( बोझ ) और मोटाई ये दोनों बातें विना कफके नहीं हो सकतीं, चाहे कोई दोष से हो, कफ सभी में रहता है ॥ ५ ॥

## अथ श्लीपदरोगस्योत्पत्तौ देशविशेषाः ।

श्लीपदसंभवहेतुं देशमाह—

पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ ६ ॥

म०-पुराणोदकेत्यादि । [1]अनूपदेशे हि सलिलं पतितं बहूदकं निम्नतया न शोषमुपयाति; जाङ्गले तु आग्नेयोन्नतभूभागत्वात् न पुराणोदकभूयिष्ठता । स्तिमितस्यानूपस्य मन्दातपत्वेनोष्णर्तावपि शीततेत्यत उक्तं–सर्वर्तुषु च शीतला इति । करकर्णादिगतश्लीपदसंदेहे कोपद्वारेण ज्वरेण श्लीपदावधारणं करणीयम् ॥ ६ ॥

भा०टी० श्लीपद रोगके पैदा होने का स्थान-देश दो प्रकार के होते हैं-जाङ्गल और अनूप, जहां की जमीन ऊँची होती है, और पानी कम होता है-घाम अधिक होता है, हवा बहुत चलती है। वहाँ रोग कम होते हैं उसे जांगल कहते हैं जैसे बीकानेर वगैरह। जहांकी जमीन नीची रहती, है पेड़ और पानी अधिक—होता है, पेड़ की वजह से जमीन पर घाम का असर कम होता है । हवा कम चलती है । नीची जमीन होने और घाम तथा हवा के कम होने से वर्षा का पानी न बहता है और न सूखता है। हरदम जमीन में सीड़ बनी रहती है । ऐसे देश को अनूप कहते हैं। ऐसे ही देश में विशेष कर श्लीपद हुआ करते हैं । जांगल देश में बहुत ही कम। अनूप देश में कोशवृद्धि और गलगण्ड ( घेंघा ) भी अधिक तर होता–है ॥ ६ ॥

## अथ श्लीपदरोगस्य पुनरप्यसाध्यलक्षणम् ।

अपरमसाध्यलक्षणमाह—

**यच्छ्लेष्मलाहारविहारजातं पुंसः प्रकृत्याऽपि कफात्मकस्य ।**
**सास्रावमत्युन्नतसर्वलिङ्गं सकण्डुरं श्लेष्मयुतं विवर्ज्यम् ॥ ७ ॥**

इति श्रीमाधवकरविरचिते माधवनिदाने श्लीपदनिदानं समाप्तम् ।

म०–यदित्यादि । अत्युन्नतसर्वलिङ्गमिति येन दोषेणारब्धं श्लीपदं तस्यात्युन्नतानि=अतिवृद्धानि सर्वाणि लिङ्गानि यत्र तत्तथा । सकण्डुरमिति अत्यन्तकण्डुमत् । श्लेष्मयुतमिति श्लेष्मानुगम् ॥ ७ ॥

इति श्रीकण्ठदत्तरचितायां मधुकोशव्याख्यायां श्लीपदनिदानं समाप्तम् ।

भा०टी०–जो श्लीपद कफकारक आहार विहार से पैदा होता है। रोगी की प्रकृति कफ की होती है । जिसमें सब दोषों के पूरे २ लक्षण रहते हैं और बहुत खुजली होती है, तथा जो बहा करता है वह असाध्य कहा गया है ॥ ७ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां-
रुग्विनिश्चयभाषाटीकायां श्लीपदनिदानम् ।

---

१ अल्पोदकद्रुमो यस्तु प्रवातः प्रचुरातपः । ज्ञेयः स जाङ्गलो देशः स्वल्परोगतमोऽपि च ॥ प्रचुरोदकद्रुमो यस्तु निवातो दुर्लभातपः । अनूपो बहुदोषश्च. समः साधारणो मतः ॥ इति विमानस्थाने चरकः ॥

## अथ विद्रधिनिदानम् ।

( Abscess ) एब सेस

### अथ विद्रधिरोगस्य संप्राप्तिः ।

शोथत्वसामान्यात् विद्रधिनिदानम् । तस्य संप्राप्तिमाह—

त्वग्-रक्त-मांस-मेदांसि संदूष्यास्थिसमाश्रिताः ।
दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ १ ॥
महामूलं रुजावन्तं वृत्तं वाऽप्यथवाऽऽयतम् ।
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥२॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ।
षण्णामपि हि तेषां तु लक्षणं संप्रवक्ष्यते ॥ ३ ॥

( सु० नि० अ० ६ )

म०—त्वग्रक्तमांसमेदांसीत्यादि । घोरमित्यन्येभ्योऽपि शोथसमुत्थानेभ्यो ग्रन्थ्यादिभ्य आशुकारित्वाद्दारुणम् । उच्छ्रिता भृशमिति अत्यर्थं वृद्धाः । अस्थिसमाश्रिता[1] इत्यनेन स्थानसंश्रयोऽभिहितः । उच्छ्रिता भृशमित्यनेन प्रकोप आविष्कृतः, एतेनैवान्तरीयकतया चयप्रसरावप्याक्षिप्तौ मन्तव्यौ । महामूलमस्थ्यादिसमाश्रयणाद्गम्भीरमूलम् । रुजावन्तमिति उत्पत्तावेव रुजाप्रकर्षवन्तं, अतिशायने मतुप् । वृत्तमित्यादि । वृत्तं=वर्तुलम् । आयतं=दीर्घम् । वृत्तायताभ्यां ग्रन्थ्यादिविलक्षणता । विद्रधिरिति ख्यात इति इतिशब्देन [2]निरुपाधिसंकेतमात्रा विद्रधिसंज्ञेति दर्शयति । चरके तु विदाहप्रकर्षाद्विद्रधिसंज्ञा । यदुक्तम्="स वै शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते" ( च. सू.स्था.अ.१७ )—इति ॥ १—३ ॥

भा०टी०—विद्रधि रोग की संप्राप्ति—अत्यन्त कुपित और बढ़े हुए दोष अस्थि में स्थित होकर त्वचा, रक्त, मांस और मेद को बिगाड़ कर धीरे २ एक भयङ्कर शोथ

---

१ "अस्थिसमाश्रिता दोषा इति वक्ष्यमाण शोथाद्विद्रधेर्भेदार्थम् । यतो व्रणशोथे दोषाणामस्थिसमाश्रयनियमो नास्ति" इति भावमिश्रः ।

२—निरुपाधीति—उपाधिः पार्थक्यकारको धर्मस्तद्विहीनो यः संकेत—अस्माच्छब्दादयमर्थो ज्ञेय इत्युपदेशस्तन्मात्राविदाहोपाधिविरहिता विद्रधिसंज्ञेत्यर्थः । चरकेण तु विदाहधर्मोपाधिसम्बद्धा विद्रधिरिति यौगिकी संज्ञा प्रतिपादिता ।

पैदा कर देते हैं जो कि बड़ी जड़ वाला, पीड़ा करने वाला, गोल और लंबा होता है। उसे विद्रधि-कहते हैं। हिन्दी में इसे जहरवाद कहते हैं। वह छःप्रकारका होता है। १ वातज, २ पित्तज, ३ कफज, ४ सन्निपात्तज, ५ क्षतज, ६ रक्तज, इन छहो प्रकारको विद्रधिका लक्षण आगे कहा जाता है॥ १—३॥

### अथ वातजविद्रधेर्लक्षणानि ।

वातिकमाह—

कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः ।
[1]चित्रोत्थानप्रपाकश्च विद्रधिर्वातसंभवः ॥ ४ ॥

( सु० नि० अ० ६ )

म०-कृष्ण इत्यादि । विषमो भृशमिति कदाचिदल्पः कदाचिन्महान् । चित्रोत्थानप्रपाक इति चित्रौ नानाविधौ वायोर्विषमक्रियत्वादुद्गमप्रपाकौ यस्य स तथा ॥ ४ ॥

भा०टी०—वात को विद्रधि का लक्षण—वातज विद्रधि काली या लाल होती है। कभी छोटी हो जाती है और कभी बड़ी । पीड़ा उसमें बहुत होती है । वह कई तरह से पैदा—होती और पकती—है । कभी थोड़ा निकलकर रह जाती— और फिर निकलती—है । पकने के समय कभी जड़ में पकती—है कभी ऊपर और कभी बगल में ॥ ४ ॥

### अथ पित्तजविद्रधेर्लक्षणानि ।

पैत्तिकमाह—

पक्वोदुम्बरसंकाशः श्यावो वा ज्वरदाहवान् ।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥ ५ ॥

( सु० नि० अ० ६ )

म०-पक्वेत्यादि । ज्वरदाहावुत्थानकाल एव, पाककाले तु प्रकर्षवन्तौ ताविति विशेषः ॥ ५ ॥

भा०टी०—पित्तज विद्रधि पके हुए गूलर के फल के समान गुलाबी या स्याह होती—है । उसमें जलन होती है, ज्वर आजाता—है । वह बहुत जल्दी निकलती और पकती है ॥ ५ ॥

---

१ "चिरोत्थानप्रपाकश्च,, इति पाठान्तरम् ।

अथ कफजविद्रधेर्लक्षणानि।

कफजमाह—

शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः।
चिरोत्थानप्रपाकश्च विद्रधिः कफसंभवः॥ ६॥

( सु० नि० अ० ६ )

म०—शरावेत्यादि। शरावसदृश इति महत्त्वसूचनपरम्॥ ६॥

भा०टी०—कफज विद्रधि परई की तरह बड़ी, ठंडी, चिकनी, कम पीडा वाली, होती—है। और वह धीरे २ निकलती और पकती—है॥ ६॥

अथ पाकानन्तर सञ्जातास्रावस्य लक्षणम्।

पाकानन्तरं संभूतास्रावलिङ्गमाह—

तनु-पीत-सिताश्चैषामास्रावाः क्रमशः स्मृताः।

( सु० नि० अ० ६ )

म०—तनुपीताश्चैषामित्यादि। क्रमश इति यथाक्रमं; तेन वातेन तनुः, पित्तेन पीतः, कफेन सितः; तनुस्रावे वातानुरूपो वर्णो ज्ञेयः॥—

भा०टी०—वात की विद्रधिका स्राव पतला और लाल या स्याह होता—है। पित्तज का पीला और कफज का सफेद होता है—॥

अथ सान्निपातिकविद्रधेर्लक्षणानि।

सन्निपातजमाह—

नाना-वर्ण-रुजा-स्रावो घाटालो [1]विषमो महान्॥ ७॥
विषमं पच्यते चापि विद्रधिः सान्निपातिकः।

( सु० नि० अ० ६ )

म०—नानेत्यादि। नानावर्णरुजास्राव इति नानाशब्दः प्रत्येकमभिसंबध्यते, नाना बहुविधा वर्णाः कृष्ण-पीत-शुक्ल-वर्णाः, रुजाः तोद-दाह-कण्ड्वादिकाः, तनु-पीत-सिता आस्रावाश्च यस्य स तथा। अन्यत्र शोथे पाककाले नानारुजा, अत्र तु सर्वदा। [2]घाटाल इति घाटा अस्यास्ति स घाटाल इति मत्वर्थीयो लच्,

---

१ विषमो निम्नोन्नत -इति भावमिश्रः।

२ घाटाल ऊर्ध्वभागो महान् यस्येति सः घाटालः-इति डल्हणः।

अत्युच्छ्रिताग्रत्वेन घाटाल इव । विषमोऽसाध्यत्वात् । विषमं पच्यत इति चिराचिरगम्भीरोत्तानोर्ध्वानूर्ध्वभेदेन विषमं यथा भवति तथा पच्यत इति । विषमम्=असमम् । ननु, विषमपाकित्वं वातिके विद्रधावुक्तं, तथाऽनुपक्रान्ते च शोथे, यथा—"योऽभ्युत्थितोऽल्पो यदि वा महान् स्यात् क्रियां विना पाकमुपैति शोथः । विशालमूलो विषमो विदग्धः स कृच्छ्रतां यात्यवगाढदोषः ॥" ( सु. सू. स्था. अ. १७ )—इति, अतः संशये कथं मिथो भेदप्रतीतिः ? उच्यते, वातिके अप्रतीकारेणैव विषमपाकित्वम्, इह पुनः प्रतीकारोऽपि वैषम्यं, वातिके तु पाकमात्रवैषम्यं, न तु गाम्भीर्यादिना, अतो वातिकः साध्यः ॥ ७ ॥—

भा०टी०—सन्निपातज विद्रधि काली, पीली और सफ़ेद होती है । उसमें सूई चुभोने जैसी पीड़ा; जलन और खुजली होती-है । ऊंची और अनीदार होती-है बड़ी होती है । कहीं नीची भी-होती-है । वह पकती भी-है अद्भुत ढंग से-कभी जल्दी पकती-है कभी-देरमें कभी जड़ तक, कभी ऊपर की तरफ और कभी नीचे की तरफ । यह असाध्य होती-है ॥ ७ ॥

## अथाभिघातजविद्रधेर्लक्षणानि ।

अभिघातजस्यागन्तोः संप्राप्तिमाह—

तैस्तैर्भावैरभिहते क्षते वाऽपथ्यकारिणः ॥ ८ ॥
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ।
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ॥ ९ ॥
आगन्तुर्विद्रधिर्ज्ञेयः पित्तविद्रधिलक्षणः ।

( सु० नि० अ० ९ )

म०—तैस्तैरित्यादि । तैस्तैरिति काष्ठ-लोष्ट-पाषाणादिभिः, अभिहत इति अस्रुतरक्तस्य मथित-पिच्चितादेरुपलक्षणं, क्षत इति स्रुतरक्तस्य छिन्नभिन्नादेः, द्वयोरभिहतयोरपथ्यकारिण इति विशेषणम् । क्षतोष्मेति क्षतशब्दस्य हिंसामात्रपरिग्रहात् क्षताभिहतयोरप्यूष्मा क्षतोष्मशब्देनोच्यते । वायुविसृत इति क्षते रक्तक्षयात् अभिहते अभिघातादेव वातकोपः, कुपितेन वातेन हेतुभूतेन विसृतः प्रसृतो वायुविसृतः । यद्यप्ययं वात-पित्त-रक्तजस्तथाऽपि प्रागभिघातसंभवत्वेनागन्तुः, वात-पित्त-रक्तजानां जनकत्वेनैव विलक्षणाऽस्य संप्राप्तिः । पित्तविद्रधिलक्षण इति अत्रोक्तज्वरादिव्यतिरिक्तसंस्थानवर्णवेदनादिपित्तविद्रधिलिङ्गयुक्त इत्यर्थः ॥ ८ ॥ ९ ॥

भा०टी०—अभिघातज विद्रधिका लक्षण-काठ, ढेला, पत्थर, लाठी वगैरह से चोट लगने पर यदि न फूटे तो उसे अभिहत कहते हैं, और यदि फूट जाय और खून बहने लगे तो उसे क्षत कहते हैं। इन दोनों हालत में बदपरहेजी से रहने पर चोट की जगह की गरमी वायु से शरीर में फैल कर पित्त और खून को बिगाड़ देती-है फिर उस जगह विद्रधि होजाती है। ज्वर आने लगता-है। प्यास लगती -है जलन होती-है, पित्तज विद्रधि के सब लक्षण प्रकट हो जाते-हैं इसमें वायु का भी प्रबल कोप होता-है, इससे पीड़ाभी बहुत होती-है ॥ ८—९ ॥

अथ रक्तजविद्रधेर्लक्षणानि ।

रक्तजमाह—

कृष्णस्फोटावृतः श्यावस्तीव्र-दाह--रुजाकरः ॥ १० ॥
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ।

( सु० नि० अ० ९ )

म०-कृष्णेत्यादि । पित्तविद्रधिलिङ्गातिदेशेनलब्धावपि दाहज्वरौ तीव्रताविशेषार्थमुक्तौ । श्याव इति पित्तविद्रधिलिङ्गातिदेशेन प्रसक्तस्य पक्वोदुम्बरसंकाशस्यापवादः । भोजप्रभृतयस्तु धातुरक्तजं विद्रधिं परित्यज्य मक्कल्लसंज्ञयाऽऽर्तवलक्षणरक्तजं पठन्ति । तेषां मते आर्तवजेन सह षड्विद्रधयः, सुश्रुते तु धातुरक्तजोऽपि तथा मक्कलसंज्ञकोऽपि विद्रधिः सामान्येन रक्तज एवेति षड्विद्रधय इति बोद्धव्यम् ॥ १० ॥—

भा०टी०—रक्तज विद्रधि में काली २ पिड़कियाँ हो जाती हैं। रंग उसका स्याह होता-है और जलन तथा पीड़ा बड़ा तेज होती-है, इसमें पित्तज विद्रधि के सब लक्षण होते-हैं। पित्तज विद्रधि पके हुए गूलर के रंग की होती है, परन्तु यह वैसा न होकर स्याह होता-है ॥ (बच्चा होने पर जिस प्रसूता का गंदा रक्त ठीक निकल नहीं जाता, वह अन्दर ही वायु द्वारा सूखकर कभी २ विद्रधि की शक्ल में पैदा हो जाता-है, उसे मक्कल्ल विद्रधि कहते-हैं, इसे यहां मूल में नहीं गिनाया, मगर दूसरे ग्रन्थ में इसका जिक्र आया-है ) ॥ १० ॥

अथान्तर्विद्रधेर्लक्षणानि ।

अधिष्ठानविशेषेण लिङ्गविशेषं साध्यतामसाध्यतां च प्रतिपादयितुमाभ्यन्तरविद्रधिमाह—

पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥ ११ ॥

वल्मीकवत् समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ।
गुदे बस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा ॥ १२ ॥
वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि वाऽप्यथ ।
तेषामुक्तानि लिङ्गानि बाह्यविद्रधिलक्षणैः ॥ १३ ॥
अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः ।
गुदे वातनिरोधश्च बस्तौ कृच्छ्राल्पमूत्रता ॥ १४ ॥
नाभ्यां हिक्का तथाऽऽटोपः कुक्षौ मारुतकोपनम् ।
कटी–पृष्ठ–ग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ॥ १५ ॥
वृक्कयोः पार्श्वसंकोचः प्लीह्न्युच्छ्वासावरोधनम् ।
सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते ।
श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पयः ॥ १६ ॥

( सु० नि० अ० ११ )

म०–पृथगित्यादि । इयमधिकविधानार्थमुक्ताऽपि संप्राप्तिर्विद्रधेः पुनरुच्यते । आभ्यन्तरस्य रक्तजस्य तथाऽऽगन्तोश्च विद्रधेर्दोषेण व्यपदेशादियमेव तत्रापि संप्राप्तिर्ज्ञेयेति कश्चित् । बाह्यागन्तुवदाभ्यन्तरागन्तुसंप्राप्तिरित्यर्थः । क्षतजस्याभ्यन्तराभावान्न निर्दिष्टः क्षतज इति तु जेज्जटः । गुल्मरूपिणमिति गुल्मवत् संहतम् । एतदाभ्यन्तरविद्रधीनां सामान्यरूपं, विशेषलक्षणं तु बाह्यविद्रधिलक्षणैरेव ज्ञेयम् । वल्मीकवत् समुन्नद्धं=समन्तादुन्नतम्, एतदपि पच्यमानावस्थायां सर्वेषां समानम् । बस्तिमुख इति बस्तिमुख एव, विद्रध्याधारभूतमांसादिसंभवात्; न बस्तौ, तस्य तनुत्वात् । आटोपो=रुजापूर्वकक्षोभः । मारुतकोपनमिति मार्गावरोधाद्वायोः कोपः । वृक्कयोरिति वृक्कमग्रमांसम् । सर्वाङ्गप्रग्रहः=प्रत्यङ्गव्यथा, सर्वसिराधिष्ठानत्वात् हृदयस्य । क्लोम्नीति क्लोम=वृक्कादूर्ध्वं पिपासास्थानम् । पेपीयते पय इति पुनः पुनर्जलं पातुमिच्छतीत्यर्थः ॥ ११–१६ ॥

भा०टी०—अन्तर्विद्रधिके लक्षण–दोष. एक २ या सब इकट्ठे होकर शरीरके अन्दर गुदा, मूत्राशयका मुख, नाभि, कोंख, वक्षण–( पट्ठा ) वृक्क ( गुर्दा ) प्लीहा ( तिल्ली ) यकृत् ( जिगर ) हृदय और क्लोम, इन स्थानों में बांबी के समान ऊँची और गुल्म को तरह ठोस विद्रधि पैदा कर देते–हैं इनमें वेही सब लक्षण–होते हैं जोकि बाह्य

विद्रधिमें,परन्तु किस स्थानमें अन्दर विद्रधि हुई है, इसे जानने के लिए सबका अलग२ लक्षण बतलाया जाता है । गुदज विद्रधिमें-हवा खुलना बंद हो जाता है । बस्तिज में-पेशाब थोड़ा और दर्द के साथ उतरता है। नाभिजमें-हिचकी आती है और नाभि के आसपास दर्द और कम्पन होता है । कोखमें—वायु रुक कर पीड़ा करती है। वङ्क्षणजमें—कमर और पीठमें जकड़न और बड़ी तेज पीड़ा होती है । वृक्कजमें— पसुलीके आसपास ऐसा जान पड़ता है जैसे कोई बकोरता है प्लीहाजमें—सांस रुक२ करआता है । हृदयजमें सब अङ्ग अङ्ग में पीडा होती और खांसी आती है। यकृज्जमें—सांस फूलता है । क्लोमज में—इतनी कड़ी प्यास होती है कि बार २ पानी पीने पर भी शान्त नहीं होती ॥ ११—१६ ॥

अथ विद्रधीनां स्रावमार्गाः ।

स्रावनिर्गममार्गमाह—

नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः ।

( सु० नि० अ० ६ )

म०—नाभेरित्यादि । उपरिजा=वृक्कप्लीहादिजाः । यान्ति=स्रवन्ति । नाभिजस्तूभयमार्गस्रावी, ऊर्ध्वाधः स्रावश्च तथागतित्वात् वातस्य । यदाह हरीतः— "ऊर्ध्वं प्रभिन्नेषु मुखान्तराणां प्रवर्ततेऽसृक्सहितोऽपि पूयः । अधः प्रभिन्नेषु च पायुमार्गात्, द्वाभ्यां प्रवृत्तिस्त्विह नाभिजेषु"—इति । इतर इति नाभिबस्तिवङ्क्षणजाः ॥—

भा०टी०—इनमें नाभि के ऊपर के स्थानों में ( वृक्क, प्लीहा, यकृत्, कुक्षि, हृदय, क्लोम में ) उत्पन्न विद्रधि पक कर फूटने पर ऊपर के रास्ते—मुह से बहती हैं, और नाभि के नीचे ( गुद, बस्ति, वङ्क्षणमें ) पैदा हुई विद्रधि नीचे की तरफ—पाखाने के रास्तेसे बहतीहैं, और नाभि में उत्पन्न विद्रधि मुह और गुद, दोनों रास्तेसे बहती हैं।

अथ विद्रधीनां साध्यासाध्यत्वम् ।

साध्यत्वादिकमाह—

अधःस्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति ॥१७॥
( विद्रधिर्नाभिसञ्जातः स्रवत्यूर्ध्वमधोऽपि च । )
हृन्-नाभि-बस्ति-वर्ज्या ये तेषु भिन्नेषु बाह्यतः ।
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन ॥ १८ ॥

( सु० नि० अ० ६ )

साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः ।
आम-पक्व-विदग्ध-त्वं तेषां शोथवदादिशेत्[1] ॥ १९ ॥
( वा० नि० अ० ११ )

आध्मातं बद्धनिष्यन्दं छर्दि-हिक्का-तृषाऽ-न्वितम् ।
रुजा-श्वास-समायुक्तं विद्रधिर्नाशयेन्नरम् ॥ २० ॥

इति श्रीमाधवकरविरचिते माधवनिदाने विद्रधिनिदानं समाप्तम् ।
( सु० सू० अ० ३३ )

म०—अथ इत्यादि । अधः स्रुतेष्विति स्वयमेव । यदा नाभ्यादिजा भिन्ना अधः स्रवन्ति तदा जीवति । स्रुतेषूर्ध्वं न जीवतीति ऊर्ध्वं पूयस्यास्यादिनिर्गमान्न जीवनम् । हृन्नाभिवस्तिवर्ज्या इति प्लीहक्लोमादिजाः । भिन्नेषु बाह्यत इति वैद्य-व्यापारेण भिन्नेषु । अन्ये मर्माद्याशयजेषु स्वयमेव भिन्नेष्विति व्याचक्षते, अन्त-र्भिन्नेष्वप्यधःस्राविषु जीवनोक्तेः । नेतरेष्विति हृन्नाभिवस्तिजेषु भिन्नेषु तेषां मर्मत्वात् बाह्या आभ्यन्तरा वा वर्ज्याः । कदाचनेति पाके अपाके वा । तथा च भोजः—"असाध्यो मर्मजो ज्ञेयःपक्वोऽपक्वश्च विद्रधिः।सन्निपातोत्थितोऽप्येवं पक्व एव तु बस्तिजः ॥ त्वग्जो नाभेरधो यश्च साध्यो मर्मसमीपजः । अपक्वश्चैव पक्वश्च साध्यो नोपरि नाभिजः"=इति । अत्र मर्मजशब्देन हृदयनाभिजावुच्येते । बद्धनिष्यन्दमिति बद्धमूत्रम् । एतद्बस्तिजे प्रायः ॥ १७—२० ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां विद्रधिनिदानं समाप्तम् ।

भा०टी—ये विद्रधियाँ यदि गुदा से बहती हैं तब तो रोगी बच जाता है, परन्तु मुखके रास्ते बहने पर नहीं बचता क्योंकि मुहसे ठीक तरह से पूरा मवाद नहीं निकल सकता है। हृदय, नाभि और बस्ति की विद्रधि के सिवाय वृक्क,प्लीह, यकृत कुक्षि, क्लोम, वङ्क्षण और गुदा की विद्रधि यदि वैद्य द्वारा चिकित्सा करने से बाहर की तरफ बहती हैं तो भी शायद रोगी अच्छा हो जाता है, लेकिन हृदय, नाभि और बस्ति की विद्रधियाँ बाहर की तरफ बहें तो रोगी नहीं बचता, क्योंकि ये सब मर्म स्थान हैं॥ इनमें पाँच विद्रधियां [ १ वातज, २ पित्तज, ३ कफज, ४ रक्तज, ५ अभिघातज, ] साध्य होती हैं, और सान्निपातिक असाध्य। इनके कच्चापन, पकना और विदग्धता—आधा पकना, इन सबका लक्षण व्रणशोथ के समान समझना चाहिये। किसी विद्रधिमें यदि पेट फूले, पेशाब रुक जाय,कय, हिचकी, प्यास, पीड़ा, दमा, ये रोग पैदा हो जाँय तो फिर रोगी नहीं बचता ॥ १७-२० ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां
रुग्विनिश्चयभाषाटीकायां विद्रधिनिदानम् ।

---

[1] शोथवत् वक्ष्यमाणव्रणशोथवत् ।

## अथ व्रणशोथनिदानम्।

( Inflamation of wound ) इन्फ्लेमेशन आफ उन्ड

## अथ व्रणशोथस्य लक्षणम्।

प्रायेण चिकित्सासाधर्म्यात् भाविव्रणत्वसंबन्धतुल्यत्वाच्च व्रणशोथनिदानमाह—

एकदेशोत्थितः शोथो व्रणानां पूर्वलक्षणम्।
षड्विधः स्यात् पृथक्-सर्व-रक्ता-ऽऽगन्तु-निमित्त-जः ॥१॥
शोथाः षडेते विज्ञेयाः प्रागुक्तैः शोथलक्षणैः।
विशेषः कथ्यते चैषां पक्वापक्वादिनिश्चये ॥ २ ॥

म०—एकदेशोत्थित इत्यादि। षड्विध इति संख्याकथनं द्वन्द्वजनिषेधार्थम्। प्रागुक्तैरिति आमपक्वैषणीयोक्तैः, तत्र हि "वातश्वयथुस्त्वरुणः कृष्णो वा परुषो मृदुरनवस्थितः" ( सु. सू. अ. १७ )-इत्यादिना षट् शोथलक्षणान्युक्तानि। विशेषः कथ्यते चैषामिति तत्रानुक्तो विशेषः कथ्यत इत्यर्थः। पक्वापक्वादिनिश्चय इति अत्रादिशब्देन पच्यमानस्य परिग्रहः ॥ १ ॥ २ ॥

भा०टी०—व्रण शोथ का निदान-शरीर में किसी जगह सूजन हो जाना व्रण(घाव)होने की निशानी होती है। वह छः प्रकार का होता है। १ वातज, २ पित्तज, ३ कफज, ४ संनिपातज, ५ रक्तज, ६ आगन्तुज, । इनका लक्षण वही होता है जो वातज आदि शोथ का पहले कहा गया है। बाकी विशेषता—कच्चा, पका, अधपका पकता हुआ का जो लक्षण है, उसे बतलाते हैं ॥ १—२ ॥

## अथ व्रणशोथस्य वातादिभेदेन विशेषलक्षणानि।

वातादिभेदेन विशेषलक्षणमाह—

विषमं पच्यते वातात् पित्तोत्थश्चाचिराच्चिरम्।
कफजः पित्तवच्छोथो रक्तागन्तुसमुद्भवः ॥ ३ ॥

म०—विषममित्यादि। पित्तवदिति पित्तशोथवदचिरं पच्यते ॥ ३ ॥

भा०टी०—वातकर शोथ आधा तोहा पकता है, पित्तका जल्दी, कफका देर में और रक्तज तथा आगन्तुज पित्तकी तरह जल्दी पकता है ॥ ३ ॥

अथामव्रणशोथस्य लक्षणानि ।

मन्दोष्मताऽल्पशोथत्वं काठिन्यं त्वक्सवर्णता ।
मन्दवेदनता चैतच्छोथानामामलक्षणम् ॥ ४ ॥

भा०टी०—गरमी, ऊँचाई, वेदना कम होना, कड़ा रहना, त्वचाके समान वर्ण होना, आम शोथ का निशान है ॥ ४ ॥

अथ पच्यमानव्रणशोथस्य लक्षणानि ।

पच्यमानलक्षणमाह—

दह्यते दहनेनेव क्षारेणेव च पच्यते ।
पिपीलिकागणेनेव दश्यते छिद्यते तथा ॥ ५ ॥
भिद्यते चैव शस्त्रेण दण्डेनेव च ताड्यते ।
पीड्यते पाणिनेवान्तः सूचीभिरिव तुद्यते ॥ ६ ॥
सोषाचोषो विवर्णः स्यादङ्गुल्येवावघट्यते ।
आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत् ॥ ७ ॥
न गच्छेदाततः शोथो भवेदाध्मातबस्तिवत् ।
ज्वरस्तृष्णाऽरुचिश्चैव पच्यमानस्य लक्षणम् ॥ ८ ॥

म०-दह्यत इत्यादि । पच्यमानशोथे पित्तलिङ्गान्येव भूयसा भवन्ति, विदाहस्य पित्तप्रकोपजत्वात्; विदाहश्चात्र दोषादीनामेव । तेन ज्वर-तृष्णाऽरुच्यादयोऽत्र पित्तलिङ्गानि । छिद्यत इति द्विधा क्रियत इव । भिद्यत इति विदार्यते । सोषाचोष इति उषा=दाहः, चोषः=पार्श्वस्थाग्निसंतापवद्व्यथा, ताभ्यां सह वर्तते यः स तथा ॥ ५-८ ॥

भा० टी०—जब फोड़ा पकने लगता है उस समय आगसे जलने की तरह, क्षार से छुरने की तरह, चीटियोंके काटने की तरह, दो टुकड़ा करने की तरह, शस्त्र से चीरने की तरह, डंडा से मारने की तरह, अन्दर हाथ से दबाने की तरह, सूई चुभोने की तरह, और अँगुली से घिसने की तरह बड़ी कड़ी पीड़ा होती है । भीतर और बाहर की तरफ बहुत जलन होती है । सोने में, बैठने में और खड़े रहने में किसी तरह पीड़ा के मारे चैन नहीं पड़ती है । ऐसी बेचैनी रहती है जैसे बिच्छी मारे हो । उस समय सूजनमें हवा भरी गेंद की तरह तनाव होता है । ज्वर आजाता है । प्यास लगती है और खाने की इच्छा नहीं होती ॥ ५—८ ॥

## अथ परिपक्वव्रणशोथस्य लक्षणानि ।

पक्वलक्षणमाह—

वेदनोपशमः शोथोऽलोहितोऽल्पो न चोन्नतः ।
प्रादुर्भावो वलीनां च तोदः कण्डुर्मुहुर्मुहुः ॥ ९ ॥
उपद्रवाणां प्रशमो निम्नता स्फुटनं त्वचाम् ।
बस्ताविवाम्बुसंचारः स्याच्छोथेऽङ्गुलिपीडिते ॥ १० ॥
पूयस्य पीडयत्येकमन्तमन्ते च पीडिते ।
भक्ताकाङ्क्षा भवेच्चैतच्छोथानां पक्वलक्षणम् ॥ ११ ॥

म०—वेदनोपशम इत्यादि । दाहादिवेदनोपशान्तिः, विदाहोपशमेन पित्तस्यावलवत्त्वात् । तोदः कण्डूश्चात्र वातकफलिङ्गम् । प्रादुर्भावो वलीनामिति मांसशैथिल्याद्वलीसंभवः । उपद्रवाणां प्रशम इति पित्तकोपजनिता उषाचोष–तृष्णा–ऽरुच्यादयो रोगा एव उपद्रवास्तेषां प्रशमः । निम्नता स्वरूपतः, अङ्गुलिपीडनाद्वा । स्फुटनं त्वचामिति किंचित्त्वगवदरणम् । बस्ताविवेत्यादि । बस्तिश्चर्मपुटकं, पूयस्येत्यत्र 'संचार, इति शेषः । अयमर्थः—बस्तौ यथाऽम्बुसंचारस्तथा शोथेऽङ्गुलिपीडिते सति पूयस्य संचारः । पीडयत्येकमन्ते च पीडित इति एकमन्तं देशम् अन्ते अवयवे पीडिते पीडयति अवगाहते, 'पूय, इति शेषः ॥ ९—११ ॥

भा०टी०—जब फोडा बिलकुल पक जाता है तब सूजन में ऊंचाई नहीं रहती, और रंग उसका बदल कर पाण्डु वर्ण होजाता है। झुर्रियां पड़ जाती हैं। टपक नहीं होती है। रह २ कर भीतरसे खुजली ( कलवलाहट ) मालुम होती है। ज्वर, तृष्णा आदि उपद्रव शान्त हो जाते हैं। जलन कम हो जाती है। अंगुली से दबाने पर सूजन पचक जाती है। सूजन पर की त्वचा फटीसी रहती है। पानी भरे मशक में जैसे दबाने पर अन्दर पानी मालुम होता है वैसे ही इस में भी दबाने पर पीप जान पड़ती है। और एक तरफ अँगुली द्वारा दबाने पर पीप दूसरी तरफ जाती हुई जान पड़ती है तब कुछ भूख भी जान पड़ती है ॥ ९—११ ॥

अथ दूषीविषशब्दस्य निरुक्तिः।

दूषीविषस्य निरुक्तिमाह-

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः।
यस्मात् संदूषयेद् धातून् तस्माद् दूषीविषं स्मृतम् ॥ ३३ ॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम्।
दूषीविषमसाध्यं स्यात् क्षीणस्याहितसेविनः ॥ ३४ ॥

(सु० क० अ० २)

म०—दूषितमित्यादि। देशकालान्नादिवास्वप्नैरिति देशः=प्रचुरानिलशीतवृष्टिरनूपादिः, कालः=शीतानिलदुर्दिनादिः, अन्नम्=सुरातिलकुलत्थादि, तैर्दूषितं=कोपितम्, अभीक्ष्णशः=पुनःपुनः। धातुदूषकत्वेन दूषीविषम्। संयोगजं विषं द्विविधम्, एकम्,=सविषाविषसंयोगकृतम्, कृत्रिमसंज्ञं, अपरम्=निर्विषद्रव्यकृतं, गरसंज्ञम्। यदाह वृद्धकाश्यपः-संयोगजं च द्विविधं तृतीयं विषमुच्यते। गरः स्यादविषं तत्र सविषं कृत्रिमं मतम्" इति। अत एव रसायने चरकः-"दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे"-इति ॥ ३३ ॥ ३४ ॥

भा० टी०—दूषीविष पेट में पड़ा रहता है और अनूप देश, जाड़ा, बर्सात, सुरा, तिल, कुलथा वगैरह से फिर दूषित होकर धातुओं को दूषित करता है इसलिए इसे दूषीविष कहते हैं। जितेन्द्रिय-पथ्याशी पुरुष का नया दूषीविष रोग साध्य होता है। एक वर्ष का पुराना याप्य और क्षीण तथा अपथ्यसेवी का असाध्य होता है। संयोगज विष दो प्रकार का होता है। क्रित्रिम और गर। सविष और अविष वस्तुओं के संयोग से बना विष क्रित्रिम और निर्विष वस्तु के संयोग से बना विष गर कहलाता है ॥ ३३—३४ ॥

अथ कृत्रिमविषस्य लक्षणानि।

तद् द्वयमपि दर्शयितुमाह—

सौभाग्यार्थं स्त्रियः स्वेदं रजो नानाङ्गजान् मलान्।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥ ३५ ॥
तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते।
मर्मप्रधमनाध्मानं हस्तयोः शोथलक्षणम् ॥ ३६ ॥

जठरं ग्रहणीदोषो यक्ष्मा गुल्मः क्षयो ज्वरः ।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥ ३७ ॥

म०—सौभाग्यार्थमित्यादि । स्त्रियः सौभाग्यार्थं शत्रुप्रयुक्ता वा सविषजन्तूनां स्वेदं, रजश्चूर्णं, नानाङ्गजान्=नानागरकरान् मलान् अन्नादौ ददति । तैरिति स्वेदरजःप्रभृतिभिः । गरश्चास्येति अपाकाज्जठरावस्थितस्वेदादिरेव गरः, अत एव तस्योदरामयः; किंवा वक्ष्यमाणमर्मप्रधमनादिलक्षणो व्याधिर्गरः । मर्मप्रधमनं=मर्मव्यथा । शोथलक्षणमिति शोथ एव लक्षणं जठरमुदरम् । अन्यस्य व्याधेर्लिङ्गानि दर्शयेदिति अन्यस्य विस्फोटादेर्लिङ्गं दर्शयति ॥ ३५–३७ ॥

भा० टी०—स्त्रियाँ अक्सर पतिको अपने वश में रखने के लिए पसीना, रज, अङ्गों की मैल वगैरह अन्न में मिला कर पुरुष को खिला देती हैं । शत्रु द्वारा भी ऐसी चीजें दी जाती हैं । ये चीजें जब अन्नके साथ पेट में पहुँचती हैं तो पाण्डुरोग,पसीना अधिक निकलना, मन्दाग्नि,कृशता,मर्मस्थानों में पीड़ा,आध्मान,हाथों में शोथ,पेट बढ़ आना, ग्रहणीरोग, यक्ष्मा, गुल्म, क्षय, ज्वर ये सब और फुन्सियाँ वगरह रोग पैदा होकर बड़ी तकलीफ देते हैं ॥ ३५—३७ ॥

## अथ लूताविषस्योत्पत्तिः ।

सम्प्रति लूतानां घोरविषत्वप्रतिपादनार्थमैतिह्यमाह—

यस्माद् लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः ।
तस्माद् लूतास्तु भाष्यन्ते संख्यया ताश्च षोडश ॥ ३८ ॥

( सु० क० अ० २ )

म०—यस्माल्लूनं तृणमित्यादि । इति किल श्रुतिः—"विश्वामित्रो नरपतिः कामधेनोर्बलात्कारपरिग्रहेण मुनिसत्तमं वाशिष्ठं कोपयांचकार, कुपितेन तेनान्तर्ज्वलदविरलकोपानलज्वालितं [1]कुकुलयुगुलमिव वहलपाटलं लोचनद्वयं वहता भगवान् रविरवलोकितः । ततस्तस्य भ्रुकुटिभयङ्करललाटतटप्रस्यन्दी स्वेदविन्दूत्करः प्रचण्डतरः प्रत्यासन्नलूनतृणे धेन्वर्थं संभृते निपतितो लूताऽभूत्"—इति ।

---

१ कुकुलस्तुषवह्निः । वहलपाटलमतिशयरक्तवर्णम् । अत्रार्थे सौश्रुतं वचनं यथा–विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम् । वशिष्ठं कोपयामास गत्वाश्रमपदं किल । कुपितस्य मुनेस्तस्य ललाटात्स्वेदविन्दवः । अपतन् दर्शनादेव ह्यधस्तात्तीव्रवर्चसः । लूने तृणे महर्षेस्तु धेन्वर्थं संभृतेऽपि च । ततो जातास्त्विमा घोरा नानारूपा महाविषा–इति ।

तास्तु षोडश। यदाह सुश्रुतः—"त्रिमण्डला तथा श्वेता कपिला पीतका तथा। लालामूत्रविषा रक्ता कठिना चाष्टमी स्मृता। सौवर्णिका लाजवर्णा जालिन्येकपदी तथा। कृष्णाऽग्निवक्त्रा काण्डा च मालागुण्यष्टमी मता" (सु. क. स्था. अ.८) इति॥ ३८॥

भा० टी०—विश्वामित्र एक वार वशिष्ठजी के आश्रम आये और उनसे कामधेनु गाय माँगने लगे, उनके न देने पर जबर्दस्ती लेना चाहा, इस पर वशिष्ठजी को बहुत क्रोध हुआ, और उनके ललाट से पास में रखी हुई घास पर पसीना गिरा उसी से मकड़ियाँ हुईं जो गिनती में सोलह होती हैं॥ ३८॥

## अथ लूतादंशस्य सामान्यलक्षणानि।

तासां सामान्यदंशलक्षणमाह—

ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः॥ ३९॥
पिडका विविधाकारा मण्डलानि महान्ति च।
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा॥ ४०॥
सामान्यं सर्वलूतानामेतद् दंशस्य लक्षणम्।

(सु० क० अ० २)

म०--ताभिर्दष्ट इत्यादि। दंशकोथ इति दंशदेशे पूतिभाव इत्यर्थः। प्रवृत्तिः क्षतजस्येति रक्तस्य प्रवर्तनम्। सर्वलूतानामिति असाध्याष्टविधसौवर्णिकादिलूतानामेव सामान्यलक्षणं ज्ञेयम्। यतस्त्रिमण्डलादीनामष्टानां कृच्छ्रसाध्यत्वं, ताभिर्दष्टे शिरोदुःखमित्यादिना सामान्यलक्षणमभिधाय सौवर्णिकाद्यनन्तरमेतत् पठितवान् सुश्रुतः। माधवकरेण तु षोडशानां लूतानां सामान्यलक्षणमेतदित्यभिप्रायेण पठितमिति॥ ३९॥ ४०॥

भा० टी०—इन सोलह लूताओं में आठ में कम विष होता है और आठ में अधिक होता है। इनमें आठ साध्यलूताके काटनेपर दंशस्थान सड़ जाता है, खून बहता है, ज्वर, दाह, अतिसार, त्रिदोषज रोग, अनेक आकार की पिड़कियाँ, बड़े २ चकत्ते, बड़ी मुलायम, लाल, स्याह, और फैलने वाली सूजन, ये सब रोग पैदा होते हैं॥३९-४०॥

अथ दूषीविषाख्यलूतानां दंशलक्षणानि ।

त्रिमण्डलादयोऽष्टौ दूषीविषास्तासां लक्षणमाह–

दंशमध्ये तु यत् कृष्णं श्यावं वा जालकाचितम् ॥ ४१ ॥
ऊर्ध्वाकृति भृशं पाकं क्लेद-शोथ-ज्वरान्वितम् ।
दूषीविषाभिर्लूताभिस्तद् दष्टमिति निर्दिशेत् ॥ ४२ ॥

( च० चि० अ० २५ )

म०–दंशमध्ये त्वित्यादि । ऊर्ध्वाकृतीति ऊर्ध्वगस्वरूपम्, अन्ये "दग्धाकृति" इति पठन्ति, तद् व्यक्तार्थम् । दूषीविषाभिरिति कालान्तरप्रकोपिविषाभिः। दष्टमिति दंशम् ॥ ४१ ॥ ४२ ॥

भा० टी०—दूषीविष–विषैली लूता के काटने पर दंशस्थान में काला, या स्याह, जाला के समान ऊँचा शोथ हो जाता है, वह पकता है और बहता है । ज्वर आ जाता है ॥ ४१—४२ ॥

अथ प्राणहरलूतानां दंशलक्षणानि ।

सौवर्णिकादीनामष्टानामसाध्यानां प्राणहराणां सामान्यलक्षणमाह–

शोथः श्वेताः सिता रक्ताः पीता वा पिडका ज्वरः ।
प्राणान्तिकाश्च जायन्ते श्वास-हिक्का-शिरोग्रहाः ॥ ४३ ॥

( च० चि० अ० २५ )

म०–शोथ इत्यादि । प्राणान्तिका इति प्राणहराः ॥ ४३ ॥

भा० टी०—असाध्य प्राणहर लूता के काटने पर शोथ होता है और सफेद, काली, या लाल या पीली पिड़कियाँ पैदा हो जाती हैं, ज्वर आता है । श्वास, हिक्का, शिरोवेदना, ये रोग पैदा होकर प्राण नाश कर देते हैं ॥ ४३ ॥

अथाखुदूषीविषस्य लक्षणानि ।

आखुदूषीविषस्य लक्षणानि ।

आदंशात् शोणितं पाण्डुमण्डलानि ज्वरोऽरुचिः ।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ॥ ४४ ॥

( च० चि० अ० २५ )

म०आदंशादित्यादि–आदंशात् शोणितमित्यत्र "गलति" इति शेषः। आखवः=शुक्रविषाः। यदुक्तम्,—शुक्रं पतति यत्रैषां शुक्रस्पृष्टैः स्पृशन्ति यत्" (सु. क. स्था. अ. ७)–इति ॥ ४४ ॥

भा० टी०—दूषीविष-मूसा के काटने पर दंशस्थान से खून बहता है, पाण्डुवर्ण के चकत्ते हो जाते हैं। ज्वर, अरुचि, रोमाञ्च और दाह, ये रोग पैदा हो जाते हैं ॥४४॥

## अथ प्राणहरमूषिकविषस्य लक्षणानि।

प्राणहरमूषिकलक्षणमाह–

**मूर्च्छाङ्ग-ऽशोथ-वैवर्ण्य-क्लेद-शब्दाश्रुति-ज्वराः।**
**शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषिकैः॥ ४५ ॥**

( च० चि० अ० २५ )

म०–मूर्च्छेत्यादि। अङ्गशोथेति मूषिकाकार एवाङ्गशोथो ज्ञेयः। यदुक्तमन्यत्र,–"चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभैः" (सु. क. स्था. अ. ७)–इति। शब्दाश्रुतिः=बाधिर्यम्, अन्ये "मन्दारुचिः" इति पठन्ति। असाध्यमूषिकैः=मारणात्मकैः॥ ४५ ॥

भा० टी०—प्राणहर असाध्य मूसा के काटने पर मूर्च्छा, शरीर में शोथ, वैवर्ण्य, क्लेदस्राव, बहिरापन, ज्वर, शिर का भारीपन, लार बहना, खून की कय, ये सब रोग पैदा होते हैं ॥ ४५ ॥

## अथ कृकलासदष्टस्य लक्षणानि।

कृकलासदष्टलिङ्गमाह—

**कार्ष्ण्यं श्यावत्वमथवा नानावर्णत्वमेव वा।**
**मोहोऽथ वर्चसो भेदो दष्टे स्यात् कृकलासकैः॥ ४६ ॥**

भा० टी०—कृकलास ( गिर्गिट ) का काटा स्थान काला या स्याह अथवा अनेक वर्ण का हो जाता है। बेहोशी रहती है। पतले दस्त होते हैं॥ ४६ ॥

( च० चि० अ० २५ )

म०-कार्श्यमित्यादि । वर्चसो भेदोऽतिसारः ॥ ४६ ॥

## अथ वृश्चिकविषस्य लक्षणानि ।

वृश्चिकविषलिङ्गमाह—

दहत्यग्निरिवादौ च भिनत्तीवोर्ध्वमाशु च ।
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति ॥ ४७ ॥
दष्टोऽसाध्यश्च हृद्-घ्राण-रसनोपहतो नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून् ॥ ४८ ॥
( च० चि० अ० २५ )

म०-दहत्यग्निरित्यादि । वृश्चिकः स्वनामख्यातः, स च आराविषः । दष्टोऽसाध्यश्च हृद्घ्राणरसनोपहतो नर इति यदा हृदय–नासा–जिह्वोपघातो भवति तदा तद्दष्टो न साध्यः । मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसूनित्यादिनाऽयमपरोऽसाध्यप्रकारः । "दष्टोऽसाध्यैस्तु" इति पाठपक्षेऽसाध्यः सद्यःप्राणहरैर्वृश्चिकैर्दष्टो यथोक्तलिङ्गो भवति । चरकेऽप्ययमेव पाठः ॥ ४७–४८ ॥

भा० टी०—विच्छी के डंक मारने पर आग से जलने की तरह जलन होती है। दंश स्थान फटा पड़ता है। उसका जहर पहले ऊपर की तरफ बड़े वेग से चढ़ता है, बाद दंशस्थानमात्र में पीड़ा रहती है। असाध्य विच्छी के काटने पर यदि हृदय, नाक, जिह्वा शक्तिहीन हो जाँय तो रोगी नहीं बचता। अगर दंशस्थान से मांस गल २ कर गिरते हैं तो भी रोगी नहीं बचता ॥ ४७—४८ ॥

## अथ कणभदष्टस्य लक्षणानि ।

कणभदष्टलिङ्गमाह—

विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि च ।
लक्षणं कणभर्दष्टे दंशश्चैवावसीदति ॥ ४९ ॥

म०-विसर्प इत्यादि । कणभः कीटविशेषः ॥ ४९ ॥

भा० टी०—कणभ कीड़े के काटने पर विसर्प, सूजन, शूल, ज्वर, कय, ये रोग होते हैं और काटने की जगह गलने लगती है ॥ ४९ ॥

## अथोच्चिटिङ्गदष्टस्य लक्षणम् ।

उच्चिटिङ्गदष्टलिङ्गमाह—

हृष्टलोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्तिमान् ।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥ ५० ॥

म०—हृष्टरोमेत्यादि ॥ ५० ॥

भा० टी०—उच्चिटिङ्ग के काटने पर रोमाञ्च, लिङ्ग का जकड़ना, और अत्यन्त पीड़ा होती है और रोगी को ऐसा जान पड़ता है मानो शरीर में पानी लगा है ॥५०॥

## अथ सविषमण्डूकदष्टस्य लक्षणम् ।

सविषमण्डूकादिदष्टलिङ्गमाह—

एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृट् ।
छर्दिर्निद्रा च सविषैर्मण्डूकैर्दष्टलक्षणम् ॥ ५१ ॥
मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा ।
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥ ५२ ॥

म०-एकदंष्ट्रार्दित इत्यादि ।—स्वभावादेकया दंष्ट्रया कृतो दंशो भवति ॥ ५१–५२ ॥

भा० टी०—मेघा के काटने पर पीली सूजन, पीड़ा और प्यास, ये रोग होते हैं। विषैले मेघा के काटने पर छर्दि, और निद्रा आती है। विषैली मछलियों के काटने पर दाह, सूजन और पीड़ा होती है। सविष जोंक के काटने पर सूजन, खुजली, ज्वर और मूर्च्छा होती है ॥ ५१—५२ ॥

## अथ गृहगोधिकादष्टस्य लक्षणम् ।

गृहगोधिकादष्टलिङ्गमाह—

विदाहं श्वयथुं तोदं स्वेदं च गृहगोधिका ।

म०—विदाहमित्यादि । गृहगोधिका ज्येष्ठी; अन्ये तु भ्रामरकमाहुः । अत्र वक्ष्यमाणं कुर्यादिति संबन्धनीयम्, तेन विदाहादीनां कर्मत्वम् ॥—

भा० टी०—गृहगोधिका ( छिपकली-बिस्तुइया ) के काटने पर सूजन, कोंच, और पसीना बहुत निकलता है ।

### अथ शतपदीदष्टस्य लक्षणम् ।

शतपदीदष्टलक्षणमाह—

**दंशे स्वेदं रुजं दाहं कुर्यात् शतपदीविषम् ॥ ५३ ॥**

म०—दंशेत्यादि । कुर्यात् शतपदीविषमिति शतपदी=कारुण्डिका ॥५३॥

भा० टी०—शतपदी ( कानखजूरा, गोजर ) के काटने पर पसीना आता है। पीड़ा और जलन होती है ॥ ५३ ॥

### अथ मशकदष्टस्य लक्षणम् ।

मशकदष्टलिङ्गमाह—

**कण्डूमान् मशकैरीषत् शोथः स्यान्मन्दवेदनः ।**
**असाध्यकीटसदृशमसाध्यं मशकक्षतम् ॥५४॥**

कण्डूमानित्यादि । असाध्यकीटसदृशमिति असाध्यकीटैर्लूतादिभिः समलक्षणमिति असाध्यं मशकक्षतमिति पञ्चसु मशकेषु मध्ये पार्वतीयमशकक्षतमसाध्यम् । यदाह सुश्रुते,—"पार्वतीयैस्तु कीटैश्च प्राणघ्नैस्तुल्यलक्षणम्" ( सु. क. स्था. अ. ८ )-इति ॥ ४ ॥

भा० टी०—मच्छरके काटने पर दिदोरा पड़ जाता है और थोड़ी २ पीड़ा होती है, असाध्य-विषैले मच्छर के काटने पर असाध्य लूता आदि के काटने के समान लक्षण होता है ॥ ५४ ॥

### अथ सविषमक्षिकादष्टस्य लक्षणम् ।

माक्षिकादष्टलक्षणमाह—

**सद्यः प्रस्राविणी श्यावा दाह-मूर्च्छा-ज्वरान्विता ।**
**पिडका मक्षिकादंशे तासां तु स्थगिकाऽसुहृत् ॥ ५५ ॥**

म०—सद्यइत्यादि । तासां च स्थगिकाऽसुहृदिति तासां सुश्रुतोक्तषण्मक्षिकाणां मध्ये स्थगिका प्राणहरेत्यर्थः ॥ ५५ ॥

भा० टी०—मक्खी के काटने पर तुरन्त बहने वाली स्याह पिड़की हो जाती है, तथा जलन, ज्वर और मूर्च्छा होती है। इनमें स्थगिका नाम की मक्खी प्राणहर होती है ॥ ५५ ॥

अथ नख-दन्तयोः सामान्यविषलक्षणम् ।

चतुष्पद्द्विपददष्टलक्षणमाह—

चतुष्पद्भिर्द्विपद्भिश्च नख-दन्त-विषं च यत् ।
शूयते पच्यते वापि स्रवति ज्वरयत्यपि ॥ ५६ ॥

म०—चतुष्पद्भिरिति । चतुष्पादा=व्याघ्रादयः । द्विपादा=वनमानुष-वानरादयः ॥ ५६ ॥

भा० टी०—चौपाये-बाघ आदि और दोपाँव वाले मनुष्य वनमानुष वानर आदि के नख और दाँत लग जाने से शोथ होकर पकता और बहता है और ज्वर आ जाता है ॥ ५६ ॥

अथ व्याघ्रादिहिंस्रजन्तूनां विषलक्षणानि ।

अत्र केचित् विषाधिकारसामान्यात् श्वादीनामपि व्याघ्रादीनां भल्लूकानां विषलक्षणं वदन्ति । तदाह—

श्व-शृगाल-तरक्ष्वृक्ष-व्याघ्रादीनां यदाऽनिलः ।
श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः ॥ ५७ ॥
तदा प्रस्रस्त-लाङ्गूल-हनु-स्कन्धोऽतिलालवान् ।
अव्यक्तबधिरोन्धश्च सोऽन्योन्यमभिधावति ॥ ५८ ॥
प्रमूढोऽन्यतमस्त्वेषां खादन् विपरिधावति ।
तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु ॥ ५९ ॥
सुप्तता जायते दंशे कृष्णं चातिस्रवत्यसृक् ।
दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः ॥ ६० ॥

भा० टी०—कफ से दूषित वात जब कुत्ता, स्यार, तरक्षु ( भेड़िया ) भालू, बाघ, चीता, आदि जानवरों के संज्ञावह स्रोतों में स्थित होकर इनकी संज्ञा को नष्ट कर देता है, जिससे इन जानवरों का होश ठिकाने नहीं रहता और पोंछ, जबड़ा, कंधा अपने स्थान से ढीला होकर खसक जाता है। मुह से बहुत

लार बहती है। ठीक तरह से न तो सूझ पड़ता है और न सुन पड़ता है। आपस में एक दूसरे को काटने दौड़ते हैं। एकदम पागल हो जाते हैं। अगर ये पागल जानवर किसी को काट लेते हैं तो काटने की जगह काली हो जाती है और उससे बहुत खून बहता है, और विष लपेटे हथियार के मारने पर जो लक्षण होते हैं वे सब लक्षण प्रकट होते हैं ॥ ५७—६० ॥

अथालर्कादिदष्टस्य मरणलक्षणानि ।

इदानीं श्वादिदष्टस्य रिष्टमाह—

येन चापि भवेद् दष्टस्तस्य चेष्टां रुतं नरः ।
बहुशः प्रतिकुर्वाणः क्रियाहीनो विनश्यति ॥ ६१ ॥
दंष्ट्रिणा येन दष्टश्च तद्रूपं यस्तु पश्यति ।
अप्सु चादर्शबिम्बे वा तस्य तद् रिष्टमादिशेत् ॥ ६२ ॥
त्रस्यत्यकस्माद् योऽभीक्ष्णं दृष्ट्वा स्पृष्ट्वाऽपि वा जलम् ।
जलत्रासं तु तं विद्याद् रिष्टं तदपि कीर्तितम् ॥ ६३ ॥
अदष्टो वा जलत्रासी न कथंचन सिद्ध्यति ।
प्रसुप्तो वोत्थितो वापि स्वस्थस्त्रस्तो न सिद्ध्यति ॥६४॥

भा० टी०—जिस जानवर ने काटा हो उसी की आवाज और काम यदि आदमी करने लगता है, तो वह रोगी नहीं बचता। अथवा काटे हुए जानवर की सूरत शीशा और पानी में देखे तो भी वह आदमी नहीं बचता। जो मनुष्य अकस्मात्-जल से डरने का कोई कारण न रहने पर भी जल देख कर या सुन कर बार २ डरता है उसे जलत्रास कहते हैं। किसी जानवर ने काटा हो या न काटा हो किन्तु जलत्रास रोग हो गया हो तो रोगी नहीं बचता। सोते या जागते तन्दुरुस्ती की हालत में भी यदि जलत्रास हो तो वह अरिष्ट है ॥ ६१—६४ ॥

अथ निर्विषमनुष्यस्य लक्षणानि ।

विषातुरः कीदृशो निर्विषो भवतीति दर्शयितुमाह—

प्रशान्तदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्र-विट्कम् ।
प्रसन्न-वर्णेन्द्रिय-चित्त-चेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ६५ ॥

म०-प्रशान्तदोषमित्यादि। अत्रान्नाभिकाममित्यनेन प्रकृतिस्थाग्नितोक्ता, यदाह चरकः-"प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्यते। प्राप्नोति चास्य वैरस्यं न चान्नमभिनन्दति" इति। सममूत्रविट्कमिति अक्षीणानतिरिक्तमूत्रपुरीषम्। अन्ये 'सममूत्रजिह्वम्" इति पठन्ति, तदाऽयमर्थः,-सममविकृतं मूत्रं जिह्वा च यस्य स तथा एतेन विषजुष्टा जिह्वा न रसबोधिनी भवति, मूत्रमपि जिह्वायां विषप्रभावेण वैकृतं भवतीति प्रतिपादयति। जिह्वाग्रहणेनैव मूत्रग्रहणे सिद्धे, तस्य च रसग्रहण अनुगुणत्वप्रतिपादनार्थं पृथगुपादानम्। अनेन श्लोकेन "समदोषः समाग्निश्च (सु. सू. स्था. अ. १५)-इत्यादिश्लोकस्य सकल एवार्थ उपबद्धः॥६५॥

१ सूक्तिमुक्तावलीग्रन्थे गुरुणा यन्न गुम्फितम्।
मया समस्तमग्रान्थि तद्गिरा शुद्धियुक्तया।

२गुणनिधिगुरुबद्धे दाम्नि वाङ्मालतीनां परमपरिमलश्रीधाम्नि लब्धावलम्बम्।
स्फुरति वचनकुन्दं मन्दसौरभ्यलेशाद् वचनमपि मदीयं किंचिदेतत् कदाचित्॥२॥

भा० टी०—सब दोष शान्त हो जाँय सब रस आदि धातु भी साफ हो जाय, अन्न खाने की इच्छा हो, पाखाना पेशाव साफ हो, शरीर, चेहरा का रंग ठीक हो, आँख आदि इन्द्रियों में कोई विकार न हो, चित्त स्वस्थ हो तो समझना चाहिए कि अब इस मनुष्य पर विष का कुछ भी असर नहीं है॥ ६५॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-
भाषाटीकायां विषनिदानम्।



---

१--सूक्तिमुक्तावलीति-सूक्तिः मधुकोशरूपा एव मुक्तावली तद्युक्ते ग्रन्थे रोगविनिश्चयाख्ये गुरुणा श्री विजयरक्षितेन। गुम्फितं ग्रथितम्। तस्य गुरोर्गिरा पूर्वोपदिष्टवाक्येन।

२--गुणेति-गुणानां निधिर्निधानं यो गुरुस्तेन बद्धे। दाम्नि-माल्ये। वाच एव मालत्यस्तासाम्। परमोऽत्युत्कृष्टो यःपरिमलः सुगन्धः स एव श्रीस्तस्या धाम स्थानं तस्मिन्। लब्धावलम्बं आश्रितंसत्। वचनमेव कुन्दं कुन्दपुष्पम्। कदाचित्-समये समये।

# अथ विषयानुक्रमणिका ।

ज्वरोऽतिसारो ग्रहणी चार्शोऽजीर्णं विसूचिका ।
अलसश्च विलम्बी च क्रिमिरुक्-पाण्डु-कामलाः ॥ १ ॥
हलीमकं रक्तपित्तं राजयक्ष्मा उरःक्षतम् ।
कासो हिक्का सह श्वासैः स्वरभेदस्त्वरोचकः ॥ २ ॥
छर्दिस्तृष्णा च मूर्च्छाद्या रोगाः पानात्ययादयः ।
दाहोन्मादावपस्मारः कथितोऽथानिलामयः ॥ ३ ॥
वातरक्तमुरुस्तम्भ आमवातोऽथ शूलरुक् ।
पक्तिजं शूलमानाह उदावर्तोऽथ गुल्मरुक् ॥ ४ ॥
हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाऽश्मरी ।
प्रमेहो मधुमेहश्च पिडकाश्च प्रमेहजाः ॥ ५ ॥
मेदस्तथोदरं शोथो वृद्धिश्च गलगण्डकः ।
गण्डमालाऽपची ग्रन्थिरर्बुदः श्लीपदं तथा ॥ ६ ॥
विद्रधिर्व्रणशोथश्च द्वौ व्रणौ भग्ननाडिके ।
भगन्दरोपदंशौ च शूकदोषस्त्वगामयः ॥ ७ ॥
शीतपित्तमुदर्दश्च कोठश्चैवाम्लपित्तकम् ।
विसर्पश्च सविस्फोटः सरोमान्त्यो मसूरिकाः ॥ ८ ॥
क्षुद्रा-ऽऽस्य-कर्ण-नासा-ऽक्षि-शिरः-स्त्री-बालकामयाः ।
विषं चेत्ययमुद्दिष्टो रुग्विनिश्चयसंग्रहः ॥ ९ ॥

भा० टी०—ज्वर-अतिसार-ग्रहणी-अर्शो रोग-अजीर्ण-विसूचिका-अलस-विलम्बिका-क्रिमिरोग-पाण्डुरोग-कामला-हलीमक-रक्त पित्त-राजयक्ष्मा-उरःक्षत-कास-हिक्का-श्वास-स्वरभेद-अरोचक-तृष्णा-छर्दि-मूर्च्छा-(संन्यास) पानात्यय-आदि-

दाह-उन्माद-अपस्मार-वातरोग-वातरक्त-ऊरुस्तम्भ-आमवात-शूलरोग-पक्तिशूल-आनाह-उदावर्त्त-गुल्मरोग-हृद्रोग-मूत्रकृच्छ्र-मूत्राघात-अश्मरी-प्रमेह-मधुमेह-प्रमेह पिडका-मेदोरोग-उदर रोग-शोथ-वृद्धिरोग-गलगण्ड-गण्डमाला-अपची-ग्रन्थि-अर्बुद-श्लीपद-विद्रधि-व्रणशोथ-दोषज और आगन्तुक व्रण-भग्न-नाडी व्रण-भगन्दर-उपदंश-शूक दोष-कुष्ठ रोग-शीत पित्त-उदर्द-कोठ-अम्लपित्त-विसर्प-विस्फोट-रोमान्ती-मसूरिका-क्षुद्ररोग-मुखरोग-कर्णरोग-नासारोग-नेत्ररोग-शिरोरोग-प्रदर-मूढगर्भ-स्तनरोग-योनिकन्द-बालरोग और विष रोग, इतने रोगों का संग्रह इस रोगविनिश्चय ग्रन्थ में किया गया है ॥ १—९ ॥

सुभाषितं यत्र यदस्ति किंचित् तत् सर्वमेकीकृतमत्र यत्नात् ।
विनिश्चये सर्वरुजां नराणां श्रीमाधवेनेन्दुकरात्मजेन ॥ १० ॥

भा० टी०—जिन २ ग्रन्थों में रोगों के निदान के विषय में जो कुछ अच्छी बातें मालूम हुईं उन सब का कोशिश के साथ श्रीइन्दुकर के पुत्र श्रीमाधव ने इस रोग विनिश्चय ग्रन्थ में संग्रह किया ॥ १० ॥

यत् कृतं सुकृतं[1] किंचित् कृत्वैवं रुग्विनिश्चयम् ।
मुञ्चन्तु जन्तवस्तेन नित्यमातङ्कसन्ततिम्[2] ॥ ११ ॥

भा० टी०—इस प्रकार इस ग्रन्थ के बनाने से जो कुछ पुण्य हुआ, उस पुण्य से सब जन्तुओं का रोग नित्य दूर हो ॥ ११ ॥

इति माधवकरविरचितं माधवनिदानं समाप्तम् ।



---

१ सुकृतं पुण्यम् ।

२ आतङ्कशङ्कितमिति पाठान्तरेतु—आतङ्कशङ्कितं रोगशङ्कामित्यर्थः ।

# माधवनिदान-परिशिष्टम् ।



## अथ शीतलानिदानम् ।

देव्या शीतलयाऽऽक्रान्ता मसूर्यः शीतला बहिः ।
ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः ॥ १ ॥
ताश्च सप्तविधाः ख्यातास्तासां भेदान् प्रचक्ष्महे ।
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ॥ २ ॥
सप्ताहान्निःसरत्येव सप्ताहात् पूर्णतां व्रजेत् ।
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ॥ ३ ॥
वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः ।
तां कश्चित् प्राह पक्केति सा तु पाकं न गच्छति ॥ ४ ॥
जलशूकवदङ्गानि सा विध्यति विशेषतः ।
सप्ताहाद् वा दशाहाद् वा शान्तिं याति विनौषधम् ॥ ५ ॥
ऊष्मणा तूष्मजारूपा सकण्डूः स्पर्शनप्रिया ।
नाम्ना पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम् ॥ ६ ॥
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी ।
नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ॥ ७ ॥
किञ्चिदूष्मानिमित्तेन जायते राजिकाकृतिः ।
एषा भवति बालानां सुखं शुष्यति च स्वयम् ॥ ८ ॥

कुष्ठिवज्ज्ञायते षष्ठी लोहितोन्नतमण्डला ।
ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद् दिनत्रयम् ॥ ५ ॥
स्फोटाना मेलनादेषा बहुस्फोटापि दृश्यते ।
एकस्फोटे च कृष्णा च बोद्धव्या चर्मजाभिधा ॥ १० ॥

## इति शीतलानिदानम् ।

भा० टी०—मसूरिका में यदि शीतला देवीका आवेश होताहै तो उसे शीतला ( माता ) कहते हैं, जिस प्रकार भौतिक विषम ज्वर होताहै उसी प्रकार इसमें भी ज्वर होताहै । यह शीतला सात प्रकार की होतीहै । जिसमें पहले ज्वर आवे और बाद बड़ी २ फुंसी होजाय उसे बड़ी शीतला कहते हैं । यह सातदिन में पूरी तरह से निकलती है और सात दिन में भरती है और तीसरे सप्ताह में सूखती और अपने आप ढल जाती है । वात कफसे कोदो की तरह फुंसिया पैदा होजाती हैं उसे कोद्रवा कहते हैं । कोई २ इसका पकना बतलाते हैं परन्तु यह पकती बिल्कुल नहीं । जलशूक की तरह सब शरीरको बेधती रहती है, सातदिनों मे या दश दिनोंमें विना दवाके यह खुद शान्त होजाती है, गरमी से अह्मोरी की तरह छोटी २ फुंसियां होजातीहैं, उनमें खुजली आतीहै । उस पर हाथ फेरने से अच्छा मालूम होता है । यह शीतला सात दिनमें खुद सूख जाती है इसे पाणिसहा कहते हैं । जो शीतला सरसो के समान होतीहै उसे सर्षपिका कहते हैं, इसमें तेल नहीं लगाना चाहिए । गरमी से राईके समान कुछ फुंसियां होजाती हैं और आपही अच्छीं होजाती हैं । यह शीतला अधिकतर बालकों को ही होती है । कुष्ठकी तरह लाल २ चकत्ता हो जाय, पहले ज्वर हो, पीड़ाहो । यह छठवी शीतला है । इसमें तीन दिन तक ज्वर रहता है । अनेक पिडकी होजांय और आपस में एक दूसरे से ऐसी मिलजांय कि एकही पिड़की मालूम हो और जगह काली हो । इसे चर्मजा कहते हैं ॥ १–१० ॥



# अथ फिरङ्गरोगनिदानम् ।

फिरङ्गसंज्ञके देशे बाहुल्येनैव यद् भवेत् ।
तस्मात् फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः ॥ १ ॥
गन्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम् ।
फिरङ्गिनोऽङ्गसंसर्गात् फिरङ्गिण्याः प्रसंगतः ॥ २ ॥
व्याधिरागन्तुजो ह्येष दोषाणामत्र संक्रमः ।
भवेत्, तल्लक्षयेत् तेषां लक्षणैर्भिषजां वरः ॥ ३ ॥
फिरङ्गस्त्रिविधो ज्ञेयो बाह्य आभ्यन्तरस्तथा ।
बहिरन्तर्भवश्चापि तेषां लिङ्गानि च ब्रुवे ॥ ४ ॥
तत्र बाह्यः फिरङ्गः स्याद् विस्फोटसदृशोऽल्परुक् ।
स्फुटितो व्रणवद् वैद्यैः सुखसाध्योऽप्यसौ मतः ॥ ५ ॥
सन्धिष्वाभ्यन्तरः स स्यादामवात इव व्यथाम् ।
शोफं च जनयेदेष कष्टसाध्या बुधैः स्मृतः ॥ ६ ॥
कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता ।
अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी ॥ ७ ॥
बहिर्भवो भवेत् साध्यो नवीनो निरुपद्रवः ।
आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः ॥ ८ ॥
बहिरन्तर्भवश्चापि क्षीणस्योपद्रवैर्युतः ।
व्याप्तो व्याधिरसाध्योऽयमित्याहुर्मुनयः पुरा ॥ ९ ॥

इति फिरङ्गनिदानं समाप्तम् ।

भा० टी०–फिरंग रोग ( गर्मी या आतशक ) फिरङ्ग देशमें अधिक होताहै, इस लिए बुद्धिमान् वैद्य इस रोगको भी फिरंग ही कहते हैं । यह गन्धरोग–गन्ध से होने

वाला रोग फिरंग देशके पुरुष के साथ बैठने उठने और उस देशकी स्त्री के प्रसंग करने से पैदा होता है, इस लिए यह दोषज नहीं किन्तु आगन्तुक है, पीछे इसमें दोषों का सम्बन्ध अवश्य होताहै, लक्षणों से उनदोषों को वैद्यों को जानना चाहिए। फिरंग तीन प्रकार का होताहै बाहरी, भीतरी और बाहर भीतर, दोनों तरफ, बाहर का फिरंग विस्फोट के समान होता है, थोड़ी १ पीडा होतीहै, और फूटने पर व्रण-घाव की तरह मालूम होताहै, इसे वैद्यलोग सुखसाध्य बतलाते हैं। भीतरी फिरंग सन्धियों में होता है। आमवात के समान पीडा करता है तथा जोड़ो में सूजन और पट्टोंमें गोहिया पैदा करता है। इसे वैद्योंने कष्टसाध्य बतलाया है। कृशता, नाताकती; नाक का बैठजाना, मन्दाग्नि, हड्डियोंका सूखना और-टेढ़ा होजाना, ये सब फिरंगके उपद्रव हैं। बाहरी, नया और उपद्रव रहित फिरंग रोग साध्य होताहै। भीतरी कष्ट साध्य होता है, और बाहर भीतर—दोनों तरफ का फिरंग, क्षीणताकी हालतमें, उपद्रवों से युक्त और सब शरीर भरमें फैला हुआ फिरंग असाध्य माना गया है ॥ १—६ ॥

# अथ क्लैब्यनिदानम् ।

बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् ।
क्लैब्यं संपद्यते तस्य शृणु सामान्यलक्षणम् ॥ १ ॥

भा० टी०-वीर्यरोग, इन्द्रिय रोग, बुढापा और वीर्यक्षय से मनुष्यों को क्लैब्य ( नामर्दी ) हो जाताहै । पहले उसका सामान्य ( मामूली ) लक्षण बतलाया जाता है ॥ १ ॥

संकल्पप्रवणो नित्यं प्रियां वश्यामपि स्त्रियम् ।
न याति लिङ्गशैथिल्यात् कदाचिद् याति वा यदि ॥ २ ॥
श्वासार्तः स्विन्नगात्रश्च मोघ-संकल्प-चेष्टितः ।
म्लानशिश्नश्च निर्बीजः स्यादेतत् क्लैब्यलक्षणम् ॥
सामान्यलक्षणं ह्येतद् विस्तरेण प्रवक्ष्यते ॥ ३ ॥

भा० टी०-पहले मैथुन करने की इच्छा हो बाद सुन्दर, प्रिय और वशीभूत स्त्री के मिलने पर लिङ्गकी शिथिलता के कारण मैथुन न करसके। यदि किसी प्रकार मैथुन कर भी सके तो दम फूले, पसीना होजाय। मैथुनेच्छा और काम वर्धक सब क्रियायें

व्यर्थ हो जांय। इन्द्रिय शिथिल रहे और शरीर में वीर्य न रहे। यह क्लैब्य का सामान्य लक्षण—है, विस्तार से अब आगे कहा जायगा ॥ २—३ ॥

शीत—रुक्षाल्प—संक्लिष्ट—विरुद्धाजीर्ण—भोजनात् ।
शोक-चिन्ता-भय-त्रासात् स्त्रीणां चात्यर्थसेवनात् ॥ ४ ॥
अभिचारादविस्रम्भाद् रसादीनां च संक्षयात् ।
वातादीनाञ्च वैषम्यात् तथैवानशनात् श्रमात् ॥ ५ ॥
नारीणामरसज्ञत्वात् पञ्चकर्मापचारतः ।
बीजोपघाताद् भवति पाण्डुवर्णः सुदुर्बलः ॥ ६ ॥
अल्पप्राणोऽल्पहर्षश्च प्रमदासु भवेन्नरः ।
हृत्-पाण्डुरोग-तमक-कामला-श्रम-पीडितः ॥ ७ ॥
छर्द्यतीसार-शूला-ऽऽर्त्तः कास-ज्वर-निपीडितः ।
बीजोपघातजं क्लैब्यं, ध्वजभङ्गकृतं शृणु ॥ ८ ॥

भा० टी०-ठंडी-रूखी—अल्प—रोगोत्पादक,—विरुद्ध,—अजीर्ण भोजन; शोक—चिन्ता-भय-घबड़ाहट, अधिक स्त्री सेवन, टोना टोटका-अविश्वास-रस आदि धातुओं का नष्ट होना, वात आदि दोषों का विषम होना, उपवास, परिश्रम, अज्ञात यौवना स्त्रीका होना, वमन विरेचन आदि ठीक न होना, इन सब कारणों से वीर्य कम और खराब हो जाताहै, जिससे मनुष्य पाण्डुवर्ण और दुर्बल हो जाताहै। ताकत बिल्कुल घट जाती है। स्त्री के पास रहने पर भी मैथुन की इच्छा नहीं होती, हृद्रोग, पाण्डुरोग,तमकश्वास,कामला,थकाहट,क्षय,अतिसार,शूल, कास और ज्वर,ये सब रोग उस मनुष्य को घेर लेते हैं। यह बीजोपघातज क्लैब्य का लक्षण है ध्वजभङ्ग जनित क्लैब्य आगे सुनो॥ ४—८ ॥

अत्यम्ल-लवण-क्षार-विरुद्धाजीर्ण-भोजनात् ।
अत्यम्बुपानाद् विषमात् पिष्टान्न-गुरु-भोजनात् ॥ ९ ॥
दधिक्षीरानूपमांस-सेवनाद् व्याधिकर्षणात् ।
कन्यानां चैव गमनादयोनिगमनादपि ॥ १० ॥

दीर्घरोगां चिरोत्सृष्टां तथैव च रजस्वलाम् ।
दुर्गन्धां दुष्टयोनिं च तथैव च परिस्नुताम् ॥ ११ ॥
ईदृशीं प्रमदां मोहाद् यो गच्छेत् कामहर्षितः ।
चतुष्पदाभिगमनात् शेफसश्चाभिघाततः ॥ १२ ॥
अधावनाद् वा मेढ्रस्य शस्त्र-दन्त-नख-क्षतात् ।
काष्ठप्रहारनिष्पेषात् शूकानाञ्चातिसेवनात् ।
रेतसश्च प्रतीघाताद् ध्वजभंगः प्रवर्त्तते ॥ १३ ॥
भवन्ति यानि रूपाणि तस्य वक्ष्याम्यतः परम् ।
श्वयथुर्वेदना मेढ्रे रागश्चैवोपलक्ष्यते ।
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाको भवत्यपि ॥ १४ ॥
मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रं भवन्त्यपि ।
पुलाकोदकसङ्काशः स्रावः श्यावारुणप्रभः ॥ १५ ॥
वलयीकुरुते चापि कठिनश्च परिग्रहः ।
ज्वरस्तृष्णा भ्रमो मूर्च्छा छर्दिश्चास्योपजायते ॥ १६ ॥
रक्तं कृष्णं स्रवच्चापि नीलमाविललोहितम् ।
अग्निनेव च दग्धस्य तीव्रो दाहः सवेदनः ॥ १७ ॥
वस्तौ वृषणयोर्वापि सीवन्यां वङ्क्षणेषु च ।
कदाचित् पिच्छिलो वापि पाण्डुस्रावश्च जायते ॥ १८ ॥
श्वयथुश्च भवेन्मन्दः स्तिमितोऽल्पपरिस्रवः ।
चिराच्च पाकं व्रजते शीघ्रं वाथ प्रमुच्यते ॥ १९ ॥
जायन्ते क्रिमयश्चापि क्लिद्यते पूतिगन्धि च ।
विशीर्यते मणिश्चास्य मेढ्रमुष्कावथापि च ॥ २० ॥

ध्वजभङ्गकृतं क्लैब्यमित्येतत् समुदाहृतम् ।
एवं पञ्चविधं केचिद् ध्वजभङ्गं वदन्त्यपि ॥ २१ ॥

भा० टी०–खटाई, नमक, क्षार–अधिक खाना, विरुद्ध भोजन; अजीर्ण भोजन, दही, दूध, आनूपमांस का अधिक सेवन,पानी अधिक पीना,विषम भोजन,मैंदा की चीजें,गुरु का अधिक खाना, रोगसे दुर्बलता होना। कन्यागमन, योनिके अतिरिक्त चीजों से मैथुनेच्छा पूरी करना, दीर्घरोगिणी, बहुत दिनोंसे मैथुन से छूटी हुई, रजस्वला, बदबू करने वाली, योनि रोग वाली,सोम रोग या प्रदर रोग वाली स्त्री के साथ काम-मोहित होकर मैथुन करना, मादा चौपायों के साथ मैथुन करना,लिङ्गपर चोट लगना, लिङ्गको न धोना, हथियार, दांत, नाखून से छिल जाना, काठ, पत्थर, लाठी वगैरह से चोट लगना,शूक–प्रधान लेप लगाना, वीर्य में दोष होना,इन सब कारणों से ध्वज-भङ्ग—लिङ्ग का शिथिल होना—होता है। इस ध्वजभंग से जो रोग होते हैं वे अब लिखे जाते हैं। इन्द्रिय में सूजन पीड़ा और लाली होती है। पिड़कियां निकल आती हैं, लिङ्ग पक जाता है। मांस बढ़ जाते हैं घाव हो–जाते हैं। मांसके धोवन के समान और लाल या स्याह स्राव होता है। लिङ्ग गोल हो जाता है। पकड़ाई नहीं देता, ज्वर, तृष्णा, चक्कर, मूर्च्छा कय, ये रोग हो जाते हैं। लाल, काला नीला, या मैला स्राव होता है पेड़ू, अण्डकोश, सीयन और पट्टा में आग से जलने के समान बड़ी तेज जलन और पीड़ा होती है। कभी २ लासादार पाण्डुवर्ण का स्राव होता है। थोड़ी,कड़ी सूजन हो जाती है और उससे थोड़ा २ स्राव होता है। सूजन देर में पकती है या जल्दी कम हो जाती है। सडाइन और बदबू होने से कीड़े पड़ जाते हैं। लिङ्ग का अग्रभाग ( सोपारी ) गल जाता है। या पूरा लिङ्ग अण्डकोश गल जाता है। ये सब लक्षण ध्वजभङ्ग क्लैब्य में होते हैं। इस प्रकार से कोई इन्हीं लक्षणों में पांच भाग कर के पांच प्रकार का ध्वजभङ्ग बतलाते हैं ॥ १—२१ ॥

क्लैब्यं जरासम्भवं हि प्रवक्ष्याम्यथ तत्र शृणु ।
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ॥ २२ ॥
अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम् ।
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ॥ २३ ॥
बलवीर्येन्द्रियाणां च क्रमेणैव परिक्षयात् ।
परिक्षयादायुषश्चाप्यनाहारात् श्रमात् क्लमात् ॥ २४ ॥

जरासम्भवजं क्लैब्यमित्येतैर्हेतुभिर्नृणाम् ।
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्बलः ॥ २५ ॥
विवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते ।
एतज्जरासंभवं हि चतुर्थं क्षयजं शृणु ॥ २६ ॥

भा०टी०-अब जरा-संभव क्लैब्य का लक्षण लिखा जाता है-अवस्था तीन प्रकार की होती है-छोटी, मध्यम और प्रवर (बुढ़ाई)। बुढ़ाई आने पर मनुष्यों का वीर्य प्रायः क्षीण हो जाता है और रस आदि धातु भी क्षीण हो जाते हैं, वृष्य पदार्थ सेवन न करने से क्रम से बल, वीर्य, इन्द्रिय और शक्ति, सब बुढाई में घट जाता है आयु भी कम हो जाती है, भूख ठीक न लगने से कुछ खाया नहीं जाता। थोड़े से भी काम में थकान मालूम होती है। बैठे २ थकाहट मालूम होती है। इन सब कारणों से बुढाई में स्वभावतः मर्दों को नामर्दी हो जाती है। धातु क्षीण हो जाते हैं। शरीर में दुर्बलता हो जाती हैं। शरीर का रंग खराब हो जाता है। दिल घबड़ाता है। मन उदास रहता है और बहुत शीघ्र अनेक रोग घेर लेते हैं। यह सब लक्षण जरा-सम्भव क्लैब्य का है, अब क्षयज क्लैब्य का लक्षण बतलाया जाता है ॥ २२-२६ ॥

अतिप्रचिन्तनाच्चैव शोकात् क्रोधाद् भयादपि ।
ईर्ष्योत्कण्ठादथोद्वेगात् सदा विशति यो नरः ॥ २७ ॥
कृशो वा सेवते रूक्षमन्नपानमथौषधम् ।
दुर्बलप्रकृतिश्चैव निराहारो भवेद् यदि ॥ २८ ॥
असात्म्यभोजनाच्चापि हृदये यो व्यवस्थितः ।
रसः प्रधानधातुर्हि क्षीयेताशु नरस्ततः ॥ २९ ॥
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः ।
शुक्रावसानास्तेभ्यो हि शुक्रं धाम परं मतम् ॥ ३० ॥
चेतसो वातिहर्षेण व्यवायं सेवते तु यः ।
शुक्रं तु क्षीयते तस्य ततः प्राप्नोति स क्षयम् ॥ ३१ ॥

घोरं व्याधिमवाप्नोति मरणं वा स गच्छति ।
शुक्रं तस्माद् विशेषेण रक्ष्यमारोग्यमिच्छता ॥
एतन्निदानलिङ्गाभ्यामुक्तं क्लैब्यं चतुर्विधम् ॥ ३२ ॥
केचित् क्लैब्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे ।
वदन्ति शेफसश्छेदाद् वृषणोत्पाटनेन वा ॥ ३३ ॥
मातापित्रोर्बीजदोषादशुभैश्चाकृतात्मनः ।
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः शिराः ॥
शोषयन्त्याशु तन्नाशाद् रेतश्चाप्युपहन्यते ॥ ३४ ॥
तत्र सम्पूर्णसर्वाङ्गः स भवत्यपुमान् पुमान् ।
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात् ॥ ३५ ॥

इति क्लैब्यनिदानं समाप्तम् ॥

भा० टी०—अधिक चिन्ता, शोक, क्रोध, भय, ईर्ष्या (डाह) उत्कण्ठा, उद्वेग, कृशता की हालत में रूखा औषध अन्न खाना, दुर्बल प्रकृति होने पर उपवास करना, असात्म्य भोजन करना, इन सब कारणों से हृदय में रहने वाला रस धातु क्षीण होने लगता है, धीरे २ खून, मेदस, मज्जा, हड्डी और कमजोर हो जाते हैं। वीर्य का कम होना महाहानिकारक है क्योंकि वीर्य ही शरीर में प्रधान वस्तु है। अथवा चित्त में मैथुन की बहुत प्रबल इच्छा होने पर यदि बुड्ढा आदमी मैथुन करता है तो थोड़ा बहुत जो कुछ शुक्र बचा रहता है वह भी नष्ट हो जाता है, जिससे भयङ्कर रोग पैदा हो जाते हैं, या मरण हो जाता है। इस लिए अपनी तन्दुरुस्ती कायम रखने के लिए वीर्य की रक्षा हर वक्त करनी चाहिए। इस प्रकार इन निदान और लक्षणों से चार प्रकार का क्लैब्य बतलाया गया। कोई २ आचार्य ध्वजभङ्ग और क्षय से उत्पन्न क्लैब्य को असाध्य बतलाते हैं। इन्द्रिय काटना, बधिया करना, या माता पिता के रजवीर्य में दोष होना, पूर्व जन्म का पाप इन सब कारणों से गर्भस्थ बालक की वीर्य वाहिनी शिरा को खराब कर देते हैं। शिरा के बिगड़ जाने से वीर्य भी खराब हो जाता है, बाद जन्म लेने पर आदमी देखने में हाथ पैर शरीर से बिलकुल तन्दुरुस्त और हृष्ट पुष्ट देख पड़ता है, परन्तु भीतर से वह एक दम नामर्द रहता है। यह क्लैब्य रोग सन्निपात से होता है और असाध्य है॥२७—३५॥

# अथ सोम[1]रोगनिदानम् ।

स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि ।
अतिसारकयोगाद् वा गरयोगात् तथैव च ॥ १ ॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ।
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥ २ ॥
प्रसन्ना विमलाः शीता निर्गन्धा नीरुजः सिताः ।
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ॥ ३ ॥
वेगं धारयितुं तासां न विन्दति सुखं क्वचित् ।
शिरःशिथिलता तस्या मुखं तालु च शुष्यति ॥ ४ ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग् रूक्षा चातिमात्रतः ।
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते क्वचित् ॥ ५ ॥
सन्धारणात्शरीरस्य ता आपः सोमसंज्ञिताः ।
ततः सोमक्षयात् स्त्रीणां सोमरोग इति स्मृतः ॥ ६ ॥

इति सोमरोगनिदानं समाप्तम् ।

भा० टी०—अधिक मैथुन, शोक, परिश्रम, अतिसार रोग, गर ( संयोगज विष ) का सेवन, खाने पीने की गड़बड़ी, इन कारणों से स्त्रियों के सब शरीर का जल अर्थात् जलीय धातु-रस-रक्त-मूत्र-मेद-मज्जा आदि बिगड़ कर मूत्र-मार्ग से गिरते हैं । वह जल-निर्मल पतला, ठंडा, निर्गन्ध विना पीड़ा के इतना अधिक गिरता है कि स्त्री कमजोर हो जाती है जरा देर भी उसका वेग नहीं रोक सकती । कहीं भी उसे सुख नहीं मिलता शिर खाली पड़ जाता है, मुह और तालु सूखने लगते हैं । मूर्च्छा, जँभाई, प्रलाप, त्वचा का रूखापन,ये सब रोग पैदा हो जाते हैं,बढ़िया से बढ़िया अन्नपान उसे नहीं भाता, और न उससे सन्तोष होता है, जलीय धातु शरीर की रक्षा करने वाली चीज है, इसलिए उसका नाम सोम है, उसी सोम के बाहर अधिक निकलने से यह सोमरोग कहलाता है ॥ १-६ ॥

---

[1] चरके त्रिदोषजप्रदरेऽस्यान्तर्गणना ।

# अथ स्नायुकनिदानम् ।

शाखासु कुपितो दोषः शाथं कृत्वा विसर्पवत् ।
भिनत्ति तत्क्षते तत्र सोष्म स्नायुं विशोष्य च ॥ १ ॥
कुर्यात् तन्तुनिभं जीवं वृत्त श्वेतद्युतिं बहिः ।
शनैः शनैः क्षताद् याति छेदात् कोपमुपैति च ॥ २ ॥
तत्पातात् शोथशान्तिः स्यात् पुनः स्थानान्तरे भवेत् ।
स स्नायुकेति विख्यातः क्रियोक्ताऽत्र विसर्पवत् ॥ ३ ॥
बाह्वोर्यदि प्रमादेन त्रुट्यते जङ्घयोरपि ॥
संकोचं खञ्जतां चैव च्छिन्नतन्तुः करोत्यसौ ॥ ४ ॥

वातेन श्यावरूक्षः सरुगथ दहनान्नीलपीतः सदाहो-
ऽथ श्वेतःश्लेष्मणा स्यातपृथुगरिमयुतोऽथ द्विदोषो द्विलिङ्गी ।
रक्तेनारक्तकान्तिः समधिकदहनोऽथाखिलैः सर्वलिङ्गो
रोगोऽसावष्टधेत्थं मुनिभिरभिहितः स्नायुकस्तन्तुकीटः ॥५॥

इति स्नायुकनिदानं समाप्तम् ।

भा० टी०–कुपित दोषों से हाथ पैरों में विसर्प के समान सूजन हो जाती है। वह सूजन फूट जाती है और वहां की स्नायु ( नस ) सूख जाती है, फिर बाहर की तरफ उसमें से सूतके सरीखे गोल २ सफेद रंगके लंबे कीड़े निकलते हैं,वे कीड़े धीरे२ बाहर निकलते हैं, यदि वह किसी प्रकार बीच से टूट जाता है तो रोग अधिक बढ़ जाता है। कीड़े के बिल्कुल गिर जाने से एक जगह की सूजन शान्त हो जाती है और फिर दूसरी जगह हो जाती है, इस रोगका नाम स्नायुक है। हिन्दी में इसे "नहरुआ" कहते हैं। इसकी चिकित्सा विसर्प की तरह करनी चाहिए,यदि बाहु या जङ्घा(पेंडुरी), में कहीं भी यह हो और असावधानता से किसी प्रकार टूट जाय तो हाथ लूला और पैर लंगड़ा हो जाता है। वाताधिक्य से यह शोथ स्याह, रूखा, पीड़ा करने वाला, पित्त से नीला या पीला,जलन पैदा करने वाला,कफ से सफेद,चिपटा और भारी होता है। दो दोषों से दो दोषों का लक्षण होता है। रक्ताधिक्य से लाल होता है और जलन बहुत रहती है। त्रिदोष अधिक होने से तीनों दोषों के लक्षण होते हैं। इस प्रकार यह रोग ८ प्रकार का होता है॥ १-५ ॥

॥ श्रीः ॥

# अन्यत् परिशिष्टम्



श्रीगणनाथसेनकविराजमहोदयकृतसिद्धान्तनिदानग्रन्थात् कतिपये आधुनिका आन्त्रिकादि ज्वरा उद्ध्रियन्ते—

## आन्त्रिक ज्वरः—Typhaid fewer ( टाइ फायड फीवर )

निदानम्—

अध्वोपवासक्लिष्टानां दुर्गन्धाभ्यर्णवासिनाम्
प्रायो मलादिसंसृष्टभक्ष्यपानोपयोगतः
सर्वेष्वृतुषु भूम्ना तु ग्रीष्मे शरदि वार्षिके
आन्त्रिकाख्यो ज्वरः कृच्छ्रो दृश्यते घोरलक्षणः
तस्य जीवाणवः केचिन्मलमूत्रादिसम्भवाः
विशिष्टं तु निदानं स्युः—

भा० टी०-अधिक रास्ता चलने से थकना, उपवास से दुर्बलता होना, बदबू के पास रहना, मलादि युक्त खाने पीने की चीजों का सेवन, इन कारणों से आन्त्रिक ज्वर उत्पन्न होता है। यों तो यह ज्वर सभी ऋतुओं में पैदा होता है, परन्तु गर्मी के दिनों में, शरद् ऋतु में और वर्षा ऋतु में विशेष कर। इस ज्वर में सन्निपातके लक्षण बहुत तेजी से होते हैं और इसी लिए यह-कृच्छ्र साध्य होता है,इस ज्वर के पैदा करने वाले खास कीड़े होते हैं। ये कीड़े इस ज्वर के रोगीके मलमूत्रमें विशेष पाये जाते हैं, जोकि रोगी के मलमूत्र करने पर उससे हवा में और हवा के द्वारा जल में व्याप्त हो जाते हैं या टाइफायड ज्वर के रोगी के मलमूत्र में यदि मक्खियां बैठ जाती हैं तो उन मक्खियों के पैर में ये कीड़े लपट जाते हैं और फिर वे मक्खियां जहां २ खाने पीने की चीजों पर बैठती हैं उन चीजों में मक्खियों के पैर से उतर कर फैल जाते हैं और उन चीजों को जो आदमी खाता पीता है उसे यह ज्वर हो जाता है।

सम्प्राप्तिः—

अथान्त्राश्रयिणश्चते,
रसं रक्तं च दोषांश्च कोपयन्त्यचिरादपि ।
क्षिण्वन्ति चान्तिमं भागं
क्षुद्रान्त्राणां शनैः शनैः ।
तेताऽन्त्रक्षतसंवृद्धौ क्वचिद्रक्तस्य निःस्रवः
भिन्नान्त्रताऽथवाऽसाध्येत्येष वैकृतनिश्चयः

भा० टी०—बाद ये कीड़े पेट में पहुंच कर विशेषतः आंतो में स्थित होकर रस, रक्त और वातादि दोषों को बहुत जल्दी खराब कर डालते हैं और छोटी आँत के आखिरी और बड़ी आंतके पहले हिस्से को इस तरह खा डालते हैं जैसे घुन काठको। यह बात प्रायः ज्वर आने के दूसरे सप्ताह के बाद होती है । जबकि कोड़े बहुत ज्यादा आंत को खाने लगते हैं, याने कीड़ों के द्वारा जबकि आंत में बहुत ज्यादा जख़्म हो जाता है, तो कभी २ उन जखमों से खून बहने लगता है जो कि कभी २ पाखाने के रास्ते से बाहर निकलता है और कभी अन्दर हो रह जाता है । यह रोग प्रायःअसाध्य होता है ।

पूर्वरूपम्—

शिरोरुगरुचिः सादो विड्विबन्धोऽरतिस्तमः ।
स्फुटास्फुटं पूर्वलिङ्गं प्रायः स्यादान्त्रिके ज्वरे ॥

भा० टी०—शिर में पीड़ा, अरुचि, शरीर की शिथिलता, कब्ज, अरति, आँख के सामने अँधेरा होना,ये सब लक्षण आन्त्रिक ज्वर के पूर्वरूप में होते हैं । किसी रोगी में ये लक्षण साफ जाहिर होते हैं, किसीमें नहीं ।

तदेव सज्वरं रूपमष्टाहेन स्फुटीभवेत् ।
ज्वरश्च वर्द्धते नित्यं क्रमारोहेण लक्षितः ॥
प्रायशो दृश्यते किञ्चित् प्लीहश्चाप्यभिवर्धनम् ।
क्वचिच्च सम्भवलयौ गात्रेष्वारक्तलक्ष्मणाम् ॥
पञ्चाहाद परतः प्रायः क्वचिन्नैव चिरेण वा ।

चणमुद्गादियूषाभं साध्मानमतिसार्यते ॥
अथ द्वितीये सप्ताहे प्रवृद्धस्तिष्ठति ज्वरः ।
तदा स्युररतिस्तन्द्रा मुखशोषः प्रमीलकः ॥
कासः प्रलापो दौर्बल्यमाध्मानञ्च विशेषतः ।
जिह्वा च रक्तपर्यन्ता कर्कशा स्फुटितोपमा ॥
सन्तापोऽभ्यधिकश्चापि धमनी नातिचञ्चला ।
सान्निपातिकलिङ्गानामन्येषाञ्चापि सम्भवः ॥
अथास्य दोषपाकेन नैरुज्ये सम्भविष्यति ।
प्रायस्तृतीये सप्ताहे क्वचित्तुर्येऽथवा पुनः ॥
ज्वरः सोपद्रवगणः क्रमेणैवावरोहति ।
वैषम्यं वेति, मुञ्चेत्तु स द्वाविंशतिवासरैः ॥
द्वाचत्वारिंशता घस्रैः क्वचिद्वा मुञ्चति ज्वरः ।
क्रमारोहावरोहाभ्यां पुनर्दर्शितलक्षणः ॥
दशाहात् परतो वापि दारुणो रक्तनिःस्रवः ।
सोऽतिकृच्छ्रो भवेज्जातु ततोप्यारोग्यसम्भवः ॥
सन्निपातज्वरान्तोक्तं बाधिर्यादि च वैकृतम् ।
कस्यापि जायते तच्च प्रायः शाम्यत्युपक्रमात् ॥

भा० टी०—बाद यही पूर्वरूप आठ दिनों में ज्वर के रूप में प्रकट हो जाता है और क्रम से धीरे २ ज्वर रोज २ बढ़ता रहता है। किसी २ रोगी की प्लीहा भी बढ़ जाती है और किसीकी नहीं भी बढ़ती। शरीर में लाल चकत्ते भी दीख पड़ते हैं। पांच दिनों के बाद किसी २ को चना और मूंग के यूष के समान पीले २ दस्त भी आने लगते हैं और आध्मान भी होता है। किसी के दस्त नहीं भी होते। बाद दूसरे सप्ताह में ज्वर बढ़कर स्थिर हो जाता है। उस समय तन्द्रा, मुह सूखना, प्रमीलक ( बेसुधी या आंख-

पर झांप रहना ) कास, प्रलाप, दौर्बल्य, ये सब उपद्रव विशेषरूप से प्रकट होते हैं। जीभ बीच में मैली, किनारों पर लाल, कर्कश और फटीसो मालूम होती है। ज्वर से शरीर बहुत गर्म रहता है। और नाडी बहुत चञ्चल (तेज) नहीं चलती। सन्निपातज ज्वर के अन्य लक्षण भी प्रकट हो जाते हैं। बाद यदि भाग्यवश रोगी बचने वाला होता है तो तीसरे या चौथे सप्ताह दोषों का पाक होने लगता है और ज्वर धीरे २ उपद्रवों के साथ उतरने लगता है। यदि धातु पाक होता है तो ज्वर क्रमशः या विषमता से बढ़ता है और सम्पूर्ण लक्षण प्रकट हो जाते हैं, फिर रोगी की मृत्यु हो जाती है। बाईस या अट्ठाइस अथवा बयालीस दिन के बाद ज्वर एक दम उतर जाता है। बयालीस दिनों में उतरने वाला ज्वर २८ दिनों के बाद फिर क्रम से तेज होने लगता है और दसवें दिन से ४२ दिनों तक किसी २ रोगी के क्षत अन्त्र से खून गिरता है जिससे नाड़ी का स्पन्दन बंद होने लगता है और मृत्यु हो जाती है। यह ज्वर अत्यन्त कृच्छ्रसाध्य होता है। यदि भली भांति सावधानता से चिकित्सा होती है तो रोगी अच्छे भी हो जाते हैं। अच्छे होने पर बाधिर्य, मूकता आदि विकार जोकि सन्निपात ज्वर के अन्त में होते हैं, वे इसमें भी होते हैं, किन्तु चिकित्सा से ये शान्त हो जाते हैं।

### श्वसनकज्वरः Pnevmania न्युमोनिया

लाक्षारसाभं यः ष्ठीवेद् रक्तं श्वासज्वरार्दितः ।
स्त्यानफुफ्फुसदेहस्य तस्य श्वसनको ज्वरः ॥

भा० टी०—जिसे सांस फूले, ज्वर तेज चढ़ा हो। लाही के रस या काढ़ा के रंगका काला या लाल खून मुह से निकले, फेफडा गीला हो कर चिपट जाय तो श्वसनक ज्वर ( निउमोनिया) समझना चाहिए। इस ज्वर में श्वासयन्त्र ( फेफड़ा ) खराब हो जाता है, इसलिए इसे श्वसनक ज्वर कहते हैं।

निदानम्—

समाच्छादनहीनानां दुर्बलानां विशेषतः ।
दीनानां दूनचित्तानां शीतवर्षादिबाधनात् ॥
अभिघातात् क्वचित् पूतिगन्धयोगेन कुत्रचित् ।
क्वचिद्वा व्याधिनानेन पीडितस्यातिसङ्क्रमात् ॥

सर्वष्वृतुषु भूम्ना तु वर्षासु शिशिरे मधौ ।
ज्वरः प्रादुर्भवत्येष जीवाणुविषसम्भवः ॥

भा०टी०-जो नंगे वदन रहा करते हैं और विशेष कर दुर्बल और दीन प्राणियों के, तथा शोक इत्यादि कारणों से अप्रसन्न मनवालों को ठंडक और वर्षा आदि से पीड़ित होने से,किसी जगह चोट लगने से तथा खराव गन्ध के लग जाने से और इस व्याधि से पीड़ित रोगी के पास वहुत रहने से सब ऋतुओं में और अधिकतर वर्षा, शिशिर और चैत्र के दिनों में छोटे २ विषैले जीवों (कीडों) के संसर्ग से यह ज्वर उत्पन्न होता है।

सम्प्राप्तिः—

संहत्यासृङ्‌ मूलतः फुस्फुसस्या-
ऽसव्ये पार्श्वे सव्यतो वा द्वयोर्वा ।
जिघांसन्ति श्वासयन्त्रं विषोत्था
दोषास्तस्माच्छ्वासकष्टं ज्वरश्च ॥

भा० टी०—श्वासमार्ग में निमोनिया के कीड़ों के प्रवेश कर जाने से वातादि दोष कुपित होकर दहिने या बायें अथवा दोनों फेफड़ों के मूलमें खून और लसीकाको जमा कर फुस्फुस को खराब कर देते हैं अर्थात् फेफड़ा अपना काम ठीक२ नहीं कर पाता, जिससे कि सांस लेने में बड़ी तकलीफ होती है, और ज्वर आ जाता है, इसमें प्रायः सन्निपात के सब लक्षण प्रकट हो जाते हैं।

पूर्वरूपम्—

पार्श्वार्तिः श्वासकासौ च क्वचित कम्पोऽवसन्नता ।
प्राग्रूपमाहुर्निपुणाः प्रायः श्वसनके ज्वरे ॥

भा० टी०—पसुली में पीड़ा, श्वास, कास, सुस्ती, किसी २ रोगी के कम्प भी होता है। जब फुस्फुस में व्रण हो जाता है तभी पसुली में पीड़ा होती है।

रूपम्—

प्राक् प्रायः शीतमत्यर्थं ज्वरस्तीव्रोऽरुचिस्तृषा ।
पार्श्वशूलमथो कासः श्वासवृद्धिः क्रमेण च ॥

कासतः शोणितं श्यामं मुहुः सान्द्रं प्रवर्तते ।
श्वसतो नासिकापार्श्वौ स्फूर्ज्जतश्च निरन्तरम् ॥
स्वेदो ललाटे गात्राणि भृशं स्विद्यन्ति चानिशम् ।
गौरसर्षपवत् स्वेदपिड़कानाञ्च दर्शनम ॥
दौर्बल्यं सदनं मोहः प्रलापः कण्ठकूजनम् ।
परुषा कर्कशा जिह्वा मलिना च भवेद् भृशम् ॥
धमनी युग्मतामेति कोमला स्थूलचञ्चला ।
यावन्न ज्वरमुक्तिः स्याद्, ज्वरमुक्तेरनन्तरम् ।
विशेषान्मन्दतामेति रोगेऽस्मिन्निति निश्चयः ॥
सप्तमे दिवसे प्रायश्चाष्टमे नवमेऽथवा ।
अकस्माज्ज्वरनिर्मुक्तिः स्वेदप्राचुर्यमेव च ॥
प्राणा वा तत्र मुच्यन्ते रोगी व तत्र मुच्येत ।
मुच्यमानस्तु नैरुज्यं शीघ्रमेव समश्नुते ॥

भा० टी०-अक्सर पहिले शीत मालूम होता है, और नहीं भी मालूम पड़ता। ज्वर बड़े जोरसे चढ़ता है पार्श्वशूल होता और खांसी आती है। धीरे२ जैसे२फुस्फुस मूल दोषों से आक्रान्त होता रहता है वैसे २ क्रम से श्वास भी बढ़ता है। खांसी आने के वख्त श्यामवर्ण का खून मुँह से वारवार निकलता है। और सांस लेने के वख्त दोनों नासिका पुट सांस के वेग से खूब फरकते हैं। ललाट और शरीर में हर वख्त खूब पसोना निकलता रहता है। सफेद सरसों के समान शरीर में फुन्सियां निकल आती हैं। दौर्वल्य, शरीर को शिथिलता, मोह, प्रलाप, गला में शब्द, ये सब लक्षण होते हैं। जिह्वा बहुत रूखी, खरखरी और मैली रहती है, नाड़ी दो दो वार धक्का देकर धीरे २ मोटी और चञ्चल होकर चलती है नाडी की यह गति तव तक रहती है जब तक कि सातवें,आठवें या नवें दिन तक ज्वर नहीं उतरता,ज्वर उतर जाने पर भी नाड़ी अपनी स्वभाविक गति से भो वहुत मन्द चलती है। ज्वर छूटने के वख्त पसीना बहुत ज्यादा निकलता है, जिससे कि कभी २ शरीर ठण्डा होजाता है और नाड़ी बन्द हो

जाती है। ऐसे समय यदि चिकित्सा ठीक तरह से हो और उसका असर भी ठीक तरह से हो तो रोगी बच जाता है नहीं तो नहीं इसमें पूर्ण आरोग्य पंद्रह दिन या १ महीने में होता है।

साध्यासाध्यलक्षणम्—

एकतः फुस्फुसे दुष्टे ज्वरेऽतीव्रे स्थिते बले ।
सम्यक् पादत्रये लब्धे मन्तव्या सुखसाध्यता ॥
स्वेदो भृशं ज्वरस्तीव्रो वृद्धः क्षीणोऽथवातुरः ।
पादत्रयस्य संपत्त्या स तु जीवेत् कदाचन ॥

भा० टी—अगर श्वसनक ज्वर में एक ही फेफड़ा खराब हो और ज्वर बहुत वेग से न चढ़ा हो, बल क्षीण न हुआ हो, तथा वैद्य, दवा और परिचारक अच्छे हों तो श्वसनक ज्वर सुखसाध्य समझना चाहिये। बहुत पसीना निकलता हो ज्वर वेग से चढ़ा हो, रोगी वृद्ध अथवा दुर्बल हो तो दुःसाध्य समझना चाहिये,तीनों पाद के ठीक होने से कभी २ रोगी बच जाता है।

अरिष्टलक्षणम्—

द्वावेव फुस्फुसौ दुष्टौ समग्रो यस्य वैकतः ।
नासाश्वासो भृशं स्वेदो दुर्लभं तस्य जीवितम् ॥
मन्दं किञ्चित् प्रलपति स्वेदस्नातः प्रमुह्यति ।
वेपते करपादञ्च प्राणास्तस्यापि दुर्लभाः ॥
अतीसारेण वाऽक्रान्तो दुर्वारेण भवेद् यदि ।
क्षीणः श्वसनकेनार्त्तो दक्षिणाभिमुखो हि सः ॥

भा० टी०—जिसका फेफड़ा दोनों या एक बिलकुल खराब हो जाय, दोनों नथनों से जोर २ से सांस चले और पसीना बहुत निकले तो वह रोगी नहीं बचता। थोड़ा २ प्रलाप हो पसीना बहुत निकले,हाथ पैर कांपे तो भी रोगी नहीं बचता। जिसको अती

सार होजाय जो कि किसी भी उपाय से बन्द न हो और रोगी बहुत क्षीण हो तो समझना चाहिये कि यह श्वसनक ज्वर (निमोनिया) का रोगी यमपुर जाने को तैयार ही है ।

### अथ श्लेष्मकज्वरः Influenga इनफ्लुयेन्जा

प्रादुःषन्तीह यत्प्रायः श्लेष्मजोपद्रवा भृशम् ।
ततो जनपदोद्ध्वंसो ज्वरोऽसा श्लेष्मकः स्मृतः ।

निदानम्—

वायुवाहितजीवाणुविषं युगपदञ्जसा ।
लोकेषु प्रसृतं प्रायः श्वासमार्गेण तं ज्वरम् ॥
विदधाति क्वचिद् वाऽथ भुक्तमार्गेण संक्रमः ।
जनाज्जने च संक्रान्तिः श्वसनादिनिमित्ततः ॥

सम्प्राप्तिः—

प्रायश्चास्य विकाराः स्युः श्वासयन्त्रे क्वचित्पुनः ।
अन्नमाग समग्रेऽपि क्वापि वा सर्वधातुषु ॥
कफवातोल्बणं ह्यत्र सन्निपातमुदीरयत् ।
विषं धातून् विकुरुते हन्ति तेन सहस्रशः ॥

रूपम्—

प्रतिश्यायः शिरःशूलं शीतकम्पौ च कुत्रचित् ।
अङ्गमर्दः कटीपृष्ठोरसां तीव्राश्च वेदनाः ॥
कासो ज्वरोऽवसादश्च कार्श्यञ्चाल्पैर्दिनैर्भृशम् ।
अत्यर्थबलहानिश्च लिङ्गानि श्लेष्मके ज्वरे ॥

सामान्यतो विशेषात्तु फुस्फुसाक्रमणे सति ।
सरक्तं ष्ठीवनं प्रायः प्रलापः श्वसनन्तथा ॥
अथान्नमार्गे त्वाक्रान्ते वम्यतीसारयोर्द्वयोः ।
एकस्य वा प्रवृत्तिः स्यात् शून्यं क्वापि च कामला ॥
अत्यर्थविषयोगेन सर्वधातुप्रदूषणात ।
अभिन्यासमं क्वापि रूपं तस्मान्न मुच्यते ॥
नैरुज्यं स्वल्पदोषस्य शीघ्रं यद्यपि जायते ।
बलहानिश्चिरायैव कृच्छ्रा तु बहुदोषता ॥

भा० टी० इस ज्वरमें श्लेष्म के ही उपद्रव प्रायः बहुत प्रकट होते हैं, इस लिये इसे श्लेष्मक ज्वर कहते हैं। यह प्रायः महामारी रूप से पैदा होता है।

### निदान—

भा०टी०-पापकी अधिकता से बाहरी वायु के खराब होने पर इस रोगके कीड़ोंकी पैदायश होती है। बाद श्वासमार्ग और मुखके द्वारा एक साथ ही बहुत से मनुष्यों में ये कीड़े प्रवेश कर जाते हैं, जिससे ज्वर पैदा हो जाता है। फिर इस रोगीके संसर्ग से दूसरे आदमी को भी ज्वर पैदा होने लगता है।

### सम्प्राप्ति—

भा० टी०—प्रायः दोनों फेफड़ों में व्रणशोथ हो जाताहै। आमाशय और पक्वाशय में व्रणशोथ की तरह पीड़ा होती है। इसका विष एक साथ ही कफ-वात प्रधान सन्निपात के लक्षणों को पैदा करता हुआ धातुओं को दूषित कर देता है,इस लिए इस ज्वर से हजारों आदमी मरा करते हैं।

### रूप—

भा० टी०—प्रतिश्याय, शिर में पीड़ा, कभी २ शीत और कम्प होना, अङ्गमर्द कमर, पीठ और छाती में तेज पीड़ा होना। कास, ज्वर। पांच छः दिन में ही कृशता

और निर्बलता हो जाती है, तो रोगी नहीं बचता यदि हृदय निर्बल हो जाता है, तो रोगी नहीं बचता, यह श्लेष्मक ज्वर का सामान्य लक्षण है ।

### विशेष रूप—

भा० टी०—अगर इस ज्वर में दोनों फेफड़ा खराब हो जाय तो मुंह से खून आता है। प्रलाप और श्वास होता है। यदि आमाशय और पक्वाशय बिगड़ जाता है तो कय और दस्त एक साथ होने लगते हैं,या दोनों में एकही होता है। कय और दस्तके निवृत्त हो जाने पर कामला रोग का लक्षण देखपड़ता है, जो कि अच्छी तरह चिकित्सा होने से अच्छा हो जाता हैं। यदि इस ज्वरका विष बड़े वेग से सारे शरीर में फैल जाता है तो शरीर के सब धातु खराब हो जाते हैं और अभिन्यास ज्वर के समान सब लक्षण होता है, ऐसी हालत में रोगी नहीं बचता। अल्प दोष होने पर रोगी बहुत जल्दी अच्छा हो जाता है, किन्तु कमजोरी बहुत दिनों तक बनी रहती है। अधिक दोष होने पर यह ज्वर कृच्छ्रसाध्य होता है।

### ग्रन्थिक ज्वरः Plague प्लेग

प्रायो वंक्षणकक्षादि ग्रन्थिशोफरुजाकरः ।
ग्रन्थिकाख्यो जनपदोद्ध्वंसी घोरतरो ज्वरः ॥
तुल्येऽपि हेतौ स क्वापि भृशं फुस्फुसदूषणात् ।
सद्यः शोणितनिष्ठेवश्वासकासैर्हरेदसून् ॥
अथवा सर्वथा सर्वधातून् द्रागभिदूषयन् ।
अभिन्याससमैर्लिङ्गैः सोऽग्रन्थिमपि मारयेत् ॥

निदानम्—

निदानमत्र सामान्यं संकुलावसथादिकम् ।
विशिष्टं तु विषं रक्तचरं जीवाणुसम्भवम् ॥
ते स्पर्शश्वसनादिभ्यः संक्रामन्ति नरान्नरम् ।
भूम्ना तद्रोगजुष्टेभ्यो मूषिकेभ्यश्च संक्रमः ॥

रूपम्—

आदावेव ज्वरस्तीव्रः क्वचिन्मन्दोऽथवा पुनः ।
भृशं स्रस्ताङ्गता तृष्णा प्रलापो मूर्च्छनं भ्रमः ॥
निद्रानाशोऽतिमोहो मत्तवत् कोऽपि ताम्यति ।
शेते विसंज्ञो वाप्यन्यो यथाऽभिन्यासपीड़ितः ॥
दग्धवत् कर्कशा जिह्वा धमनी शिथिला भृशम् ।
ग्रन्थौ शोफः क्वचित् पूर्वं क्वचिन्मध्ये क्वचिच्चिरात् ॥
तोदः स्पर्शासहत्वञ्च ग्रन्थौ पाकश्चिरादपि ।
द्वित्रैर्वा पञ्चषैर्वाऽपि दशभिर्वा दिनैः क्वचित् ॥
सद्यो वा म्रियते रोगी चिराद्वा कोऽपि सिध्यति ।

उपद्रवाः—

मूत्रावरोधः कासश्च तथातीसार उल्बणः ।
छर्दिश्च रक्तपित्तञ्च ग्रन्थिके स्युरुपद्रवाः ॥

साध्यलक्षणम्—

ग्रन्थीनां शीघ्रपाकेन बहूनां वा समुद्भवात् ।
जरन् वा बालको वाऽपि रोगी जीवेत् कथञ्चन ॥

अरिष्टलक्षणम्—

शीघ्रमिन्द्रियनाशेन सद्यः संज्ञाक्षयेण वा ।
अतीसारेण वाऽऽक्रान्तो ग्रन्थिरोगी न जीवति ॥
अकृष्णं सकफं रक्तं ष्ठीवेद् यः श्वासपीडितः ।
आक्रान्तफुस्फुसः सोऽयमसाध्यः सर्वथा स्मृतः ॥
अग्रन्थिर्ग्रन्थिकोक्तैश्च लिङ्गैरुक्तो यमातिथिः ।

भा० टी०-'पट्टा' कांख आदि स्थानों में घुमची और नीमकौड़ी की तरह ग्रन्थियाँ ( कौड़ियाँ ) स्वभावतः रहती हैं। ग्रन्थिक ज्वर आने पर इन ग्रन्थियों में सूजन और पीड़ा होती है, जिसे गिल्टी कहते हैं। यह ज्वर बहुत जोर से चढ़ता है और महामारी रूप से देशभर में फैल जाता है। किसी २ रोगी के गिल्टी नहीं उभड़ती, किन्तु फेफड़ा खराब हो जाता है,और मुंहसे खून निकलता है और श्वास कास उत्पन्न होकर एक या दो तीन दिनमें प्राण नाश कर देता है। किसी के गिल्टी नहीं भी उत्पन्न होती, किन्तु सब धातु दूषित हो जाते हैं और अभिन्यास ज्वरके समान लक्षण प्रकट हो कर रोगी को मार डालते हैं। इस प्रकार ग्रन्थिक ज्वर तीन प्रकार का होता है। ग्रन्थिक ज्वर का विष शरीर भर में एक साथ ही फैल कर यदि वंक्षणादि स्थानों की कौड़ियों में रुक जाता है तो गिल्टी उभड़ती है, नहीं तो नहीं।

निदान—

भा०टी०-घनी बस्ती और घने मकानोंमें रहना प्लेग का सामान्य निदान है। खास निदान तो इसके कीड़ों का खून आदि में प्रवेश करना है। प्लेग के कीड़े शरीर में अदृश्य रूप से—आक्रमण करते हैं। इन कीड़ों का आक्रमण प्रायः मूसों पर अधिक होता है, जिससे मूसे बहुत जल्दी मर जाते हैं। मूसों के शव में अनगिनती कीड़े चिपटे रहते हैं। नङ्गे पाँव चलने से या बिवाई के द्वारा, या मूसों के शव में बैठी हुई मक्खियां जब कपड़ा और भोजन पर बैठ जाती हैं तो इन मक्खियों के द्वारा कीड़े मनुष्य के शरीर में प्रवेश कर जाते हैं। और फिर मनुष्य इस रोग से आक्रान्त होते हैं। बाद इस रोगी के संसर्ग से दूसरों को भी यह रोग हो जाता है।

रूप—

किसीको तेज ज्वर आता है,किसीको मन्द,और किसी को कम्प-पूर्वक होता है। गिल्टी किसीके पहिले दिन उभड़ती है, किसीके मध्यकाल में, और किसीके आखीर में। शरीर बहुत सुस्त रहता है। तृष्णा, प्रलाप, मूर्च्छा, भ्रम, निद्रानाश, अरति, अज्ञान, पागल की तरह चिल्लाना या उठ कर भागना, बेहोश हो कर पड़ा रहना, जीभ काली और कर्कश, नाड़ी की गति शिथिल और विशेष चंचल, तोद, स्पर्शासहत्व, ग्रन्थि के पकने में देर लगना, दो तीन, पांच छः, या दस दिन में रोगी प्रायः मर जाता है। दस दिन के अन्दर अगर रोगी न मरे तो जीने की आशा रहती है। यदि गिल्टी पकती है तो रोगी बच जाता है।

उपद्रव—

मूत्रावरोध, कास, अतीसार, छर्दि, रक्तपित्त,ये सब लक्षण एक साथ ही पैदा हों तो रोगी नहीं बचता।

साध्यलक्षणम्—

भा० टी०—रोगी वृद्ध या बालक हो और ग्रन्थि जल्दी पकने लगे तथा बहुतसी ग्रन्थियां हो जाँय तो रोग कृच्छ्रसाध्य समझा जाता है।

अरिष्ट—

भा०टी०-इन्द्रियों की शक्ति नष्ट हो जाने पर या बेहोशी होने पर अथवा अतीसार होने पर ग्रन्थिरोगी नहीं जीता। लाल कफ और खून निकलने पर, श्वास होने पर फेफड़ाके खराब हो जाने पर रोग असाध्य समझना चाहिये। गिल्टीके बाहर न दिखाई देने पर भी अन्य लक्षणों के होने से रोगी नहीं बचता। ऐसा भी होता है कि बाहर देखने में गिल्टी में सूजन नहीं मालूम होती किन्तु अन्दर सूजन रहती ही है। प्लेग रोगी के मुर्दा को चीर कर यह बात देखी गयी है।

दण्डक ज्वरः Dengue डेंगु।

अस्थिसन्धिरुजस्तीव्रा दण्डाहतिकृता इव।
प्रायः क्षिप्रोदयलयौ वीसर्पः सर्वगात्रगः॥
ज्वरश्च कण्ठरुग्युक्तः पुनरावर्त्तते गतः।
सञ्चारिणा सशोथेन सन्धिशूलेन लक्षितः॥
प्रतिश्याकासवान् प्रायेणाष्टाहेन प्रमुच्यते।
चिरं सन्धिरुजाः सन्ति स ज्ञेयो दण्डकज्वरः॥
प्रायोऽसौ जानपदिको वातश्लेष्मप्रकोपणः।
बालानां जरताञ्चातिदारुणः परिलक्ष्यते॥

भा०टी०-दण्डक ज्वरमें दण्डाकी चोटकी तरह हड्डी और सन्धियों में बड़ी तेज पीड़ा होती है। तीसरे या चौथे दिन वीसर्प की तरह लाल रंग के दिदोरे शरीर में देख पड़ते हैं, किन्तु जल्दी ही वे गुप्त भी हो जाते हैं। ज्वर इसमें एक दो दिन तक

रहता है बाद उतर कर तीन चार दिनों के बाद फिर आ जाता है। कण्ठ में पीड़ा, सन्धियों में चल शोथ और शूल हो जाता है। प्रतिश्याय और कास भी उत्पन्न हो जाता है। आठ दिनों के बाद प्रायः ज्वर छूट जाता है। ज्वर छूटने पर भी एक स्थान से दूसरे स्थान में जाती हुई सन्धि पीड़ा बहुत दिन तक तकलीफ देती है। इस ज्वर में वात कफ का प्रकोप अधिक रहता है और यह जब किसी देश में प्रकटहोता है तो एक साथ बहुत से मनुष्य इससे आक्रान्त होते हैं। बालक और वृद्धों के लिये यह ज्वर बड़ा भयङ्कर होता है।

* श्रीः *

## टीकाकार संक्षिप्त परिचयः ।

पुण्ये वाराणसी क्षेत्रे "भदैनी" ग्रामवासिनः ।
गौडद्विजाग्र्यवैद्यश्रीपूर्णदत्तस्य शर्मणः ॥ १ ॥
हरिनारायणः सूनुः, प्रतापगढमण्डले ।
श्री वी. यन्. मेहता–संस्थापितविद्यालयस्य वै ॥ २ ॥
प्रधानाध्यापकोऽकार्षीट्टीकां रोगविनिश्चये ।
निदानदीपिकानाम्नीं तेन तुष्यतु शङ्करः ॥ ३ ॥
अश्ववस्वङ्कभूम्यब्दे वैक्रमे माधवे सिते ।
रुग्विनिश्चयसद्ग्रन्थटीका सम्पूर्णतामयात् ॥ ४ ॥



